# भारतीय दर्शनेषु
# माया स्वरूप विमर्श

डॉ० शशिबाला गौड़
एम० ए०, पी-एच० डी०

PRESENTED BY MINISTRY OF HUMAN RESOURCE
DEVELOPMENT (DEPT OF EDUCATION)
GOVT OF INDIA.




नाग प्रकाशक
११ ए/यू०ए० जवाहरनगर, दिल्ली-७

BHĀRATĪYA DARŚANESU

# MĀYĀ SWARŪPA VIMARṢA

DR. SHASHIBALA GAUR
M. A., Ph.D.

PRESENTED BY MINISTRY OF HUMAN RESOURCE
DEVELOPMENT (DEPT OF EDUCATION)
GOVT OF INDIA




NAG PUBLISHERS
11A/U.A. JAWAHAR NAGAR
DELHI-7

# विषयानुक्रमणिका

उपोद्घात :

# मायाया अथवा अविद्याया आश्रयः

अविद्याया आश्रयप्रसङ्गे नानाविधानि मतानि सन्ति प्रचलितानीति अहमपि मन्ये। यथा केचन वेदान्तिनो जीवएवाऽविद्याऽश्रय इति वदन्ति। तथा केचन शुद्धचित एवाऽऽश्रयतां प्रस्फोरयन्ति। अपरे च ते सगुणब्रह्मण एवाऽऽश्रयत्वं ब्रुवन्ति।

तत्रापि केचन वेदान्तिनो मायाऽविद्ययोर्भेदं प्रकुर्वाणाः खलु मायाया ईश्वरोपाधित्वं तथा विद्याया जीवोपाधित्वं प्रतिपादयन्ति।

केचन वेदान्तिनो जीवेश्वरयोर्मायाश्रयतां साधयितुं प्रयतन्ते।

भामतीकारः श्रीवाचस्पतिमिश्रो जीवोऽज्ञानाश्रय इति ब्रूते। अस्माकमप्ययमेवानुभवो लौकिकः-नाहं किमपि जानामि इत्याकारक इदमेव वाचस्पतिकथनं साधयति।

श्रुतिर्ब्रह्मणो विशुद्धिं ब्रूते, यदि ब्रह्माऽज्ञानस्याश्रयीभूतं भवेत्तदा कथमपि ब्रह्मणः शुद्धत्वं सर्वथाऽक्षुण्णं नैव स्थास्यति।

यथा नेत्रदोषकारणवशादेव मानवः श्वेतरूपावच्छिन्नं शंखं पीतरूपावच्छिन्नत्वेन पश्यति। तथैवाविद्यारूपकारणवशादेव ब्रह्मणि नानात्मकरूपजगतोऽध्यासो भवति। यथार्थतो ब्रह्म सर्वथा शुद्धमेव पुष्करपलाशवन्निर्लेपमस्तीत्येव मदीयोऽपि सिद्धान्तः। जीवास्तु खल्वज्ञानरूपोपाधिभेदभिन्नाः सन्तः सन्ति नानाविधाः। अत एव जीवोपाधिभूतानि सन्ति अज्ञानान्यपि नानाविधानीति तु सार्वजनीनोऽनुभवः।

अत्रेदं विचार्यते यत् जीवनिष्ठस्य जीवत्वस्य ज्ञानमज्ञानरूपकारणवशादेव जायतेऽतो जीवोऽविद्याया आश्रयो नैव भवितुमर्हति, यतो जीवोऽविद्यायां प्रतिबिम्बितं चैतन्यमेवास्ति ततोऽतिरिक्तं किमपि नास्त्येव। अतो जीवनिष्ठजीवत्वस्याऽज्ञानाश्रितत्वाद् भवत्यस्मिन् पक्षेऽन्योन्याश्रयो दोषः।

किन्तु नाऽयमाक्षेपो न्यायसंगतः, यतोऽविद्याया जीवस्य चोपर्युक्तमाश्रितत्वन्तयोः स्वभावतः सम्बन्धतो वा नहि कदापि सिद्ध्यति, यतो जीवाऽविद्ययोर्द्वयोरेवानादित्वात्।

अपि च यद्यपि अज्ञानाऽवभासनं चैतन्यद्वारा भवति, तथापि जीव-चैतन्यं स्वरूपतः स्वप्रकाशरूपकारणवशादेव स्वसम्वेद्यमस्तीत्यतस्तज्ज्ञानार्थमविद्याज्ञानं नावश्यकम्। एवं च तमोः स्वभावेऽथवा ज्ञातप्रसङ्गे नास्ति अन्योन्याश्रयो दोषः।

इदानीं पुनरस्माभिरिदं पृच्छ्यते यत् ते किं स्वास्तित्वरक्षार्थमेकमपराश्रितमेवावतिष्ठते? किमज्ञानं नास्ति चैतन्यावच्छेदम्? अर्थात् किं चैतन्यस्य तद्देशावच्छेदेनाऽज्ञानस्य स्थितिर्नहि भवति यद्देशावच्छेदेन तस्मिंश्चैतन्ये जीवभावः प्रतीयते।

एवं जीवभावस्य स्थितिश्चापि चैतन्यस्य तद्देशावच्छेदेनैव जायते यद्देशावच्छेदेन तत्राज्ञानं सन्तिष्ठते। तदा किं पुनर्जीवभावः (जीवत्वम्) चैतन्ये याऽज्ञानस्थितिस्तस्या अवच्छेदको भवति, अज्ञानं च चैतन्ये जीवभावस्यावच्छेदको नास्ति किमु? इत्यतोऽन्योन्याश्रयदोषः पुनरपि तदवस्थ एव।

परन्तु तथापि पुनरित्थम्भूतोऽन्योन्याश्रयो दोषो वस्तूनां सत्ताविषये न प्रसज्यते नापि स्वीक्रियते। सामान्यतो भवत्ययं लौकिको व्यवहारो यदेकं वस्तु वस्त्वन्तरमाश्रयति। यथा गृहस्य तत्सम्बन्धस्य चास्ति परस्पराश्रितत्वम् परस्पराश्रयाश्रयीभावः, इति नैकमन्तराऽपरस्य स्थितिः कदाचित् कुत्रचित् संभावयितुं शक्यतेऽतो नास्ति प्रकृतेऽयं दोषः।

यद्यपि अज्ञानमप्यस्ति एकाऽऽवश्यकी औपाधिकी च स्थितिस्तथापि सा स्थितिर्व्यावहारिकावस्थायामेव सगच्छते नान्यत्र जीवस्य पारमार्थिकावस्थायामपि, अतोऽन्योन्याश्रयो दोषो नास्त्येवेति भावः। एवं स्थितेऽयमाक्षेपोऽवश्यमेव भवितुमर्हति यद्यदि विभिन्नानामज्ञानाना स्थितिर्विभिन्नेषु जीवेषु पृथक् पृथक् परिलक्ष्यते, पार्थक्ये च खलु वैशिष्ट्यं स्वाभाविकमेव समागच्छति, तदाऽन्यत्रमवत् जगद्भ्रमोऽपि प्रत्येकं जीवे विशिष्ट एव भविष्यति। अस्यां स्थितौ सामान्यव्यावहारिकजगत उपपत्तिर्नैव सम्पत्स्यते।

अत्रेदं समाधीयते यद् यथा एका रज्जुमन्धकारे विलोक्य तस्यां रज्ज्वां नानापुरुषाणां नानासर्पाणां स्वरूपेषु भ्रान्तिर्भवति। तथैव प्रकृतेऽपि खल्वेकस्मिन्नेवाधारभूते ब्रह्मण्यपि नानाविधस्य प्रपंचभूतस्य प्रभूतस्य जगतोऽपि सुतरामारोपो भवितुं प्रभवति, भवति च सर्वत्र सर्वेषामेव व्यवहारकाले।

इत्थं चाऽनेकजीवानां तथा नानाजीवस्थितबहुविधाविद्यापरपर्यायभूताऽज्ञानसत्तायाश्च परमाधारभूतमस्ति केवलं ब्रह्मैवेति नास्ति कोऽपि प्रागुक्तदोषावसरः[२]।

१. अद्वैतसिद्धिः, निर्णयसागर प्रकाशन, बम्बई, पृ० ५८५
२. परिमल, निर्णयसागर, पृ० ३७१

विवरणकारमतानुसारमज्ञानस्याधारभूतं केवलं नित्यनिरतिशयानन्दरूपं परिच्छिन्नत्व, सावयवत्व, अनित्यत्वादिदोषविरहितं खलु विशुद्धं चिदेवास्ति। अन्तिमायां मोक्षावस्थायां जीवस्य जीवभावो[1] नावशिष्यतेऽपि तु सर्वथा समाप्तिं गच्छति तदानीं सत्यं ज्ञानमनन्तं ब्रह्म "नित्यं विज्ञानमानन्दं ब्रह्म" "अस्थूलमनण्वह्रस्वम्" इत्यादिश्रुतिविहितस्य निःसङ्गस्य निरंजनस्य निर्विशेषस्य तस्य परस्य ब्रह्मणः साधर्म्यं पूर्णत्वं च गच्छति। "अहमज्ञानवानस्मि" इत्याकारकानुभवबलेन नैतत् कदापि सिद्ध्यति यज्जीव एव चास्ति अज्ञानस्याधिष्ठानभूतः। यतोऽहङ्काराज्ञानद्वयमेव यदा विशुद्धे स्वप्रकाशचिदात्मके ब्रह्मणि अध्यारोपितं जायते तदानीमेव तद् द्वयमित्थं सम्बन्धित्वेन दृष्टिगोचरतां गच्छति यथा कश्चिन् मानवो रक्तवर्णमुपनेत्रं धारयित्वा यदा स्वीयं मुखं दर्पणे पश्यति तदा स स्वीयं मुखमपि रक्तवर्णमेवाऽवलोकयति तथैवात्रापि विशुद्धे चिदात्मके ब्रह्मणि अज्ञानं प्रतिबिम्बितं भवति।

यद्यपि अज्ञानं सर्वथा चैतन्यैकलक्षणं चित्स्वरूपं ब्रह्माश्रित्यैव सन्तिष्ठते एतस्मादेव च हेतोर्जीवब्रह्मणोर्भेदोऽप्यवभासते, अर्थात् बिम्बप्रतिबिम्बभूतयोर्जीवब्रह्मणोर्भेदोऽपि दृष्टिगोचरतां गच्छति। तथापि तदज्ञानं स्वदोषैः शुद्धं ब्रह्म नहि दूषयितुं प्रभवति।

यथा व्यापकीभूत आकाशः (महाकाशः) घट, पट, मठ-प्रभृतिभिरुपाधिभिर्घटाकाश, पटाकाश, मठाकाशरूपेण परिच्छिन्नो भूत्वाऽऽकाशपदाभिधेयो विशुद्धो महाकाशोऽपि सीमितत्वं गच्छति।

तथैव प्रकृतेऽपि ब्रह्म स्वीयस्वाश्रितमायारूपोपाधिना जीवेश्वररूपेण परिच्छिन्नं सदपि नहि तस्मिन् दूषितत्वमायाति, अपि तु भूषितत्वमेवावतिष्ठते। तथा चोक्तं श्रीमधुसूदनसरस्वतीमहोदयेन—

"उपाधिधर्माणां प्रतिबिम्बपक्षपातित्वनियमात्"[2]।

अत्र विषये सर्वज्ञात्ममुनि, प्रकाशानन्द प्रभृतीनां महाविदुषां मतमिदमस्ति यत् सर्वथा जीवेश्वरभेदशून्यं विशुद्धं चिदेव केवलमस्ति अज्ञानाधिष्ठानभूतम्।

श्री सर्वज्ञात्ममुनिः स्वयं ब्रूते यज्जीवेश्वरभेदावभासनप्रधानकारणीभूतं केवलमस्ति अज्ञानम्। अतोऽज्ञानस्य प्राथम्यं प्राधान्यं चावश्यकरूपेणाऽङ्गीकरणीयम्। सत्वेऽपि सत्वज्ञानस्य प्राथमिकतायाः प्रधानतायाश्च प्राथमिक तदज्ञानं स्वोत्तरवर्त्तिजी-

---

१. तत्वदीपन, चौखम्बा प्र० वाराणसी पृ० १७६

२. अद्वैतरत्नसरक्षणम्, निर्णयसागर, पृ० ४४

वेश्वरयोश्चिरस्यायित्वेन नैव स्थातुं शक्नोति । यदि चास्य सिद्धान्तस्य विरोधपक्षे इदमुच्यते भवता यद् अज्ञानस्य विषयीभूत. पदार्थोऽज्ञानस्याऽऽश्रयो नहि कदापि भवितुं प्रभवति, यत आश्रयो विषयश्चास्ति भिन्नधारणाद्वयम् इति ।

सदा भावत्क मथनमिदं नहि समीचीनं तर्कसंगत च प्रतिभाति । यतः यथा तमस्तस्मिन्नेव पदार्थे दृष्टिगोचरीभूतं भवति य पदार्थन्तम आवृणोति । तथैवाज्ञानस्यापि स्थितिरस्ति । अज्ञान नास्ति तादृशः क्रियाशीलसिद्धान्तो यस्मिन् सिद्धान्ते पौन. पुन्येन वारम्वार वा स्थानपरिवर्तनस्याऽऽवश्यकता भवेत्, अतोऽस्य पृथगाश्रयस्य विषयस्य चाऽऽवश्यकतत्व[2] नास्ति येन तादृशसिद्धान्तभगप्रसङ्गो भवेत् ।

केषाचिद् विदुषा कथनानुसार सगुण ब्रह्मैवास्ति अज्ञानस्याधिष्ठानभूत वस्तु । अयमेव सगुणब्रह्मभूत ईश्वर मायापरपर्यायभूताऽज्ञानवशाद् जडभूतायै प्रभूतायै मायायै चैतन्य प्रदाय चुम्बकवत् सकलमेव चराचरात्मकं प्रपंचभूत विश्वं सृजते । उक्तं च—

"अस्मान्मायी सृजते विश्वमेतत्"[3] ।

अपि च—

"प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्"[4] ॥

अत एवेदमप्युक्तम्—

"मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्"[5] ।

श्रीमण्डनमिश्रमतानुसारमविद्यं व मायाशब्देन आहोस्वित् मिथ्याभासशब्देनोच्यते । इय च मायापरपर्यायभूता अथवा मिथ्याभासशब्देन प्रोच्यमाना विद्या नास्ति ब्रह्मणः स्वभावभूता, नापि चास्ति ब्रह्मणो भिन्न किमप्यर्थान्तरम् । इय चाऽविद्या न सती, नाप्यत्यन्तासती । यदि चेय कस्यचिद्वस्तुन स्वभावभूता भवेत्तदा इयमपि सती स्यात् प्रतीत्वे चास्या अविद्यात्वमेव भज्येत व्याहन्येत वेत्यपि वक्तु शक्यते ।

यदि चेयमविद्या सती स्यात्तदा गगनारविन्दवत्, शशशृङ्गवच्चाऽत्यन्तासती स्यात्तया सति चेयमविद्या नहि त्रिष्वपि कालेषु व्यवहारसम्पादनयोग्यतावती स्यादतो नेयमविद्या सती, नाप्यसती, नाप्युभयात्मिका परस्परविरोधात् । अतः सदसद्भ्या विलक्षणैव वाच्या, अत एव चेयमविद्याऽनिर्वचनीया मिथ्याभूता सनातनी चोच्यते ।

---

१. संक्षेपशारीरकम् १।३१६
२. तत्त्वशुद्धि पृ० २५०
३. श्वेताश्वतरोप० ४।९
४. गीता अ० ९, श्लो० ८
५. श्वेताश्वतरोप० ४।१०

## मायाया विषयः

मायाया आश्रयवद् वेदान्तिदार्शनिकैरज्ञानस्य विषयविशेषे विप्रतिपत्तयो नैव दर्शिताः। अपि तु ते सर्वे एवास्मिन् प्रसङ्गे ऐकमत्येन चैतन्यस्य ब्रह्मणोऽज्ञानाविषयतां स्वीकुर्वन्ति कल्पयन्ति च। मायापरपर्यायभूतस्याऽज्ञानस्य आवरणशक्तिरूपकारणादेव चिदात्मकं ब्रह्म स्वभावतः स्वयंप्रकाशमानोऽपि नहि प्राकाश्यं गच्छति।

यदा च स्वप्रकाशचिदात्मकं ब्रह्मैव आवरणशक्त्या समावृतत्वेन नैव प्रकाशते कुतस्तावत् सर्वथा प्रकाशमानो जड़वर्गः प्राकाश्यं गमिष्यतीति स्वयमेव विचारयन्तु।

अस्मिन् प्रसङ्गेऽयमाक्षेपोऽवश्यमेव भवति, भवितु प्रभवति च, अनुभूयते चापि यदा कदाचिद् घटस्याऽज्ञातता। अर्थाद् "घटमहं न जानामि" इत्याकारकं विपर्ययात्मकं ज्ञानमाश्रित्य, अनुसृत्य च वयमहर्निशमनिश घटस्याऽज्ञानकालपर्यन्त घटस्याज्ञातत्वमेव सर्वथानुभवामः। ब्रूमश्च "मया घटोऽज्ञातः" इति। तदा तेन घटविषयकाऽज्ञानविषयक-ज्ञानेनेदमवश्यमेव सर्वथा सुनिश्चित भवति यदचेतनभूतो जड़वर्ग एव भवति खल्वज्ञानस्य विषयः।

किन्तु नास्त्ययमाक्षेपस्तर्कसंगतः, यत एवम्भूतस्य ज्ञानस्य प्रत्यक्षप्रमाणेन अनु-मानप्रमाणेन वा केनाप्यन्यप्रमाणेन वेद प्रत्यक्षात्मक ज्ञान नहि सम्भवति। यतस्त-स्मिन् प्रत्यक्षात्मके ज्ञाने इन्द्रियार्थसन्निकर्षः संयोगाद्यात्मकोऽपेक्षितो भवति। अतश्चा-नेन संयोगसन्निकर्षेण यदि घटस्य प्रत्यक्षात्मकं ज्ञानं स्यात्तर्हि घटात्मके विषये घटविषयकस्याऽज्ञानस्याऽस्तित्व नहि स्थास्यति, यतस्तावत् समानविषयकज्ञाना-ज्ञानयोः परस्परविरोधिस्वभाववत्वात्।

एवमनुमानेनापि प्रमाणेनाऽस्य ज्ञानस्य सिद्धिर्नैव भवितु प्रभवति। यतस्तावद-स्मिन् ज्ञाने साध्यसाधकस्य तज्ज्ञापकस्य वा हेतोरभावात्। हेतुमन्तरा केन साध्यस्यो-पपत्तिः स्यात्, नहि केनापीत्यर्थः। यदि च तत्र ज्ञाततायाः एव हेतुत्वेन विधान कृत्वा तदानुमान सम्पाद्यते, अर्थात् यद् वस्तु वर्तमानकालावच्छेदेन ज्ञातमस्ति तदेव च पूर्वमज्ञातमासीत् इति स्वीक्रियते।

तदपि न साम्प्रत साम्प्रत प्रतिभाति, यतः खलु कथनमिद धारावाहिकप्रत्यक्ष-स्थले नैव पर शोभते। अनेन तु ज्ञातवस्तुनिष्ठैव ज्ञातता ज्ञायते नत्वज्ञातस्य ज्ञाततापि ज्ञातु शक्यते।

वेदान्तमते ज्ञाताऽज्ञातवस्तुद्वयविषयकं ज्ञान साक्षिचैतन्येनैव जायते। यथोक्तवान् विवरणकारः—

सर्वं वस्तु ज्ञाततया वाऽज्ञाततया वाऽसाक्षिचैतन्यस्य विषय एव ।[1]

इत्थं च सर्वविधमानसिकबौद्धिकज्ञानाऽज्ञाने स्वयमेव साक्षिचैतन्यं विषयी-करोति, यतो ज्ञानं सर्वदा पदार्थसापेक्षं भवतीत्यनुभवामः । पदार्थमन्तरा ज्ञानमस्त्येका काल्पनिकी धारणा ।[2]

वस्तुनोऽनादिकालीनमज्ञानं भावरूपतया परोक्षतस्तथाऽनादिकालत आत्मा-श्रितमस्ति, इत्यतोऽज्ञानमात्मसम्बद्धमस्तीति सुनिश्चीयते, अत एवाऽज्ञानस्य विषया अपि आत्मना सह सन्ति सम्बन्धवन्तः । आत्मनोऽज्ञानेन तद् विषयेण च सह योऽस्ति खल्वनित्यतामापन्नः सम्बन्धः स नास्ति कदाप्याकस्मिकः । यतो ज्ञानन्त्वात्मश्रवणमनना-द्युत्तरकाले जायतेऽतो ज्ञानन्त्वस्ति निश्चितकालीनसत्ताकम्, यदा चास्ति ज्ञानप्रति-द्वन्द्वीभूतमज्ञानं सर्वदा निश्चितकालीनसत्ताकम् ।

इदन्त्ववधेयम् कस्यापि पदार्थस्य प्रमात्मकं ज्ञानं संपादयितुं केचन प्रारम्भिका आवश्यकत्वेन समयबन्धभूताः प्रभूता विचारा अपेक्ष्यन्ते ।

यथा सर्वतः प्राक् ज्ञानस्य सम्पादनार्थं ज्ञानप्राक्कालावच्छेदेन विषयस्याऽ-स्तित्वमपेक्षितं भवति, विषयस्य स्वज्ञानं प्रति कारणत्वं तादात्म्येन सर्वमतसिद्धमस्तीति केन नहि ज्ञायते । स च ज्ञानपूर्वकालावच्छेदेनाऽज्ञातः सन् सन्तिष्ठते ।

अयमस्त्यभिप्रायः यत् केनापि द्वारभूतेन साधनेन कस्यापि विषयभूतस्य वस्तुनो ज्ञानसम्पादनतः पूर्वमात्मनः कृते मानमिदं नितान्तमावश्यकं भवति य वस्तुभूतं पदार्थं मानवस्तदतिरिक्तो वा प्राणी ज्ञातुमिच्छति स पदार्थः सर्वथाऽज्ञातो भवेत् ।

विषयः स्वविषयकज्ञानं प्रति तादात्म्येन कारणं भवतीति सर्वजनसिद्धमेतत् । कारणमात्रस्य सर्वथा पूर्वभावित्वमपेक्षितं भवतीत्यपि सुनिश्चितमस्ति । अन्यथा कारणस्य पूर्वभावित्वानङ्गीकारे तस्य कारणत्वमेव व्याहन्येत ।

पूर्वोक्तोदाहरणे ज्ञातत्वविशिष्टघटो विषयः । अतो वृत्तिज्ञानस्य विषयो यावत्कालावच्छेदेन घटो नैव भविष्यति तावति काले घटो ज्ञात एव सन्तिष्ठते, अन्यथा तदीया कारणता सर्वथैवानुपपन्ना स्यात् ।

साक्षिचैतन्यद्वारा ज्ञातो घटो ज्ञायतेऽतः साक्षिचैतन्यमज्ञानेन तत्कार्येण च जगदात्मकेन सह सर्वथा सम्बन्धितं भवति । आत्मनः प्रथमतो वस्तुविषयकज्ञानावसरे

---

१. विवरणम् पृ० १३

२. इष्टसिद्धिः पृ० १०५

३. तत्त्वदीपनम् पृ० ६३

इदं नितान्तमावश्यकमस्ति यदितः पूर्वं यद् वस्तु खल्वज्ञातमासीत् तदेव वस्तु इदानी ज्ञायते[1], अर्थात् ज्ञात भवति। अथ च पूर्वकालीनेयं प्रत्यभिज्ञा तावत् कालपर्यन्तं नहि संभवति यावदात्मनि स विषयो ज्ञातो न भवेत्[2]। अतोऽनेन सुस्पष्टमिद ज्ञायते यदज्ञानस्य विषयश्चैतन्यमेव भवतीति भावः।

## मायाया वैशिष्ट्यम्

मायाया आवरणविक्षेपनामकमस्ति शक्तिद्वयम्। ब्रह्मणः साक्षाच्छक्तिर्माया, मायायाश्चेदमस्ति शक्तिद्वयम्। इदमेव शक्तिद्वय नित्य, शुद्ध, बुद्ध, मुक्तस्वभावस्य ब्रह्मणः स्वरूपमावृणोति। तदनन्तरमिय माया तस्मिन्नेव ब्रह्मणि खल्ववस्तुभूत चराचरात्मक प्रपंचस्वरूपं सदसद्विलक्षणमनिर्वचनीय जगदुत्पादयति। अत एवेद जगन्मिथ्याभूत सत् प्रतीतिमात्रविषयीभूत भवति मायाकार्यत्वात्। तथा चोक्तम्—

"इदं सर्वं मिथ्या मायाकार्यत्वात् ऐन्द्रजालिकवत्"[3]।

"मायया मोहित जगत्"[4]।

परन्तु ये भवन्ति दुष्कर्मिणोऽपि सदसद्विवेकशून्याः पतिताः सन्तः सन्ति जननमरणादिदुःखप्रदकाम्यकर्म कुर्वाणाः ते कामादिरूपिण्या माययाऽपहृतज्ञाना मूढा भवन्तो नहि मा प्रपद्यन्ते।

अपि च "आम्नायस्य क्रियार्थत्वात्" इति न्यायेन कर्मशेषत्वमेवाङ्गीकारस्याऽविश्वासेन तद्विचारमेव न कुर्वन्ति। इत्यसतस्तावत् कुतस्तेषा मज्ज्ञान भविष्यति, तदसत्वे कुतो मदुपास्तिप्रसक्तिस्तत एव मा न प्रपद्यन्ते। उक्त च—

"न मा दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययाऽपहृतज्ञाना आसुर भावमाश्रिताः"[5]॥

पुष्टीकृतचेद कथन भगवता श्रीकृष्णेन—

"त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिव जगत्।
मोहित नाभिजानाति मामेभ्य परमव्ययम्"[6]॥

अर्थात् सात्विक, राजस, तामसैश्च गुणमयैर्भावैर्भोग्यपदार्थभूतैरनुभवविषयतागतैरेभिः शब्दादिभिर्विषयैर्बन्धनकारणीभूतैश्च रागद्वेषादिभिः सर्वं जगदिद मोहगर्ते निपातितमस्तीति कैर्दार्शनिकैर्नाभ्युपगम्यते। तथा चोक्तम्—

---

१. लघुचन्द्रिका, निर्णयसागर सस्करण, पृ० ४६६

२. गीता, २।१७ मधुसूदनी टीका

३. गीता ७।१२ तत्त्वदर्शिनी टीका तथा शकरानन्दी टीका

४. कृष्णोपनि० १०

५. गीता, ७/१५

६. तत्रैव श्लो० १३

"इन्द्रियाभ्यामजय्याभ्यां ग्राम्याभ्यामेव हतं जगत् ।
अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि ॥"[1]

इति न्यायेनाऽनाद्यविद्यापरपर्यायभूतया माययाऽनात्मन्यात्मत्वभ्रमेण मोहं गताः प्रभाविताश्च सर्वेऽपि प्राणिनो विषयभोगलाम्पट्यलक्षणलक्षितमेव मायामार्गं तत्कार्यं नानुगच्छन्ति सर्वतोभावेन ।

ब्रह्मणि तु केवलं वाग्व्यवहारविषयतासम्पादनपरा एव खलु परिलक्ष्यन्ते । 'सर्वेषां वाचि न मनसि पुनः कस्यापि पुण्यात्मनः' इत्यभियुक्तोक्तेः परमार्थभूते वस्तुस्वरूपे परब्रह्मणि सर्वथाऽऽस्थावन्तो दुर्विदग्धास्ते जीवा दुष्कर्मणा मोक्षे मोक्षसाधनीभूते च ज्ञाने श्रद्धाविश्वासविरहिताः सन्तः पौनःपुन्येन जननमरणप्रवाहे पात्यमाना आनन्दैकरसं हस्तगतं मोक्षाख्यं तुरीयं पुरुषार्थभूतं प्रभूतं फलं तिरस्कृत्य नानायोनिषु नरके, घोरनरके च भूयोभूयश्चरणविचरणरूपपतनलक्षणमृत्युसंसारवर्त्मनि सन्तिष्ठमानाः सन्तः पुनःपुनर्जायन्ते म्रियन्ते च । अहो बत मायाकृतमिदं दौर्विदग्ध्यमपारदुःखकारणम् । तथा चोक्तम्—

"अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ?
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि"[2] ॥

## मायायाः शक्तिद्वयम्

इदानीं मायापरपर्यायभूतस्याऽज्ञानस्याऽऽवरणविक्षेपनामकमस्ति शक्तिद्वयम्, तदेव शक्तिद्वयमत्र विचार्यते ।

कार्यानुकूलकारणनिष्ठसामर्थ्यं शक्तिरुच्यते । जगदात्मकं कार्यानुकूलं यत् मायापरपर्यायभूतं मूलाज्ञानरूपं कारणं तन्निष्ठमिदं शक्तिद्वयमिति शक्तिलक्षणमिदं साधु संगच्छते ।

तत्रापि आवरणविक्षेपशक्त्योर्विषये सन्ति वादिनां विप्रतिपत्तयः । तत्राऽऽवरणविषये यथा—वात्स्यायनभाष्यकर्तारः "आवरणन्तु प्राप्तिप्रतिषेधः"—वा० भा० ३।२।८ इति वदन्ति । तत्रैव पुनः सुदर्शनाचार्यो ब्रूते—"आवरणपदार्थमाह—आवरणमिति, प्राप्तिप्रतिषेधः=संयोगाभावस्तेजसः[3] ।

१. एतेनाऽऽवरणपदार्थः प्राप्तिप्रतिषेधरूपो व्याख्यातः, स च तेजसः संयोगाभावो निरूपितः, कथमपि शक्तिरूपमावरणं न हि सिद्ध्यति । तत्रेदं सिद्धान्तितं यद् गच्छता शरीरादिरूपेण द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्य तेजोभागस्य छाया-

१. गीता श्लो० १३ पश्यन्तु शङ्करानन्दीटीकाम्
२. भगवद्गीता ९/३
३. वा०भा० सद[illegible]

सम्बन्धयोग्यप्रदेशे यः संयोगाभावो नैरन्तर्येण गृह्यते स एव छाया न तु द्रव्यान्तरं येन छायायां गतिमत्त्वं स्यात्, छायायां गतिमत्वस्याऽसिद्धत्वात् । तथा च नास्ति शक्ति-रूपमावरणम् ।

२. एवं मध्वमतानुयायिनो माध्वाः खलु "बाह्यं तम एवाऽऽवरणम्" इति च प्रोद्घुष्यन्ति । एतेनापि आवरणस्य तमोरूपत्वे, तमसश्चाऽभाव=तेजोभाव, रूपत्वे नहि शक्तिरूपता एतन्नयेऽपि सिद्ध्यति ।

३. आच्छादनमेव चास्ति केवलमावरणमिति च काव्यशास्त्रिणो वदन्ति। एतेनापि आवरणस्य नहि शक्तिस्वरूपता सिद्ध्यति । शक्तेश्च "अस्माच्छब्दादयमर्थो बोद्धव्यः" अथवा "इदं पदममुमर्थं बोधयतु" इत्याकारकेश्वरेच्छारूपत्वात्, सामान्यत इच्छारूपत्वाद्वा, इच्छायाश्चाऽऽत्मगुणत्वात् इति नाऽऽवरण शक्तिः ।

४. मायायाः एवाऽऽत्मभूतस्य ब्रह्मणः स्वरूपाच्छादकत्वेनाऽवान्तरशक्तिराव-रणशक्तिरिति च शङ्करमतानुयायिनोऽद्वैतवेदान्तिनो वदन्ति ।

एवं विक्षेपशक्तिविषयेऽपि सन्ति खल्वनेकाः विप्रतिपत्तयः । ताश्च यथा—विक्षेपो निग्रहस्थानविशेषः । तथा चोक्तवान् गौतमः—"कथा व्यासङ्गात् कथाविच्छेदो विक्षेपः" । ५।२।१९ यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति इदं मे करणीयं विद्यते तस्मिन्नवसिते कथयिष्यामि इति । विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानाया कथाया स्वयमेव कथान्तरं प्रतिपद्यते"[1] ।

इत्थंचैतत् सूत्रं विवर्तयामास ।

१. एतेन तादृशकथाविच्छेदो विक्षेपो दर्शितः । न तु कथंचन कुतश्चन विक्षेप-स्य शक्तिरूपताऽऽयाति ।

२. एवं पातंजलयोगशास्त्रवेत्तारो विद्वांसः खलु "व्याधिस्त्यानसंशयप्रमादा-लस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः"[2] ।

इति सूत्रमाश्रित्य चित्तगतनवसङ्ख्याकाना अंशानामेव विक्षेपरूपतां दर्शया-मासुः ।

३. अत्र विषये ज्योतिर्ज्ञानविद्वांसः—"विमण्डले यद् ग्रहस्थानं तस्य क्रान्ति-वृत्तात् तिर्यगन्तरं स विक्षेपः"[3] ।

इति च विक्षेपं वदन्ति । अयमेव च शर इति चापि प्रस्फोरयन्ति ते ।

---

१. वात्स्यायन भा० तत्रैव

२. पातंज० सू० पा० १ सू० ३०

३. सिद्धान्तशिरोमणिः

तदानीं विक्षेपशक्तिस्तस्मिन् वस्तुनि स्वल्वनिर्वचनीय वस्त्वन्तर समुत्पादयति । दृष्टान्तीकृता "अयं सर्पः" इत्याकारिका सर्पत्वप्रकारिका सभावना प्रागेव मयेति विचार्यताम् । उक्त च—

विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्त जगत् सृजेत्[1]

सदानन्देनाप्युक्तम्—

"विक्षेपशक्तिस्तु यथा रज्ज्वज्ञान स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति । एवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याकाशादिप्रपञ्चमुद्भावयति तादृश सामर्थ्यम्" ।[2]

एतस्या विक्षेपशक्तेः प्रभावादेव निराकारो निर्विकारो अकर्त्ताऽपि सन् ब्रह्मस्वरूप आत्मा स्वस्मिन् साकारिव, विकारिव कर्तृत्व, सुखित्व, दुःखित्व चेत्याद्यनुभवति, द्वैत, भेद, बन्धन चाकलयति । ब्रह्माद्यारभ्य सकल चराचरात्मक नामरूपात्मक जगद्भूत स्थावरपर्यन्त प्रपच चोद्भावयति । किं किं न करोति सर्वमेव खलु समावरणीयमावरणविक्षेपशक्तिसाहचर्याविच्छिन्नाऽज्ञानापरपर्यायभूता विभूतिभूता निष्काया माया । अत एवेय विक्षेपशक्तिर्वेदान्तशास्त्रपारगमनीषिभिः किल रजोरूपेति कथ्यते ।

विवेकचूडामणिग्रन्थे श्रीशङ्कराचार्यै शक्त्योरनयोरावरणविक्षेपयोर्विषये महता गुम्फरूपेण वर्णन कृतवान् । यथा सान्द्रमेघे कवलितदिननाथे दुर्दिने जायमाने हिमझञ्झावातजन्यस्तावदुग्रो वेग प्राणिनो व्यथयति । तथैवाऽऽवरणविक्षेपशक्तिद्वयमिद क्रमशो ब्रह्मणस्तावदाच्छादन विधाय चराचरमिद विश्व भ्रमयति । अविरततमोगुणेनात्मनि समावृते तीव्रविक्षेपशक्तिर्मूढपुरुष बहुदु खै क्षपयति । तथा चोक्तवान् शङ्कराचार्य —

कवलितदिननाथे दुर्दिने सान्द्रमेघै-
व्यथयति हिमझञ्झावायुरुग्रो यथैतान् ।
अविरततमसात्मन्यावृते मूढबुद्धि
क्षपयति बहुदु खैस्तीव्रविक्षेपशक्ति[3] ॥

अपि च यथा राहु सूर्यबिम्ब समावृणोति=ग्रसति, तथैव तमोमयीयमावरणशक्तिरखण्डनित्याद्वयबोधशक्त्या प्रस्फुरन्तमनन्तवैभव शुद्ध, बुद्ध, मुक्तस्वभावमात्मान समावृणोति । तथा चोक्त तत्रैव—

---

१ वाक्यसुधा १४, वेदान्तसार पृ० २६-३०
२ वेदान्तसार पृ० ३८ (ज्वालाप्रसाद गौडेन सशोधित)
३ विवेकचूडामणि बन्धनिरूपण श्लो० १४५

अखण्डनित्याद्वयबोधशक्त्या—
स्फुरन्तमात्मानमनन्तवैभवम् ।
समावृणोत्यावृतिशक्तिरेषा—
तमोमयी राहुरिवार्कबिम्बम्[1] ॥

अपि चाऽतिनिर्मले तेजोमये खल्वात्मतत्त्वे तिरोहिते दृश्यतां गते सति पुरुषो नात्मभूतं "गौरोऽहम्" "श्यामोऽहम्" "स्थूलोऽहम्" "कृशोऽहम्" "काणोऽहम्" "बधिरोऽहम्" इत्यादिप्रतीतिगम्यशरीरेन्द्रियादिकमेव मोहाद् "अहम्" इति पदाऽभिधेयमात्मानं मन्यते। तदनन्तरकालावच्छेदेन विक्षेपाख्या रजोगुणस्य शक्तिः काम, क्रोध, मदलोभादिभिर्बन्धनकारिभिर्गुणैरमुं व्यथयति, विवादयति च । उक्तं च—

"तिरोभूते स्वात्मन्यमलतरतेजोवति पुमा—
ननात्मानं मोहादहम् इति शरीरं कलयति ।
ततः कामक्रोधप्रभृतिभिरमुं बन्धनगुणैः—
परं विक्षेपाख्या रजस उरुशक्तिर्व्यथयति[2] ॥

तदानीं च नानाविधकुत्सितगतिरत एव च कुमतिः सन् विषयविषपूरेऽपारे सागरभूते प्रभूतेऽस्मिन् संसारे सर्वथा सर्वतोभावेन निमज्ज्योन्मज्ज्य महामोहग्राहग्रसनगलिताऽऽत्माऽवगमनोऽयं जीवो नानाविधावस्थाः स्वयमभिनयन् खलूनमत्तवत् चरति विचरति भ्रमति चाहर्निशमिति न कदाचित् कथंचित् कुतश्चित् केनचिदपि विश्रान्तिं भजते। तथा चोक्तम्—

महामोहग्राहग्रसनगलिताऽऽत्मावगमनो—
धियो नानावस्थाः स्वयमभिनयंस्तद्गुणतया ।
अपारे संसारे विषयविषपूरे जलनिधौ—
निमज्ज्योन्मज्ज्याऽयं भ्रमति कुमतिः कुत्सितगतिः[3] ।

अपि च यथा भगवतो भास्करस्य तेजसो जनिताभ्रपङ्क्तिः साक्षात् सूर्यमेवाऽऽच्छाद्य स्वयं सन्तिष्ठते विजृम्भते च । तथैवाऽऽत्मनः प्रकटितोऽहङ्कारस्तावदात्मतत्त्वं समाच्छाद्य स्वयं स्वस्थितिमापन्नो भवति। तथा चोक्तम्—

भानुप्रभासाज्जनिताऽभ्रपङ्क्ति—
र्भानुं तिरोधाय विजृम्भते यथा ।

१. विवेकचूडामणिः बन्धनिरूपणं श्लो० १४१
२. तत्रैव, श्लो० १४२
३. तत्रैव, श्लो० १४३

४. अपि च—

"सूपाणामर्घरचना वृत्ता विश्वगवेक्षणम् ।
रहस्याख्यानमीयच्च विक्षेपो दर्पितान्तिके"[१] ॥

एतेनाऽलङ्कारिकाः साहित्यशास्त्रवेत्तारो विद्वांसः सत्वजोऽलङ्कारविशेष एव विक्षेप इति वदन्ति ।

एवमन्यान्यपि सन्ति मतमतान्तराणि विक्षेपविषये यानि च विक्षेपस्य शक्तिरूपतां नहि प्रतिपादयन्ति । विस्तरभयात् समयाभावाच्च नाऽत्र प्रदर्श्यन्ते ।

मायावादिनोऽद्वैतवेदान्तिनस्तु मायापरपर्यायभूताया मूलाऽविद्याया जगत्कारणीभूताया अवान्तरशक्तिविशेषोऽस्ति विक्षेप इति वदन्ति । सैवेयमस्ति खलु विक्षेपशक्तिः ।

अत्रेदमाशङ्क्यते यद् आवरणविक्षेपयोः कथं शक्तित्वमभ्युपगम्यते, यतस्तावदावरणस्य चैतन्यनिष्ठत्वात्, शक्तेश्च जगत्कारणीभूताऽज्ञाननिष्ठत्वात् ।

एवं विक्षेपमपि कार्यमेव, तस्यापि कारणमज्ञानमेवेतिकथमावरणविक्षेपयोः कार्यानुकूलकारणनिष्ठसामर्थ्यरूपशक्तित्वं स्यादिति स्वयमेव विदाङ्कुर्वन्तु भवन्तः । अतो विक्षेपस्य विक्षेपकार्यस्य, कारणभूताया शक्तिः सा विक्षेपशक्तिः, विक्षेपनिष्ठजन्यतानिरूपितजनकतावती शक्तिरित्यर्थः ।

यद्यपि नाऽऽवरणमज्ञानकार्यम्, यत आवरणस्य "प्रवाहोऽनादिमानेषः" इत्यादिप्राचीनाचार्य श्रीउदयनाचार्यचरणोक्तदिशा, अनादित्वात्, अनादिभावस्य नाशासंभवात्तस्याऽऽत्मसाक्षात्कारकालाऽव्यवहितप्राक्क्षणावच्छेदेन स्थितिमत्त्वरूप नित्यत्वं कल्प्यते ।

तथापि तथा सति मास्तु अज्ञानाजन्यत्वेनाऽज्ञानकार्यत्वमावरणस्य । पुनरपि मूलाऽज्ञाननिष्ठप्रयोजकतानिरूपितप्रयोज्यतावत्त्वमावरणस्याऽप्रतिहतगतिकत्वात् तादृशाऽज्ञानप्रयोज्यत्वन्तस्याऽस्त्येवेति अवश्यमेव मन्तव्यम् ।

रजः सत्वाभ्यामनभिभूतं तमः सत्वावरणशक्तिः प्रोच्यते । तमस आवरकत्वम् आवरणजनकत्वं, सर्वत्र शास्त्रेषु प्रतिपादितमस्तीति के नहि जानन्ति । आवृणोति वस्तुस्वरूपं या सा शक्तिरेवाऽऽवरणशक्तिरिति यौगिकव्युत्पत्याऽऽवरणशक्तियौगिकी शक्तिरस्तीति विज्ञेयम् ।

इदं चात्र पर्यवस्यति यदस्या अज्ञानापरपर्यायभूतायाः प्रभूताया मायायाः आहोस्वित् मायापरपर्यायभूतस्य प्रभूतस्य जगत्कारणीभूतस्य मूलाऽज्ञानस्याऽस्ति

१. साहित्य द० परि० ३ श्लो० १०८

आवरण विक्षेपनामकं शक्तिद्वयम् । इदमेव शक्तिद्वयं द्वारीकृत्य मूलाऽज्ञानभूतेयं मायाऽसंसारिणमात्मानमाच्छादयति ।

यदि च परिच्छिन्नेनाऽज्ञानेनाऽपरिच्छिन्नो नित्य, शुद्ध, बुद्ध, मुक्तस्वभावोऽयमात्मा कथमाच्छाद्यते इत्याशङ्क्यते तदेत्याशङ्कायां जायमानायां तां शङ्कां निराकुर्वन्ति वेदान्तशास्त्रशेमुषीका मनीषिणो मेघदृष्टान्तेन ।

यथा मेघखण्डलक्षणलक्षितः स्वल्पोऽपि मेघः षट्सहस्रपंचशत (६५००) योजनेषु विस्तृतमादित्यमण्डलमवलोकयितृणां जनानां नयनपथपिधायकतयाऽऽदित्यमाच्छादयतीत्युपचारात् कथ्यते, तथैव परिच्छिन्नस्याऽप्यज्ञानस्य प्रमातृबुद्धिमात्राच्छादकत्वेनाऽऽत्माच्छादकत्वमुपचारात् प्रोच्यते । तथा चोक्तं सदानन्देन—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कम्—
यथा मन्यते निष्प्रभं चातिमूढः ।
तथा बद्धवद् भाति यो मूढदृष्टेः—
स नित्योपलब्धिस्वरूपोऽहमात्मा[1] ॥

अर्थात् एतदावरणशक्तिसहकृतमज्ञानमतितुच्छं परिच्छिन्नं च सदपि अपरिच्छिन्नं स्वप्रकाशचिदात्मकं पूर्णं पूर्णतरं वेदस्वरूपं परब्रह्मरूपमात्मानमाच्छादयति । तथा चाऽज्ञानाच्छन्नदृष्टिरतिमूढो यथा घनच्छन्नमर्कं निष्प्रभं-प्रभारहितं प्रकाशविहीनं, मन्यते तथैवाऽज्ञानावृतचैतन्यस्याऽतिमूढदृष्टेः स्वप्रकाशाऽऽनन्दरूपश्चिदात्मकब्रह्मभूतमात्मापि बद्धवद् भाति ।

तात्त्विकदृष्ट्या विचार्यमाणे नेदमज्ञानं विभुमात्मानमाच्छादयितुं प्रभवति । परन्तु अवलोकयितृनयनपथपिधायकतया स्वप्रकाशचिदात्मकं नित्यविज्ञानरूपं तमात्मानं नैव साक्षात्कर्तुं पारयति ।

यथा अज्ञानावृते रज्ज्ववच्छिन्ने चैतन्ये "अयं सर्पः" इत्याकारिका सर्पत्वप्रकारिका संभावना जायते, अर्थात् अनिर्वचनीयसर्पोत्पत्तिस्तत्र भवति । इदं चास्ति खल्वनिर्वचनीयसर्पोत्पादनरूपं कार्यं विक्षेपशक्तेः ।

**विक्षेपशक्तिः**

प्रागुक्तावरणशक्तेरतिरिक्ता चास्त्येका मायाया विक्षेपनाम्नी शक्तिः । यत्कालावच्छेदेनाऽऽवरणशक्तिरियं कस्यापि वस्तुभूतस्य पदार्थस्य वास्तविकं स्वरूपमावृणोति तत्कालावच्छेदेन तस्य वस्तुनो वास्तविकं स्वरूपविषयकं ज्ञानं नहि जायते ।

---

१. वेदान्तसारः

आत्मोदिताऽहङ्कृतिरात्मतत्वं—
तया तिरोधाय विजृम्भते स्वयम् ॥[1]

येनाऽऽसुरीमेव समुन्नतिं समभिलपन् तदर्थं चाऽविच्छिन्नप्रयासभारमुद्वहन् नैकमपि क्षणं समुपलभते विश्रमसुखशय्यामधिष्ठातुम् ।

अपि च जन्मजन्मान्तरेभ्यः समुपार्जितधर्मपरिपाकप्रसरसमासादितस्य पांचभौतिकस्यास्य देहस्य भस्मपुरीषपरसात्ततामपरिकलयन् परकीयशिक्षणमेव सच्छिक्षणं, परकीयाऽऽचरितं कर्मैव सत्कर्म, परकीयामुन्नतिमेव स्वकीयामुन्नतिं मन्यमानोऽयं जीवः परमार्थभूते वस्तुस्वरूपे परब्रह्मणि चाऽनास्थां विदधानः स्वीयेन दुष्कर्मणा मोक्षे मोक्षसाधनीभूते च ज्ञाने श्रद्धाभक्तिविरहितः सन् पौनः पुन्येन जननमरणप्रवाहे पात्यतानो दुर्विदग्ध आनन्दैकरसं हस्तगतं मोक्षाख्यं तुरीयं फलं तिरस्कृत्य नानायोनिषु नरके घोरनरके च भूयो भूयः पतनलक्षणमृत्युसंसारवर्त्मनि वर्तमानः पुनः पुनर्जायते म्रियते च । अहो बत दौर्विदग्ध्यमेवाऽपारदुःखकारणम् । उक्तं च—

"अश्रद्दधानाः पुरुषा धर्मस्याऽस्यपरन्तप ?
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥[2]

पुराणेषु मायास्वरूपम्

पुराणघटकीभूतानां वाक्यानामुद्धरणमाश्रित्य मायाया इत्थं व्याख्यानं विधीयते यत्—हे अनन्त ! भवतामिच्छैव महामाया, अविद्या, नियति, मोहिनी, प्रकृति, वासना, प्रभृतिशब्दावल्या कथ्यते । अर्थाद् भगवदिच्छाया एवतन्नये महामायेत्यादिषड्रूपता प्रतिपादिता भवति । प्रकरोति=रचयति, जगद् या सा, इति व्युत्पत्त्या प्रकृष्टस्य जगतः कारणत्वात् प्रकृतिरपि भगवदिच्छाशब्देन कथ्यते । अत एव "एकोऽहं बहु स्याम्" इत्युपनिषदुक्तिरपि साधुत्वेन संगच्छते ।

भगवदिच्छाया एव विचारधारोत्पादनं प्रति कारणत्वात् वासनात्वाभिधानमपि साधु सङ्गच्छते ।

"अ" इत्यस्य 'हरिः' अर्थः, तस्य हरेः इच्छास्वरूपाया मायायाः प्रबोधभयतोऽविद्येति कथनमपि साधु सङ्गच्छते ।

अस्या एव खलु भगवदिच्छायाः प्रकृष्टत्वात् अर्थात् जगत्कर्तृत्वरूपधर्मस्य भगवदिच्छामहामायोभयसाधारणत्वात् तादृशेच्छैवैतन्मते महामायेति बोध्यम् ।

एवं भगवतो विष्णोः प्रज्ञप्तेर्नियतिरूपत्वेन तदिच्छा नियतिशब्देनाप्यभिधीयते ।

१. विवेकचूडामणिः बन्धनिरूपणं श्लो० १४४

"अहमेव[1] हरि साक्षादहमेव सदाशिव." इत्यनया श्रुत्या हरेर्ब्रह्मरूपत्वात्, "सत्य[2] ज्ञानमनन्त ब्रह्म" "नित्य[3] विज्ञानमानन्द ब्रह्म" इत्येताभ्या च श्रुतिभ्या ब्रह्मणो विशिष्टज्ञानरूपप्रज्ञप्तिरूपत्वात्, स्वानन्दलक्षणाया प्रज्ञप्तेश्च मोहिनीत्व सिद्ध्यतीति भगवदिच्छैव मोहिनीत्यपि कथन साधु सगच्छते । उक्त च—

महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येव तवेच्छानन्त ? कथ्यते ॥

प्रकृति प्रकृष्टकरणाद्वासना वासयेद्यत ।
"अ" इत्युक्तो हरिस्तस्य मायाऽविद्येतिसज्ञिता ॥

मायेत्युक्ता प्रकृष्टत्वात्प्रकृष्टे हि मयाभिधा ।
विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते ॥

प्रज्ञप्तिरूपो हि हरि सा च स्वानन्दलक्षणा ।

इत्यादिवचननिचयप्रामाण्यबलात्[4] भगवदिच्छाया मोहिनीत्व सुस्पष्टमेव ।

---

१. तेजोबिन्दूपनिषत ६/६४
२. तैत्तिरीय २/१
३. छान्दोग्योप०
४. सर्वदर्शन स० पूर्णप्रज्ञदर्शनम् पृ० २६८

# भूमिका

## अज्ञानमेकं वाऽनेकं वा आहोस्विदुभयं वेति विचारः

सर्वेषामेव पदार्थानां स्वरूपं सदसद्भेदेन द्विविधमेवाऽनुभूयते लोके। इतोऽतिरिक्तं किमपि तृतीयं चतुर्थं वा स्वरूपं नानुस्मर्यते। यतस्तृतीयस्य सदसदुभयात्मकस्य स्वरूपस्य चतुर्थस्याऽनुभयात्मकस्य च स्वरूपस्य सर्वथाऽलीकस्य नरशृङ्गवत्, गगनारविन्दवत्, वन्ध्यापुत्रवच्च तुच्छत्वात् तस्यानुपादेयत्वं सिद्ध्यति। अतस्तादृशरूपावच्छिन्नत्वेनाऽनिर्वचनीयत्वघटितमेवाऽज्ञानस्य लक्षणं प्रकुर्वन्ति श्रीसदानन्दसरस्वतीपादाः परन्तु तात्त्विकदृष्ट्या विचार्यमाणे सर्वेऽपि पदार्थाः सदसद्विलक्षणा एवानुभूयन्ते। अत एव सदसद्विलक्षणत्वात्तेषामनिर्वचनीयत्वकथनमपि साधु सगच्छते। तेषां सकलजडसमूहभूतपदार्थानां कारणीभूतमायाया अज्ञानापरपर्यायभूताया प्रभूताया अपि अनिर्वचनीयत्वकथनमपि तथैव पूर्ववदेव शोभते इत्यन्यत्र विस्तरः।

"अज्ञानन्तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं
ज्ञानविरोधि भावरूपं यत्किंचिदिति"[1]।

अपरे तु "अनादिभावरूपं यद्विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते॥"[2]

अस्मिन्नज्ञानलक्षणेऽज्ञानस्य भावत्वसाधकं प्रमाणमनुमानमस्ति। तथाहि—"विवादास्पदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्।

केचिद् अज्ञानं ज्ञानाभाव इत्येव वदन्ति। अपरे च अविद्यैव चास्ति तत्वाज्ञानपदाभिधेया।

### अज्ञानं निग्रहस्थानं 'अविज्ञातं चाज्ञानम्'[3]।

विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञानं तदज्ञानं निग्रहस्थानमिति। अयं खल्वविज्ञायस्य प्रतिषेधं ब्रूयादिति"[4]।

---

१. वेदान्तसार विलासिनी टी० पृ० ४०
२. सर्वद० स० पृ० ६३
३. गौ० अ० ५, पा० २ सू० १८
४. वात्स्यायनभा० तत्रैव

तच्चाज्ञानं समष्टितात्पर्याभिप्रायेणैकमिति व्यवह्रियते । व्यष्टितात्पर्याभिप्रायेण चाऽनेकमिति व्यवह्रियते ।

समष्टित्वं समष्टिमात्रेऽनुस्यूतत्वम्, यथा गोत्वम् घटत्वम्, पटत्वादिकं च । प्रकृते च वनत्व, जलाशयत्वादीनामनुगतधर्माणां समुदायभूतेषु वृक्षेषु तथाविधेषु जलेषु च वर्तमानत्वेन समष्टित्वकथनं साधु संगच्छते ।

व्यष्टित्वं च तत्तद्व्यक्तित्वरूपम् । अनेकपदार्थानां मेलनकरणेन व्यवहारतः समष्टिरूपता सिद्ध्यति । यथा वनं जलाशय इत्यादिः । प्रत्येकव्यवहारे च व्यष्टिरूपता इति । यथा इमे वृक्षाः सन्ति, इमानि जलानि चेति ।

एवमनेकत्वेन ज्ञायमानानां जीवगताऽज्ञानानां समष्टितात्पर्याभिप्रायेणाज्ञानैकत्वव्यवहारोऽपि सम्पद्यते "अजामेकामि" ति श्रुतेः ।

इदमस्ति तात्पर्यं यत् शास्त्रेषु शुकप्रभृतीनां सर्वेषामेव तथाविधानां मोक्षश्रवणात्, अस्मदादीनां च संसारश्रवणात्तदुपलम्भाच्च प्रतिपुरुषं न ज्ञायते न विदांक्रियते इत्येवंरूपेणानुभूयमानानि नानाज्ञानानि पृथक् पृथगेव अर्थाद् भिन्नानि भिन्नानि अवश्यमेवाभ्युपेतव्यानि । अन्यथा बन्धमोक्षव्यवस्था न स्यात् । अतश्चाऽजामेकामिति श्रुतेरज्ञानसमष्ट्योरेकविषयत्वमवश्यमेवाङ्गीकार्यम् ।

इत्थं चाऽज्ञाननानात्वे सिद्धे तादृशाऽज्ञानोपाध्यवच्छिन्नानां जीवानाञ्चापि नानात्वं सुस्पष्टमेव । तथा च शुकप्रभृतीनां मोक्षे जायमानेऽपि खल्वस्मदादीनां संसारोपलम्भो न व्याहतो भवति । यथा चोक्तं श्रीसदानन्देन—

"इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते । तथा हि—यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशो यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति । तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशः; अजामेकामिति श्रुतेः"[1] ।

इयं च समष्टिर्जगतो मूलभूतमज्ञानं मायापरपर्यायिभूतमस्तीति कथ्यते । इयं चाति मूलभूताज्ञानापरपर्यायभूता मायामोहादिना प्रतिहतज्ञानशक्तिकस्य चैतन्यस्योपाधिः । एतादृशमायोपहितं चैतन्यं सर्वज्ञः सर्वेश्वरः सर्वनियन्ता अन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते ।

अयमेवाऽन्तर्यामीश्वरः सात्विक, राजस, तामसभूतायाः प्रभूताया मायायाः साहचर्येण साहाय्येन वा सृष्टिस्थितिसंहारकर्ता सन् ब्रह्मा, विष्णु, रुद्र इति च संज्ञात्रयं लभते ।

अपि चायमेवेश्वरपदाभिधेयतां गतो भक्तकामकल्पद्रुमो भक्तवत्सलो भगवान् विष्णुरेव प्रभु दुष्टदमनपूर्वकगोविप्रसुरादिसात्विकसाधुपरित्राणपरायणो भूत्वा राम,

1. वेदान्तसार, विद्वन्मनोरञ्जिनी टी० पृ० ४३

कृष्ण, नृसिंहप्रभृति-अवतारान् जग्राह। अयमेव च पुनस्तुलसीमालाप्रभृतिभिरलङ्कारैरलङ्कृताया प्रतिमाया प्रतिष्ठाविधिना सुस्थिरो भूत्वा भक्ताना चोपासनाविषयता गतः सर्वानेवानुजिघृक्षति।

इत्थं च विराडुपासनायामनधिकारिणः खलु प्रागुक्तानां ब्रह्म, विष्णु, रुद्रस्वरूपाणां त्रिमूर्तीनामुपासनां प्रकुर्वन्तु। तत्रापि ये सन्ति अनधिकारितां गताः देहधारिणो जीवात्मानस्ते रामकृष्णप्रभृतीन् देवानुपासताम्। तथा तत्रापि सन्ति ये सर्वथाऽधिकारशून्यास्ते वराका जीवा ताम्रपाषाणादिप्रतिमादावेवोपासन्ताम्। इदं चास्ति सर्वमेव माहात्म्यं समष्टिस्वरूपस्याज्ञानापरपर्यायभूतस्य मायास्वरूपस्योपाधेरिति तु परमार्थः।

इदमत्रास्ति विशेषतो विचारणीयो विषयो यत् श्रीशङ्कराचार्यमतानुसारमेकमेवास्ति तत्त्वं ब्रह्मरूपम्। तस्य च ब्रह्मणः "सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादिसर्वा अपि श्रुतयो ज्ञानरूपतां प्रतिपादयन्ति। इदं च तत्त्वतः परं, निर्विकल्पं, निर्विशेषं, निर्गुणं, निराकारं, निर्विकारं, निःसङ्गं चास्ति ब्रह्म।

इयं च मूलाविद्यापरपर्यायभूता ब्रह्मशक्तिभूता प्रभूता माया स्वीयाऽऽवरणविक्षेपशक्तिसमन्विता सतीदं ब्रह्म परं सविकल्पम्, सविशेषम्, सगुणं च विधत्ते। एतत्स्वरूपावच्छिन्नमविच्छिन्नं तदात्मतत्त्वमीश्वरं कथ्यते। अयमेवेश्वरः खलु जगतः समुत्पत्ति, स्थिति, लयं कारणं च भवति।

## मायाव्युत्पत्तिलब्धार्थविचार

अनादिस्वरूपयोपाधिभूतया ज्ञानात्मिकया मायया 'गौरोऽहम्' 'श्यामोऽहम्' 'स्थूलोऽहम्' 'कृशोऽहम्' इत्यादिदेहात्मप्रत्ययवत् अनात्मन्यात्मत्वप्रकारक्रमेणाऽज्ञानान्धकारपतितानां सांसारिकदुःखदावाग्निना सन्तप्यमानानां प्राणिनां शास्त्राध्ययनजन्यविवेकोदयरूपकारणवशात् इयं जिज्ञासाऽनिवार्यतया जायते यदस्य नाशप्रतियोगितां प्राप्तस्य विश्वकारागारस्वरूपस्यास्य संसारसागरस्य कारणं किं, कथं च तत्सन्तरणं भवेत्।

तत्रेदं समाहितम्—

'विश्वेशपादाम्बुजदीर्घनौका'[1]।

अपि च गोकुलचन्द्रः श्रीकृष्णचन्द्रोऽपि—

'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'[2]।

१ प्रश्नोत्तरी, श्लो० १

२ भगवद्गीता अ० ७/१४

'एतां महामायां तरन्त्येव ये विष्णुमेव भजन्ति नान्ये तरन्ति कदाचन'[1]।

'अजेया वैष्णवी माया'[2]।

मीयतेऽनया माय टाप् —उणादिभ्यो 'यक्' प्रत्यय 'अजाद्यतष्टाप्' इति सूत्रेण 'टाप्' प्रत्ययो भूत्वा 'माया' इति निष्पन्नो जायते। अस्या मायाया बह्वोऽर्था भवन्ति, ते चार्था अनुपदमेव चाऽस्माभिर्विवेचयिष्यन्ते।

एवं 'माति' इति माया 'श्याद्व्यधासु' इत्यादिसूत्रेण 'ण' प्रत्ययः 'ण' लोपे 'टाप्' अनुबन्धलोपश्च युगागमश्चापि भवति। अन्यत् सर्वं पूर्ववदेवानुसन्धेयम्।

अपि च मा परमात्मानम् याति प्राप्नोति आश्रयतीति वा माया। तथा चेयं माया परब्रह्म परमात्मानं भगवन्तं परमेश्वरं समाश्रित्यैव सन्तिष्ठेत। अत एव ब्रह्माश्रिता मायेति च कथ्यते। मायाया आश्रयीभूतं ब्रह्मेति च तुल्यवित्तिवेद्यतयाऽर्थत एवाऽऽयाति। इत्थं च मायाया आधारभूतत्वाद् ब्रह्मणो जगदाधारत्वं सिद्ध्यति।

चराचरात्मकस्य प्रपञ्चभूतस्य जगतो विधाने निर्माणकार्ये खल्वियमेव माया परमात्मस्वरूपस्य चैतन्यस्य सहकारिणी भवति अर्थाद् तदानीन्तनकालावच्छेदेन ब्रह्मणो साहाय्यं विधत्ते। एतस्या मायाया ब्रह्मशक्तिस्वरूपाया. सहयोगमन्तरा शक्तिमद् ब्रह्म नहि कदाचित् कुतश्चित् कथञ्चित् प्रपचभूतस्य प्रभूतस्य जगतो निमित्तकारणम् उपादानकारण वा भवितुमर्हति। यथोक्तम्—

"शक्तिद्वयवदज्ञोपहित चैतन्य स्वप्रधानतया निमित्त स्वोपाधिप्रधानतयोपादानं च भवति"[3]।

इदंच परमात्मनिष्ठ यदुपादानकारणत्वं तन्मायाया एव विज्ञेयम्। यतस्तत्र मायाया एव प्राधान्यात्। परमात्मनिष्ठत्वाङ्गीकारे तु केवल याचितमणिमण्डनन्यायेनेव बोध्यम्, इत्यस्माकं स्वतन्त्रो विचारः। एवम्—

"भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया"[4]।

अर्थात् सूत्रधारी यन्त्रारूढानि दारुमयप्रतिमा यथा चालयति=भ्रामयति। तथैवेश्वरोऽपि ब्रह्मादिस्तम्बान्तानि सर्वभूतानि वासनास्वरूपया मायया विक्षेपशक्त्या भ्रामयन् समवतिष्ठते। अर्थात् यन्त्रात्मकेषु शरीरेष्वात्मत्वाभिमानेनाऽधिष्ठितानि

१. त्रिपाद्विभूतिमहानारायणो प० ४/१
२. कृष्णोपनि० ५
३. वेदान्तसारः विक्षेपशक्तिनिरूपणावसरे
४. गीता १८/६१

भूतानि भ्रामयन् परमेश्वरः सर्वेषां हृदयरूपे प्रदेशे तिष्ठति । इत्यनेनापि साक्षाद् भगवद्वचनेन स्वतः प्रमाणभूतेन मायायाः प्राधान्यं प्राबल्यं च निश्चीयते । इति स्वस्ति अद्वैतवेदान्तमते माया ।

१. एवं कापट्यमपि माया, धूर्ततापि माया,

२. इन्द्रजालं माया, स्वप्नोऽपि माया । उक्तं हि—

"स्वप्नो नु माया नु मतिभ्रमो नु"[1] ।

३. अवास्तविक आभासोऽपि माया, मनोलीलापि माया । तथाचोक्तम्—

'मायां मयोद्भाव्य परीक्षितोऽसि"[2] ।

४. एवमेव प्रधानं, प्रकृतिः अव्यक्तम्, अविद्या, अज्ञानम्, अध्यासादीनां सर्वेषामेव मायात्वं निश्चीयते ।

५. किमधिकं वयं ब्रूमहे भगवतो दशमावतारभूतस्य खलु बुद्धस्य मातापि माया इति श्रूयते ।

## मायाया नानार्थकत्वम्

मायार्थोपयुक्ता मायार्थवाचका मायार्थबोधका वा पर्यायवाचिनः शब्दा बहवः समुपलभ्यन्ते तेषु केषांचिदर्थानां समुल्लेखोऽधस्ताद् विधीयते यथा—

१. अविद्या
२. अज्ञानम्
३. प्रकृतिः
४. प्रधानम्
५. अध्यासः
६. अव्याकृतम्
७. उपाधिः
८. शक्तिः

अविद्या ज्ञानाभाव इत्यपि केचन दार्शनिका वदन्ति । परन्त्वत्रापि दार्शनिकानां मतभेदेन बहवः प्रकाराः सन्तीति तेऽत्र विस्तरभयान्न प्रदर्श्यन्ते । अविद्यायां प्रमाणानि यथा—

"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या"[4] ।

---

१. पंचतन्त्रम् १/३५१
२. शाकुन्तलम्
३. रघुवंश २/६२
४ प[illegible]

"अनात्मनि देहादावात्मबुद्धिस्तु देहिनाम् अविद्या"[1]

"अतस्मिंस्तद्बुद्धिरविद्या"[2]

"निःसन्दिग्धाऽबाधिताऽध्यवसायात्मिका प्रतीतिर्विद्या, तद्विपरीता चाऽविद्या"[3]।

"यदेव पररूपाऽदर्शनं सैवाऽविद्या"[4]

"असदर्थप्रकाशनशक्तिरविद्या"[5]

अविद्या च (वैशेषिके) दूरत्वपित्तदोषेत्यादीन्द्रियदोषजन्यो बुद्धिविशेषः (अयथार्थबुद्धिः)[6]

"शङ्कराचार्यः—अविद्या बीजशक्तिस्वरूपा परमेश्वराधीना मायामयी महासुषुप्तिरूपा चास्तीति ब्रूते"। उपनिषत्स्वपि अविद्याशब्दस्याऽज्ञानरूपेऽर्थे प्रयोगो मिलति।

अज्ञानम्—भगवान् श्रीकृष्णः स्वयमेव गीतायामज्ञानशब्दस्य प्रयोगमविद्यारूपेऽर्थे कृतवान्। तथा मायारूपेऽप्यर्थे चकार। तथाहि—

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"[7]

इत्थंच मायाया नानार्थकत्वमनुभूयते। विशेषस्तु शोधप्रबन्धग्रन्थेऽस्मिन् मदीये विलोक्यताम्।

## दार्शनिकसाहित्ये मायास्थानं तदीयं महत्वं च

तात्त्विकदृष्ट्या विचाराऽवसरे समुपस्थितेऽसारभूतस्य प्रभूतस्यास्य विश्वस्य दुःखरूपता निश्चीयते। उक्तंच—

"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"[8]।

यद्यप्यविवेकिनोऽपि सर्वं दुःखमेव सर्वस्यास्य विश्वस्य दुःखरूपत्वात् तदन्तर्गतानां पदार्थानां विषयस्वरूपाणामपि दुःखरूपत्वात् सुखमत्र कुतो जायताम्?

---

१. सर्वद० सं० पातंजलद० पृ० ६६७
२. तत्रैव पृ० ६६८
३. न्याय कं० पृ० ४१४
४. सर्वद० सं० शांकर द० पृ० ८७२
५. तत्रैव
६. प्रशस्तपादभा० गुणनिरूप० पृ० २३
७. गीता, ५/१५
८. योग द० पा० २, सू० १५

तथापि सोऽविवेकी मूढत्वात्—मायामोहग्रस्तत्वात् दुःखपर्यवसित सुखाभासमेव सुख मन्यमानः महान्तं हर्षप्रकर्षं समनुभवति। तथा चोक्तम्—

> कलत्रमित्रपुत्रार्थगृहक्षेत्रधनादिकैः।
> क्रियते न तथा भूरि सुख पुसा यथा सुखम्[1] ॥

पुत्रमित्रकलत्रप्रभृतीना सासारिकपदार्थाना सुखरूपता सुखसाधनता वा या चानुभूयते तत् सुख न किन्तु सुखाभासमात्रमेव तत्सर्वं दुःखे एव पर्यवसित विजानीयात्। सर्वेषामेव परिणामभूत प्रभूत दुःखमेवाऽनुभवामः।

सर्वत्रैव सर्वदा सुषुप्त्यवस्थाव्यतिरिक्ता जना ईप्साजिहासाप्रेरिता एव खलु दृष्टिगोचरता गताः समनुभूयन्ते। ते चार्थं कामयन्ते। अर्थं कामयमानाश्च ते चरणं विचरण प्रकुर्वन्तो भ्रमन्ति। अविच्छिन्नप्रयासभारमुद्वहन्ति। नैकमपि क्षणं सुखमुपलभन्ते।

अयमेव च ससार, ससारश्च मायाकल्पित, सन्ति च सर्वेऽपि भावा भावभूताः पदार्था मायाकल्पिता एवेति नून निश्चीयताम्।

यावदज्ञान तावदेव हि ससारः। ससारस्य सकल्पो भान वाऽविद्यापरपर्यायभूतया माययैव जायते। अर्थात् मायाया गुणक्षोभाद् ब्रह्मसत्तयैवाऽसदिद दृश्यभूत प्रपचात्मक जगत् सदिव प्रतिभासते। अत एव सदसद्भ्यामनिर्वचनीयत्वेनाऽस्य प्रमाणागम्यस्वरूपमिथ्यात्वावच्छिन्नस्य विच्छिन्नस्य जगतो मायिकत्वमाविद्यकत्वं च प्रोट्टङ्कित श्रीशङ्कराचार्यपादैः।

अस्मिन्नये मायाया अविद्यायास्तत्कार्यभूतस्य च जगतो नास्ति वास्तविकी सत्ता। अत एव च श्री आचार्यपादा आभासवाद कल्पनावाद चाऽभ्युपगतवन्तः। केवलमेवाऽद्वैत ब्रह्म सत् पारमार्थिक चास्ति। अस्माद् ब्रह्मणो भिन्न सर्वमेवाऽवस्तुभूतमाभासरूप कल्पनामात्र चास्तीति विज्ञेयम्। तथा चोक्तम्—

> जात्याभास चलाभास वस्त्वाभास तथैव च।
> अचलाचलमवस्तुत्व विज्ञान शान्तमद्वयम्[2] ॥
> कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया।
> स एव बुध्यते देवानिति वेदान्तनिश्चयः[3] ॥

---

१. विष्णुपुराणे
२. माण्डूक्यको० ४/४५
३ मां० का० २/१२

एतावता निर्वचनेन सर्वमेवेदं मिथ्याभूतमनिर्वचनीयं चराचरात्मकं जगदिदमतात्त्विकत्वात् अन्यथाभावरूपत्वादप्रामाणिकत्वादाभासरूपं भ्रान्तिमात्रं च सिद्ध्यति। तथा चोक्तम्—

"न सन्नासदिदं भ्रान्तिमात्रं विभासते"[१]

इत्येवं जगदाकारराशीनां स्थाणुस्पन्दवत् रज्ज्वावहिमयवच्च भ्रान्तिमात्ररूपत्वं सिद्ध्यति।

अत एव यतयो योगिनो वा विवेकशालिनो जना मायातत्कार्यपक्षं भ्रमान्धकारकुक्षिनिक्षिप्तं तत्स्वरूपं च तमोमयमेव विचार्य परीक्ष्य चाऽचिन्त्य-अतर्क्यं, निष्प्रपंच, ब्रह्मपक्षमेव समर्थयन्ति समाश्रयन्ति च। यतस्तस्य ब्रह्मणः स्वयं ज्ञानरूपत्वात् प्रकाशरूपत्वात् आनन्दात्मकत्वाच्च। इदमेव ब्रह्म स्वीयेन ज्ञानात्मकेनैकरूपेण सांसारिकजराजन्ममरणचक्रात्मकबन्धनतो विमोचयति। तथा चोक्तम्—

"ब्रह्मवेद ब्रह्मैव भवति"[२]
"ब्रह्मविद् ब्रह्मैव भवति"[३]

अस्याऽऽत्मानन्दस्य परब्रह्मपरमेश्वरस्य पुरस्तात् सकाशाद्वा सर्वेऽपि विषयानन्दास्तिरस्कृता भवन्ति। अनेनैव खल्वात्मज्ञानेन जन्ममृत्युजराव्याधिभवरोगतो नितान्तमात्यन्तिकी मुक्तिर्जायते। एतस्या मुक्तेरवाप्तये नान्योऽस्ति कश्चन मार्गः। तथा चोक्तम्—

"नान्यः पन्था विद्यतेऽयनाय"

अपि च—

"यथा वह्निर्महान् दीप्तः शुष्कमार्द्रञ्च निर्दहेत्।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहते क्षणात्"[४]॥

एवम्—

"देहे ज्ञानेन दीपिते बुद्धिरखण्डाकाररूपा यदा भवति।
तदा विद्वान् ब्रह्मज्ञानाग्निना कर्मबन्धं निर्दहेत्"[५]॥

---

१. मां० का० ३/४४/२७
२. बृहदारण्यकोप० ३/५/१
३. मुण्डकोप० ३/२/६
४. शिवधर्मोत्तरे
५. पैङ्गलोप० ४/११

तथा—

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"[1]

एवम्भूतमविद्यावत्कार्यभूतकर्मबन्धविध्वंसकारणीभूतमविक्रियात्मकमात्मज्ञानं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः श्रवणमननादिसाधनसम्पन्नश्च प्रमाता यतिरेव केवलमधिकारित्वेनाधिकर्तुं प्रभवतीति भावः।

अपि चोक्तवान् नन्दकपाणिर्देवकीनन्दनो भगवान् कृष्णचन्द्रः—

"ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति"[2]।

## मायाया महत्त्वम्

अस्ति केवलं ब्रह्मैव जीवेश्वरजगद्रूपेण प्रतीयमानो भासमानश्च। एकमेव ब्रह्मतत्त्वं द्रष्टुमिच्छन्तो विद्वांसो जनास्तन्नानारूपेषु पश्यन्ति। उक्तं च—

"एकं सद् विप्रा बहुधा वदन्ति"[3]।

तच्च ब्रह्मतत्त्वं नास्ति केवलं सत्तत्त्वमपि तु आनन्दतत्त्वं चित्तत्त्वं चापि तदेवास्ति। सांसारिके जीवने यदप्यस्ति प्रतीयमानमानन्दतत्त्वमविवेकशालिना तत्केवलमानन्दलेशमात्रम् आनन्दाभासमात्रं वैषयमेव विषयानन्दशब्देन व्याह्रियते व्यवह्रियते च।

द्विविधो ह्यानन्दः परमानन्दो विषयानन्दश्च। तत्र द्विविधानन्दमध्ये योऽस्ति ब्रह्मानन्दः स एव खलु परमानन्दशब्देनोच्यते। अपरश्चाऽऽनन्दो विषयाऽऽनन्दः स च संसाराऽऽनन्दः कथ्यते।

सर्वेऽपि प्राणिनो जीवा आनन्दाऽन्वेषणपरा एव खलु दृष्टिगोचरतां गताः सलक्ष्यन्ते। वास्तविकमानन्दं (परमानन्दं) प्राप्तुं समीहमानाः सन्तोऽपि ते ततःपराङ्मुखा एव तावताऽपि दृश्यन्ते। श्रुति, स्मृत्यादिषु सर्वत्रैव ब्रह्मण एवाऽऽनन्दरूपता प्रतिपादिता भवति। उक्तं च—

"अयमात्मा सच्चिदात्मो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः"।[4]

---

१. मुण्डकोपनि० २/२८

२. गीता ४/३९

३. ऋ० सं० १/४/१७

४ [illegible]

अयंच परमाऽऽनन्दः सविकल्पबुद्धिद्वारा गम्यो नित्यो मुक्तोऽद्वयानन्दः परमात्मरूपः। अस्यैव परमात्मतत्त्वस्य ज्ञानेन जरा, मरणादिरूपचक्रात्मकबन्धनतः सर्वथा मुक्तिं लभते।

विषयाणां विषयजन्याऽऽनन्दानां चैतेषां सर्वेषामेव कारणीभूता चास्तीयमविद्याऽपरपर्यायभूता माया। सत्त्वाऽसत्त्वादिरूपेण कथमपि निर्वक्तुमशक्यत्वेन मायायाः सर्वथाऽनिर्वचनीयत्वमेव निश्चीयते। परमानन्दस्वरूपस्य परब्रह्मपरमेश्वरस्याऽऽश्रयीभूतेयं महाशक्तिस्वरूपा माया दृष्टिगोचराऽगोचरीभूतं सृष्टिरूपं जगदात्मकमनित्यं कृत्यं विधत्ते। यथा दुग्धस्य विकारसंसर्गमापन्नं दुग्धमपि दधिरूपेण परिणतं जायमानमनुभूयते। तथैव प्रकृतेपि सत्वगुणप्रधानभूताऽनिर्वचनीयेयं भगवदाश्रिता माया ब्रह्मसंसर्गवशात् जगद्रूपेण परिणमते।

समस्तस्यापि सचराचरस्याऽस्य जगतो जननीयं माया ब्रह्मणः सान्निध्यमवाप्यैव विश्वमिदं सृजति, पालयति, संहरति च। अत एव सर्वमपि द्वैतलक्षणलक्षितं भेदात्मकं मिथ्याभूतं सर्वमपि जगदात्मकं कार्यं मायामात्रमेव अर्थात् मायाकल्पितमेव। उक्तं च—

मायामात्रमिदं द्वैतमद्वैत परमार्थतः।"[1]

अस्या भगवतो महाशक्तिभूतायाः प्रभूताया मायायाः विशेषतो महत्वमस्माकं शोधप्रबन्धस्य द्वितीयेऽध्याये विलोक्यताम्।

## मायाया परिभाषा

श्रीशङ्कराचार्यपरवर्तिनो दार्शनिकाः श्रीवाचस्पतिमिश्रप्रभृतयो भूयांसो विद्वांसोऽविद्यामाययोः परिभाषां भेदाऽभेदसमन्वयावच्छिन्नामित्थं कृतवन्तः।

श्रीवाचस्पतिमिश्रमहोदया अविद्याया ब्रह्माश्रितत्वमनङ्गीकृत्य जीवाश्रितां तां वदन्ति। यथोक्तम्—

"नाऽविद्या ब्रह्माश्रया किन्तु जीवे"।[2]

अद्वैतचन्द्रिकाकारः श्रीसुदर्शनाचार्यश्च मायाऽविद्ययोः परिभाषा सुस्पष्टीकुर्वन् ब्रूते यत् सच्चिदानन्दस्वरूपस्य भगवतो महाशक्तिरूपेयं माया परमात्मज्ञानेन बाधिता भवतीति नेयं सती। क्रियाकारकत्वधर्मावच्छिन्नतया चाऽसतीत्यपि न वक्तुं शक्यते।

द्वैविध्येन विभजमाना विशुद्धसत्वप्रधाना, मलिनसत्वप्रधाना चेयं माया क्रमशः परमात्मजीवात्मनोरुपाधिरूपतां भजते।

तत्रापि विशुद्धसत्वप्रधानां स्वशक्तिभूतां तां मायां परब्रह्मपरमेश्वरः स्वयं स्ववशीकृत्य सन्तिष्ठमानोऽस्तीति पौनःपुन्येन घोषयति वेदान्तकेसरी।

---

१. छां० उ० ७/२४/१

२. भामती पृ० ६५

एतद्विपरीता चेयं मलिनसत्त्वप्रधाना माया स्वयं जीवं स्ववशीकुर्वाणा सती तमहर्निशमनिशं भ्रामयति नर्त्तयति, सम्मोहयति, विषादयति च।

अतो जीवः सर्वदाऽविद्यामलिनसत्त्वप्रधानो मायाकृतं पारतन्त्र्यमेवाऽनुभवतीति मदीयः सुदृढो विश्वासोऽनुभवश्च ; विषयश्चाय विशदीकृतोऽद्वैतचन्द्रिकायां. तत्र मायाया अवान्तरशक्तिभूताऽऽवरणविक्षेपशक्तीनां विवेचनेन स्वरूपं सुस्पष्टीकृतं भवति।

तात्त्विकदृष्ट्या विचार्यमाणे खल्विदं माया "अतस्मिंस्तद्बुद्धिरूपैवेति सर्वासां मायापरिभाषाणामत्रैव पर्यवसानं भवतीति भावः ।

## मायाया ईश्वरेण सम्बन्ध.

माया उपहितत्वसम्बन्धेनेश्वरे ब्रह्मणि वर्तते। अत एव मायोपहितं ब्रह्मेति गीयते। अत एव खलु मायेश्वरयोरुपाध्युपधेयभावसम्बन्धोऽङ्गीकृतो वर्तते। सा च माया ईश्वरे नहि सलग्ना। यथा कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र नभो न कर्णशष्कुल्या संलग्नं भवति। तथैव मायाऽवच्छिन्नं चैतन्यमित्यत्रापि चैतन्यं मायया संलग्नं न भवति। असंलग्नत्वादेवेश्वरो न मायावशगो जीववत्। किन्त्वीश्वरो मायां नियमयति। उपाधिर्नाम कार्यानन्वयित्वे सति व्यावर्तकत्वे सति वर्तमानत्वम्। यथा कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् इत्यत्र कर्णशष्कुलिरितरान् व्यावर्तयति स्वयं च विद्यते, कार्येण सह नान्वयश्च। एवमेव मायापि तदानीं विद्यते इतरांश्च व्यावर्तयति, ईश्वरेण सह मायायाः अन्वयोऽपि नास्ति। निर्गुणमेव ब्रह्म यदा मायावच्छिन्नं भवति तदा ब्रह्म सगुणं जायमानमीश्वरसंज्ञां लभते।

यदा तु निर्गुणमेव ब्रह्म मायोपाधिकं जायते तदा ईश्वरः साक्षी भवति। एक एव हि ईश्वरो मायानिष्ठसत्त्वप्राधान्यात्, मायानिष्ठरजःप्राधान्यात् एवं मायानिष्ठतमःप्राधान्याच्च विष्णुसंज्ञां ब्रह्मसंज्ञां, महेश्वरसंज्ञां च लभते ।

तस्मादीश्वरस्येश्वरत्वे मूलकारणं मायैव। मायीश्वरो विश्वं सृजति। मायां विना परमेश्वरस्य स्रष्टृत्वं नहि कदापि भवितुमर्हति।

परमेश्वरस्येयं माया लौकिकस्य मायाविनः इव परतन्त्रा विद्यते। ईश्वराश्रितत्वाच्चेश्वराधीनाऽस्ति। स्वकीयमायाशक्त्यैवेश्वरो जगत् सृजति। ईश्वर एव जगतो निमित्तोपादानकारणद्वयं वर्तते। यथा रज्जुः सर्पाधिष्ठानम् तथैवेश्वरो जगतोऽधिष्ठानमस्तीति भावः।

## मायाजीवयो सम्बन्धः

मायाजीवयोरवच्छेद्यावच्छेदकभावरूपः सम्बन्धो वर्तते। मायाऽवच्छेदिका, जीवश्चास्ति खल्ववच्छेद्यः। माया विद्यते तत्र विशेषणम्, चैतन्यं च विशेष्यम्। विशेषण

नाम कार्यान्वयित्वे सति व्यावर्तकं भवति। यथा रूपविशिष्टो घटो नित्य इत्यत्र रूपं विशेषणम्, घटो विशेष्यः। रूपस्य हि घटेन सहान्वयोऽपि विद्यते, रूपं चाऽरूपं व्यावर्तयति। तस्माद् रूपं विशेषणं भवति। एवमेव प्रकृते माया विशेषणं चैतन्यं चास्ति विशेष्यम्। जीवेन सहाऽविद्यापरपर्यायभूताया मायाया अन्वयोऽस्ति। मायायाः सम्बन्धादेव च जीवो मायावशीभूतो भवति। एवमीश्वरसंज्ञाया जीवसंज्ञायाश्च मूल-कारणमपि मायैव चास्ति।

## योगवासिष्ठे मायास्वरूपम्

यथा दोषावच्छिन्नस्य दुर्दृष्टिसम्पन्नस्य पुरुषस्याऽविद्यावलादेव द्विचन्द्रत्व-प्रकारको भ्रमानुभवो जायते। यथा वा शुक्तौ तथाविधस्य पुरुषस्य रजतत्वप्रकारक-भ्रमानुभवोऽपि सर्वथाऽनुभवसिद्ध.। यथा वा मन्दान्धकारे तथाविधस्य पुरुषस्य रज्ज्वां सर्पत्वप्रकारिकानुभूतिर्भवति।

तथैव जीवोऽपि सत्याऽसत्यरूपेणाऽऽत्मनि अनात्मरूपेण भ्रान्तिमनुभवति। एतस्याश्च भ्रान्तेः प्रधानकारणीभूताऽविद्यापरपर्यायस्वरूपा मायैवाङ्गीकृता वर्तते योगवासिष्ठे सिद्धान्तेऽपि। इयमेव चाऽविद्यापरपर्यायभूता मायासंसारप्रपंचाद्यनुवर्तनं विधत्ते तत्संस्पर्शं जनयति = प्रापयति। तथाचोक्तम्—

> "एषा ह्यविद्या कथिता मायैषा सा निगद्यते।
> परमेतत्तवज्ञानं संसारात्रिविषप्रदम्"[1]॥

परब्रह्मणः परमेश्वरस्य ज्ञानादेवाऽज्ञानापरपर्यायभूताविद्या = माया पुनर्नानुभव-पथमायाति; येन संसारात्रिविषयकज्ञानविषयप्रदा सा भवेत्।

येषां च नास्ति ब्रह्मणो ज्ञानं तेऽनेकचित्तविभ्रान्तिशीलाः कामभोगप्रसक्तिलीना अशुचिव्रतपरिपालनप्रवीणास्ते स्वकीयदोषाधिक्यादेव भूयो भूयो जन्मनि जन्मनि प्रतिजन्माप्यासुरीमेव योनिमापन्नाः सन्तो दुःखमेवानुभवन्ति, पौनः पुन्येन नरकेषु पतन्ति च। उक्तं च—

> संसारबीजकणिका यैषाऽविद्या रघूद्वह?
> एषा ह्यविद्यमानैव सतीव स्फारतां गता[2]॥

अपि च—

> मनोराज्यमिवाकारभासुरा सत्यवर्जिता।
> सहस्रशतशाखापि न किंचित्परमार्थतः[3]॥

---

१. योगवासिष्ठे ५/१३/८६
२. तत्रैव, ३/११३/११
३. तत्रैव, ३/११३/३३

## मायाऽविद्ययोराश्रयकार्यविवेचनम्

परमात्मनो व्यापकस्यानन्तशक्तिशालिनो जगन्नाथस्य वाचाविश्वनाथस्य विशेषतो मन्नाथस्य देवाधिदेवस्य महादेवस्य गुणगणपरिगणनपरायणपरैः शास्त्रानुशीलनैकस्वभावैः शास्त्रकारैः संक्षेपेण ब्रह्ममायापदाभिधेयचेतनाऽचेतनभेदेन पदार्थानां द्वैविध्येन विभाजनं कृतमिति सर्वेऽपि जानन्ति।

तत्र मायाब्रह्मभूतचेतनाऽचेतनयोर्मध्ये चेतनतत्त्वभूत आत्मा जीवोऽपीति स एव भोक्ता कर्त्ता चेति। तदतिरिक्तश्चाऽचेतनो जडभूतो भोग्यपदार्थः, स एव च संघातपदाभिधेयः।

संघातभूतस्य सर्वस्यैव जडवर्गस्य परप्रयोजनकत्वं दृष्टमनुभूयते चापि। अर्थात् सुखदुःखाद्यनेकधर्मात्मकतया भासमाना ये केचन सन्ति स्थावरादिब्रह्माण्डान्ताः संघातभूताः पदार्थास्ते सर्वेऽपि पदार्थत्वेनैवाऽनुभूता भवन्ति, चेतनस्य च भोक्तुः प्रयोजनकाश्च दृष्टाः।

तत्र योऽस्ति संघातातिरिक्तो संघातभूतश्चेतन. स एव खल्वस्ति आत्मा जीवः। यमपेक्ष्य सर्वं भोगप्रयोजनकं शरीरेन्द्रियादिकं स्थावरादिब्रह्माण्डपर्यन्तं भोग्यभूतं भवति संहतशयनासनादिवत्।

शय्यासनादयः संघातभूताः प्रभृताः पदार्थाः संहतशरीरप्रयोजनकत्वेनानुभूयन्ते इति चेदुच्यते न तु जडवर्गभिन्नो यः कश्चित् परश्चेतनभूतजीवस्वरूपं आत्मा (जीवात्मा)तदर्थत्वेनापीति संघातत्वं संघातान्तरमेव परं विधेयमनुमापयेत्। अनुमानं च शरीरेन्द्रियादयः संघाता. परार्था संघातत्वात् इति चेदेवमेव संघातत्वाविशेषात् तस्यापि तादृशपरार्थत्वमेव मन्तव्यम्। एवं क्रमेण पुनस्तस्यापि तथैवेवं क्रमेणाविश्रान्तिदोषदर्शनात् अनवस्थारूपो महान् दोष प्रसज्येतेति संघातातिरिक्त एव कश्चिदात्मरूपश्चेतनपदार्थ. खल्वङ्गीकार्य.। स एव पदार्थानां वेत्ता, स एव च पदार्थविषयकानुभवकर्त्ता स एव च तद्भोक्तेत्यादिरूपेण शरीरेन्द्रियाद्यतिरिक्तो जीवात्मतत्त्वभूतश्चेतनोऽवश्यमेवाङ्गीकार्योऽनन्यगतिकत्वात्। तथा चोक्तम्—

> यद्यत् पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत्।
> यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत्॥
> लभते नासया यद्यत्तत्तदात्मेति भावयेत्।
> त्वचा यद्यत् स्पृशेद् योगी तत्तदात्मेति भावयेत्[1]॥

---

1. योगतत्वोप० ६९-७१

एवं च तत्तद्घटादिविषयाणां ज्ञाता, शब्दश्रवणकर्त्ता, गन्धानुभवकर्त्ता रसविषयकज्ञानसम्पादयिता, स्पर्शानुभवकर्त्ता इत्यादिरूपेण कर्त्तृत्वभोक्तृत्वादि-धर्मावच्छिन्नः समस्तकार्यसम्पादनपरोऽयमेवास्ति चेतनतत्वभूतो जीव आत्मा।

## उपाधिभेदभेदावच्छिन्नो जीवः

"अनाद्यनिर्वचनीयाऽविद्योपधानभेदोपाधिकल्पितो जीवः, न तु वस्तुतः परमात्मनो भिद्यते। तत्तदुपाध्युद्भवाभिभवाभ्यां च उद्भव इव अभिभूत इव प्रतीयते"[1]।

भामती इति ग्रन्थेन श्रीमिश्रपादा उपाधिभेदभेदावच्छिन्न एवास्ति जीवो न तु वास्तविको भेदो वर्तते जीवे, यतः परमात्मजीवात्मनोरैक्यात्।

अविद्योपाध्यवच्छिन्नं ब्रह्मं वास्ति जीवः अन्तःकरणावच्छिन्न ब्रह्म जीव इत्यपि निरूपयितुं प्रस्फोरयितु वा शक्यते। उक्तं च—

*"जीवो हि अविद्यावेशवशाद् देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यह-मित्यविद्यया कृतं दुःखयोगमभिमन्यते"*[2]।

इत्थं चाऽज्ञानोपाध्यवच्छिन्नो जीवात्मा एव दुःखोपभोगक्षमः सर्वानर्थयोग-समन्वितः सर्वाऽनर्थकारणीभूतश्चास्तीति विवेचितम् आचार्यपादेन—

श्रीधर्मराजाध्वरीन्द्रोऽपि वेदान्तपरिभाषायां "अन्तःकरणावच्छिन्नं चैतन्यं जीवः"[3]।

इत्येवंरूपेण स्वीयं मतं दर्शितवान्।

तात्विकदृष्ट्या विचार्यमाणेऽयं जीवो विभुनित्यशुद्धबुद्धमुक्तस्वभावः। कर्मणा सम्पादकत्वं सुखदुःखयोश्चोपभोगक्षमत्वमप्यस्मिन्नेव जीवात्मनि भोगायतनभूतशरीरा-वच्छिन्ने भवितु प्रभवति।

स्थूल, सूक्ष्म, कारणशरीरवशादेव खल्वयं जीवःप्राज्ञ, विश्व, तैजस, संज्ञासंज्ञितो ऽपि भवति।

तथाऽन्नमय, मनोमय, प्राणमय, विज्ञानमय, आनन्दमयेष्वपि पंचविधेषु कोशेष्वस्यैव जीवात्मनः समुपलब्धिर्जायते। एवं स्वाऽज्ञानरूपोपाधिवशादेव चायं जीवः शरीरेन्द्रियादिना भेदभावनाभावितः सन्नेव शारीरिकमानसिकप्रभृतिसुखदुःखादीनां समनुभविता समुपभोक्ता चापि जायते।

---

१. ब्रह्मसूत्र ३/२/६

२. ब्र० सू० शा० भा० २/३/४६

३. वेदान्तप० पृ० ६८

"अहं नित्यशुद्धबुद्धमुक्तस्वभाव परमानन्दस्वरूपम् अनन्तमद्वयम्—ब्रह्मास्मि "इत्याकारकाऽखण्डब्रह्माकाराकारिता चित्तवृत्तेरुदयो जायते। तदानी तादृशवृत्त्युदयेनाऽज्ञानरूपोपाधिविगमे ब्रह्मसाक्षात्कारे जाते स्वस्वरूप ब्रह्मत्वमधिगच्छति।

इत्थ चाऽविद्योपाधिभेदभेदावच्छिन्नोऽय जीवः खलु समयभेदेन हिरण्यगर्भ, देवताप्रभृतिपदजन्यबोधविषयतावान् भवतीति, सर्वथा शास्त्रप्रसिद्धिरियम्।

स चाय जीवो नास्ति परमाणुपरिमाणवान् नाप्यणुपरिमाणवान् नाऽपि च मध्यमपरिमाणवान् अपि तु विभुपरिमाणवान् चास्त्ययं जीवः। अणुत्वादिक सर्वमप्यौपचारिकमेव व्यवह्रियते। तथा चोक्त भाष्ये—

"ब्रह्मणः प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम्। परस्य च ब्रह्मणो विभुत्वमाम्नातम्। तस्माद् विभुर्जीवः"।

## सगुणं ब्रह्म

एकदा चूडामणीकृतविधुर्भगवान् शङ्करोऽनाथनाथो बाबाविश्वनाथः सुशीतलवटच्छायाया व्याघ्रचर्मासनासीन आसीत्। तदानीमेकान्ते तादृशाऽऽसनासीनमानन्दकानने सन्तिष्ठमान भगवन्त परमेश्वर महादेव देवाधिदेव विलोक्य गिरिराजकन्या जगज्जननी भवानी स्वयमनिमन्त्रिता सत्यपि तत्पादयोः प्रणता बभूव।

भक्ताना भक्तिवर्धनाय आर्त्तानामार्त्तिनाशनाय च सौकर्यसाधनाऽन्वेषणपरो दिक्पटधरो भगवान् भूतभावनस्तदीय मानरहित प्रेमातिशय दर्श दर्श ता गिरिराजनन्दिनी सम्यक् सत्कुर्वन् सत्पार्श्वासन दत्तवान्।

गिरिराजजायामातुः पार्वत्या अन्तःकरणे—हृदये पूर्वजन्मत एवैको महान् सशयो हृदयग्रन्थिरूपेण आसीत्।

तादृशसशयनिवृत्तिस्तेषा दृष्टाऽदृष्टसर्वविषयविदुषा जगन्नियन्तृणा सर्वशक्तिमता प्रभूणा लेखिकानाथाना बाबाविश्वनाथपादाना सन्निधौ पूर्णरूपेण नितान्तमावश्यकीति तस्या निवृत्तेः सर्वथा औचित्यमङ्गीकृतम्।

तदनन्तर प्रभोरादेश समवाप्य जगज्जनन्या तया स्वीय- प्रश्नस्तेषा पुरस्तात् समुपस्थापितो यद् व्यापक, विरज, अज, अकल, अनीह, अद्वैत, प्रभृतिनामधेयैः सम्बोध्यमानस्याऽनन्तशक्तिशालिनोऽनन्तगुणगणयुतस्य तस्य भगवतः परमेश्वरस्य कथमवतरण सम्भवतीति निरूप्यताम्। यथोक्तम्—

---

"ब्रह्म जो व्यापक विरज अज अकल अनीह अभेद ।
सो कि देह धरि होइ नर जाहि न जानत वेद"[1] ॥

उपनिषत्सु स्मृतिग्रन्थेषु अन्यत्रापि च तस्य निर्गुणस्य निर्विशेषस्य ब्रह्मणो वर्णनं सम्यक् श्रुतमवगतंच । किन्तत्रास्ति कौशल्यानन्दवर्धनस्याऽयोध्याचन्द्रस्य भगवतो रामचन्द्रस्य कोऽपि विशेषः ?

अत्रेदमेव समाहितवान् शङ्करः । हे गिरिराजनन्दिनि ! भगवतो विषये सर्वेऽपि प्रश्नाः कल्याणकारिण एव भवन्ति ।

हे उमे ! तस्याऽपङ्कस्य निर्गुणस्य ब्रह्मणो विषये अर्थात्तस्य ब्रह्मणो यथार्थस्वरूपस्य यथार्थनिर्देशविधाने वेदा अपि मौनमालम्बमाना एव सन्तिष्ठन्ते । अत्र विषये गोस्वामिश्रीतुलसीदासेनापि सम्यगुक्तम्—

"निर्गुन रूप सुलभ अति सगुन न जाने कोई ।
सुगम अगम नाना चरित सुनि मुनि विभ्रम होई"[2] ॥

इत्थं च कथंचित् निर्गुणब्रह्मणो रूपस्य विचारगम्यत्वस्वीकारेऽपि सगुणब्रह्मणो रूपस्य विचारगम्यत्वं नाङ्गीकर्त्तुं शक्यते । तस्य सगुणब्रह्मणो रूपस्य विचारगम्यत्वं प्रेमभावनां तदीयभक्तिवासना चान्तरेण नहि सम्पादयितुं शक्यते ।

"मायया मोहितं जगत्"[3]

इति श्रुतिदर्शितदिशाऽज्ञानविद्यापरपर्यायभूतमायाघटकीभूतरजोगुणप्रधानभावैस्तथा तयाविधतमोगुणप्रधानभावैर्भावितान्तःकरणानां विषयभोगलाम्पट्यधर्मावच्छिन्नानां जनानां तस्मिन् सगुणे ब्रह्मणि प्रेमभावनायाः भक्तिभावनायाश्च समुदयः कथं स्यात् ?

अपि च—

इन्द्रियाश्वामजय्याभ्यां द्वाभ्यामेव हृतं जगत् ।
अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि"
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति"[4] ॥

इति न्यायेनापीदमेवाऽऽयाति यत् मायाजालग्रस्तत्वेन तथा तत्परिवारभूतेन्द्रियादिवशीभूतत्वेन च मानवस्तस्य सगुणस्य ब्रह्मण शरणागतिमन्तरा प्रेमभावनाभावितमार्गं भक्तिभावनाभावित च मार्गं नैव स्वायत्तीकर्त्तुं प्रभवति ।

---

१. तुलसी राम०
२. तत्रैव,
३. कृष्णोप० १०
४. गीता शङ्करानन्दी टीका ७/१३

अतो यावत्कालपर्यन्तं तत् प्रापकतादृशसाधनचतुष्टयं नाऽवाप्यते तावता कालेन तस्य सगुणस्य ब्रह्मण स्वरूपं परिज्ञातु =परिचेतु नहि शक्यते। स्वरूपपरिचयात्मक-ज्ञानमन्तरा च प्रेमभावना भक्तिभावना च कुत्र स्यात्?

वेदास्तु स्वयं श्रीभगवतो दर्शनस्य तस्य च प्रेम्णः सदाऽऽकाङ्क्षां प्रकुर्वन्ति।

अत एव भूपालचूडामणेर्मर्यादापुरुषोत्तमस्याऽयोध्याचन्द्रस्य भगवतः श्रीराघवेन्द्रस्य राज्याभिषेकावसरे चत्वारो वेदा "बन्दीवेषं" प्रभो स्वरूपस्य विशद विवेचनं विदधाना. सन्तोऽन्ते वदन्ति।

"जे ब्रह्म अजमद्वैतमनुभवगम्य मन पर ध्यावहिं।
ते कहहुं जानहु नाथ हम तव सगुन जस नित गावहिं॥
करुणायतन प्रभु सद्गुनाकर देव यह वर मागहिं।
मन वचन कर्म विकार तजि तव चरन हम अनुरागहिं[1]॥

अपि च यथा जलं हिमरूपेण परिणतं भूत्वापि जलमेवास्ति जलमेवाऽवतिष्ठते, अर्थात् जलत्वावच्छिन्ना स्वस्वरूपता न जहाति। तत्र जले नहि काऽपि विकृतिः समागच्छति।

तथैव निर्गुण ब्रह्मापि सगुणरूपावच्छिन्नं भवति। तत्र निर्गुण ब्रह्म तथात्वेऽपि सर्वथा विकृतमेव सत् सन्तिष्ठते। उक्तं च—

जो गुनरहित सगुन सोई कैसे।
जल हिम उपल विलग नहिं जैसे[2]॥

अतो हे शिवे! योऽस्ति अयोध्याचन्द्रभूषणभूतः सगुणस्वरूपो ब्रह्मराम, स एव सच्चिदानन्दैकरसस्वरूपं परं ब्रह्म वर्तते इति गीयते।

अथवा तुल्यवित्तिवेद्यतया इदमपि व्याहर्तुं शक्नुमः, यच्चास्ति निर्विशेषं निर्विकारं, निरञ्जनं, शान्तम्, अनन्तं ब्रह्म तदेवास्ति, सच्चिदानन्दविग्रहवान् अयोध्याचन्द्र कौशल्यानन्दवर्धनो भगवान् रामचन्द्रः।

हे शैलसुते! यदिदमस्ति ते कथनं यन्निर्गुणब्रह्मभूतः प्रभूतो रामः कथं शरीरं धारयति? इदमपि ते कथनं नहि समीचीनं प्रतिभाति। यत इदमपि ते कथनं सगुणब्रह्म-भूतस्य रामस्य शरीरविषये स्वरूपाऽनभिज्ञत्वमेव प्रकाशयति।

नो चेत्त्वामहं पृच्छामि किं सगुणस्य ब्रह्मणो रामस्य शरीरं प्राणिमात्रवत् पञ्चतत्त्वनिर्मितं पाञ्चभौतिकमस्तीत्येव जानासि त्वम्?

---

१. तुलसीकृत राम०
२. तत्रैव,

हे गिरिराजनन्दिनि उमे ! भगवतो रामस्य देहदेहिनोर्नास्ति कोऽपि भेद इति तदीयो देहोऽपि सच्चिदानन्दविग्रह एवेति नात्र कश्चन विचिकित्सावसरः। श्रीगोस्वामिनाप्युक्तम्—

चिदानन्दमय देह तुम्हारी।
विगत विकार जान अधिकारी।[1]

## प्रमाणान्तरेणापि मायाकृतं सगुणरूपं वर्ण्यते

सच्चिदानन्दं भगवन्तं परमेश्वरं श्रीकृष्णचन्द्रं कुन्ती स्तुतिरूपेण प्रार्थयति यद् भगवन् ? भवानजः सन् कथं पुनर्जन्म गृह्णाति स्वयमहं विदाङ्कर्तुं कामये ।

अस्य प्रश्नस्य केचन महापुरुषा इदमेवोत्तरं प्रयच्छन्ति यथा मलयाचलस्य यशोऽभिवृद्धये चन्दनं स्वयमेव प्रकटीभवति तत्राऽचले तथैव स्वीयप्रियभक्तस्य राज्ञः श्रीयदोर्यशो विस्तारयितुमेव भवतां तत्रावतरणं जातमित्यहं मन्ये श्रीभागवत-प्रामाण्यानुसारम् ।

अपरे च पुनः वसुदेवस्य देवक्यां पूर्वस्मिन् जन्मनि सुतया, पृश्निरूपेण वररूपेण याचितो भवान् वरस्वरूपपुत्ररूपेण तत्राऽभ्ययात् । अत एव भवानजोऽपि सन् विश्वकल्याणकरणाय दैत्यानां च विनाशाय पुत्ररूपेण तत्रावतरितवान् इत्यत्रापि तस्यैव प्रामाण्यमस्ति ।

एवमन्ये पुनस्तत्त्ववेत्तारो भगवदवतरणे इदमेव कारणं समुपस्थापयन्ति यद-विद्याकामकर्मभिर्ये जनाः सन्ति परतः क्लेशमवाप्नुवानास्तेषा भगवद्भक्तिभावनाभा-वितान्तःकरणानां कृते श्रवणस्मरणसम्पादनयोग्यलीलाविधानविचारत—एवावतरति भक्तिभावप्रवणान्तः करणान् तान् परित्रातुं तदीयं क्लेशादिकं निराकर्तुं धर्ममर्यादां च संस्थापयितुमिति । उक्तं च—

"केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ।
यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम् ॥"

अपरे च पुनस्तत्रैव—

वसुदेवस्य देवक्यां पुत्रतां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥[2]

---

१. तुलसी रामा०
२. श्रीमद्भाग० १/८/३२-३३

अपि च पुनस्तत्रैव—

भारावतारणायान्ये भुवो नाव इवोदधौ ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥
भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन[1] ॥

विशदीकृतश्चायं विषयः पचमाध्याये सगुणब्रह्मनिरूपणप्रकरणे । अपरे च पुनः परमात्मन ईक्षणमेव—ज्ञानमेव भगवतोऽवतरणकारणं करणं च कथयन्ति । यथोक्तम्—

"तदैक्षत बहुस्यां प्रजायेयेति"
आत्मा वा इदमेकमेवाग्र आसीन्नान्यत्
किंचनमिषत् स ऐक्षत् लोकान्नु सृजा[2]
इत्यादिना स्वीयं भावमाविर्भावयन्ति दर्शयन्ति च ।

एके च पुनस्तस्यैव भगवतो रमारमणस्य रमणेच्छैवाऽवतरणकारणं निरूपयन्ति । तथा चोक्तम्—

"स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्"—
"एको ह वै नारायण आसीत न ब्रह्मा नेशानो
नेमे द्यावा पृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो
न सूर्यः स एकाकी न रमते[3]

इत्यादिश्रुतिभिरपि भगवतो राधारमणस्यऽनन्तशक्तिशालिनः परमात्मनोऽवतरणे रमणेच्छैव मुख्यं कारणमिति प्रागुक्तमेव प्रस्फोरयन्ति । अपि च भागवतेऽपि—

न ते भयस्येश ? भवस्य कारणम्—
विना विनोदं बत तर्कयामहे[4] ।
यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि[5] ।

१. श्रीमद्भाग० ३४-३५
२. छा० उ० २/३/१२
३. बृहदार० उ० २/२/१५
४. श्रीमद्भा० १०/२/३९
५. तत्रैव १०/४०/१६

इत्थं च ज्ञानशक्ति, इच्छाशक्ति, क्रियाशक्तीति शक्तित्रयावच्छिन्नस्य तस्याऽनन्तस्याऽनन्तगुणगणयुतस्य परमेश्वरस्याऽवतरणे इच्छाया. प्रधानकारणतया तस्याश्च सविषयकत्वनियमेन प्रकृते कदाचित् कुतश्चित् रमणविषयकत्वेन, स्वविषयकत्वेन, कदाचिद् भूभारदूरीकरणविषयकत्वेन, क्वचिच्च ऋषिमहर्षीणां संरक्षणविषयकत्वेन एवमितोऽतिरिक्तविषयकत्वस्यापि तत्राऽक्षुण्णतया देशकालानुसारमेषु अन्यतम-विषयविषयिणीमिच्छामाश्रित्य प्रादुर्भवति भक्तकामकल्पद्रुमः परमात्मा ।

## आभासवादः

आभासशब्द.—'आङ्' उपसर्गाद् 'भास्' धातोः अच् प्रत्ययो भूत्वा निष्पन्नो भवति । तस्य च सन्ति बहवोऽर्थाः शास्त्रेषु समुपलभ्यमानाः । ते च यथा:—

१. निग्रहस्थानम् आभासशब्दार्थः

२. भ्रमविषयीभूतः पदार्थ आभासशब्दार्थः

३. अप्रमाज्ञानकारणीभूतोऽपि दोषस्तथाविध एव,

४. क्वचित् प्रतिकूलभूतोऽर्थोऽपि, यथा तर्काभासः, प्रमाणाभासः ।

५. क्वचिच्च हेतुरूपो दोषः ।

६. उपाधिसादृश्येन भासमानं प्रतिबिम्बरूपमर्थं तथाविधं वदन्ति वेदान्तिनो दार्शनिकाः ।

७. एवम् आकृतिः छायापुरुषः, इत्यादयोऽपि बहवोऽर्था आभासशब्दजन्य-बोधविषयतावन्तो भवन्तीत्यप्यन्ये दार्शनिकाः प्रोद्घुष्यन्ति ।

प्रकृते चाऽन्यतमाऽऽभासशब्दार्थमध्ये कोऽयमाभासशब्दार्थः सग्राह्य इत्याशङ्का मायावादिवेदान्तिमतमाश्रित्यैव समाधीयते । तथाहि—

अथ चाभासवादो वार्तिककारसम्मतत्वेन समाद्रियते । तत्र स्वीयमभिप्रायं प्रदर्शितवतो वार्तिककारस्येदमेवास्ति तात्पर्यं यद् अन्यऽसम्बन्धेनान्यत्र भासमानत्वमेवाऽऽभासः । यथा जपाकुसुमसान्निध्येन स्फटिकमणौ रक्तिमाया आभासमानता स्फुटमनुभूयते ।

प्रकृते चाऽज्ञानरूपोपाध्यवच्छिन्न आत्मा अर्थात् आवरणरूपाऽज्ञानरूपोपाधिता-दात्म्यावच्छिन्न आत्मा स्वीयचिदाभासलक्षणलक्षिता विवेकरूपकारणवशात् अन्तर्यामी, साक्षी, जगत्कारणम्, ईश्वर इत्यादिशब्दैः सम्प्रोच्यते ।

एवं बुद्धिरूपोपाध्यवच्छिन्नः सन् बुद्धितादात्म्यापन्नो बुद्धिगुहायाञ्च सन्तिष्ठमान-श्चेतनतत्त्वभूतो जीवस्वरूप आत्मा स्वीयचिदाभासाऽज्ञानेन स्वयं कर्तारं भोक्तारं प्रमातारं चानुभवति ।

तात्त्विकदृष्ट्या विचार्यमाणे स च जीवस्वरूप आत्मा सर्वथा चास्त्यद्वितीय-तत्वभूत 'एकमेकमेवाऽद्वितीयं ब्रह्म नेह नानास्ति किंचन" "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" "न तु तद्द्वितीयमस्ति" ।

इत्यादिश्रुतिवाक्यतो नानात्वनिषेधपरत्वेन यथार्थतः पारमार्थिकदृष्ट्या स्वगत-भेद, सजातीयभेद, विजातीयभेदत्रयराहित्यावच्छिन्नः सन्नेव अन्तर्यामित्व, साक्षित्व, जगत्कारणत्वादिकं कल्पितोपाधिभिर्व्यवह्रियते व्याह्रियते च ।

स चोपाधिरज्ञानलक्षणलक्षिता विद्यापरपर्यायभूतो मायारूप एव । स च कल्पितो भवतु सत्तादात्म्यापन्नो वा भवतु विचारान्तरमिदं नात्र विचार्यते । तच्चाज्ञानमनादि मिथ्याभूतं च ।

एतदज्ञानोपाध्यवच्छिन्नश्चेतन एवाज्ञानरूपोपाधौ भासमानो भवति येन चराचरात्मक जगदिदं तदात्मको वा प्रपंचो दृष्टिगोचरतां गच्छति ।

अज्ञानरूपोपाधौ फलितश्चिदाभास उपाध्यन्तर्गतत्वादेव खल्वन्तर्यामीति संज्ञां लभते ।

अज्ञानरूपोपाधिः स्वयं साक्ष्यभूतस्तदपेक्षया तादृशोपाध्यवच्छिन्नश्चेतन आत्मभूतो नियन्ता साक्षीति च व्यपदिश्यते शास्त्रेषु ।

मायापरपर्यायभूतस्याज्ञानोपाधेर्जगद्रूपेण परिणामस्तदैव जायते यदा तस्मिन्नु-पाधौ चिदाभासो भवति, जगन्निष्ठकार्यतानिरूपिता या चिदाभासनिष्ठा कारणता तादृशकारणतात एव चेतनभूत आत्मा जगत्कारण भवति । इदमत्रावधेयम्—चिदात्मा एक एवाऽस्ति परन्तु अज्ञानस्य कार्यभूतासु नानात्वेन भासमानासु बुद्धिषु नानाविधा एव चिदाभासा जायन्ते । तैश्च नानाविधैश्चिदाभासैर्विवेकाऽग्रहनिबन्धनवशादेव चिदात्माऽपि नानात्वेन प्रतीयमानो भवति । "एकोऽहं बहु स्याम्" इत्यस्याः श्रुतेस्तत्र प्रामाण्यदर्शनात् ।

अज्ञानगतचिदाभासा विवेकाग्रहनिबन्धनवशादेव चिदात्मा यद्यपि साक्षी, अन्तर्यामी, जगत्कारणम् ईश्वर इत्यादिशब्दैरवश्यं व्यवह्रियते ।

तथापि चिदात्मा प्रागुक्तसाक्षीत्यादिशब्दावल्या मुख्यभूतो वाच्यीभूतोऽर्थोऽस्ति, लक्ष्यीभूतो वार्थोऽस्तीति मा व्यज्ञायि, किन्तु गौणभूतः सोऽर्थं इत्येव तत्र तत्वम् ।

स एवार्थः "तत्वमसी" तिमहावाक्यप्रतिपादितो भवति । अर्थात् हे श्वेतकेतो ! स चिदाभासतया भासमानो भूतभावनो भगवान् ईश्वरस्त्वमसीत्यर्थः ।

एवमेव बुद्धिगतचिदाभासाविवेकेन चिदात्मा यद्यपि कर्ता, भोक्ता, जीव इति च विज्ञायते । तथापि स जीवभूतश्चिदात्मा कर्ता इत्यस्याः शब्दावल्या नास्ति वाच्यी-भूतोऽर्थः, अपि तु गौणभूत एव ।

अत एव 'तत्' त्वम् पदयोः संशोधनं विदधता श्रीसदानन्देन वेदान्तसारनामके ग्रन्थे लक्ष्यीभूतश्चिदात्मा खलु विशुद्धोऽर्थो गृहीतः उक्तं च —

"तथा तत्वमसीति वाक्यं तदर्थो वा परोक्षत्वापरोक्षत्व—
विशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधा-
द्विरुद्धपरोक्षत्वापरोक्षत्व विशिष्टांशं परित्यज्याविरुद्ध-
मखण्डचैतन्यमात्रं लक्षयति" ।

स चास्ति लक्ष्यीभूतश्चिदात्मा भेदत्रयशून्य इति । वस्तुतस्तात्त्विकदृष्ट्या विचार्यमाणे प्रतिबिम्बवादे अवच्छेदवादे, आभासवादे च नास्ति कश्चन विरोधोऽनुरोधो विवादो वा केषामपि विदुषाम् । यतस्तेषां सर्वेषामेव वादानामेकमेवास्ति लक्ष्यं जीवब्रह्मणोरैक्यन्तथा तस्मिन् निरुपाधिके चेतनतत्त्वभूते परमात्मनि संसारधर्माणामस्तित्वमस्ति सर्वथा शशशृङ्गायितमेव । जीवेश्वरयोश्च भेदो नास्त्येव । भेदस्याज्ञानकल्पितत्वात् अज्ञानस्य व्यावहारिकत्वात् । तथा चोक्तम्—

"भेददृष्टिरविद्येयं तां सर्वथा परिवर्जयेत्" ।
"अद्वितीये परे तत्वे निर्विशेषे भिदा कुतः"

अपि च "ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन"
"उपादानं प्रपंचस्य ब्रह्मणोऽन्यन्न विद्यते ।
तस्मात् सर्वप्रपंचोऽयं ब्रह्मैवास्ति न चेतरत्" ।

यथैकस्मिन् तोये तरङ्गफेनबुद्बुदादिभेदकल्पना द्वैतकल्पना वा या जायते सा सर्वथा मिथ्याभूता सनातनी चास्ति । यथा चैकस्यामेव भूमौ गृहक्षेत्रादिकल्पना सापि भ्रान्तिमूला मिथ्याभूता प्रभूता चास्ति ।

तथैवैकस्मिन्नेव ब्रह्मणि नामरूपादि भेदकल्पनापि नितान्तं भ्रममूलिकैव न तु वास्तवी ।

यथा वा जलीयतरङ्गादिषु जलधर्माणां द्रवत्व, शीतत्व, शुक्लत्व, मधुरत्वादीनां बहिरन्तर्भागयोरनुस्यूतत्वात् । जलसत्ताव्यतिरेकेण पृथक्सत्ताभावाच्च तरङ्गादिसकलमेव जलमात्रमेवास्तीति सार्वजनीनोऽयमनुभव. ।

तथैवाऽसारे खलु संसारेऽपि बहिरन्तर्भागावच्छेदेन सर्वथाऽविच्छेदेनाऽऽनन्दत्वाऽनन्तत्वादीनां ब्रह्मधर्माणामनुगमदर्शनाद् ब्रह्मणोऽस्तित्वाऽतिरेकेण पृथक्सत्ताया भावाच्च "चिद्धीद सर्वम्" "सद्धीद सर्वम्" सर्वं खल्विदं ब्रह्म" "इदं सर्वं ब्रह्मैव" इत्यादिश्रुतिभिः सर्वस्यैव जगतो जगदात्मकप्रपंचस्य वा ब्रह्मण्यारोपितत्वात् रज्जुसर्पवत् इत्यादियुक्तिभिर्मृत्तिकादिदृष्टान्तैश्च तात्त्विकदृष्ट्या विचार्यमाणे चराचरात्मकं सर्वमेव

जगदिदं ब्रह्मैवेति नास्ति ततोऽतिरिक्तं किमपि। इत्थं च भेदभावना तन्मूलिका च द्वैतभावना च सर्वाप्यस्ति भ्रममूलिका न तु सात्विकीति। उक्तं च—

"ब्रह्मैवेद सर्वम्"—बृ० उ०-२/५/१

सा० वि० ६/४३|"अहमेव जगत् सर्वम्"

आत्मैवेदं सर्वम्-छां० उ० ७/२५/२

"सच्चिदानन्दरूपमिदं सर्वम्"-नृसिंहोत्तरतापनीयो प०-७/

"अहमेवेदं सर्वम्"-छा० उ०-७/२५/१

अपि च पुनरिदमेव पुष्टीक्रियते-

परात्मतो मनुष्येन्द्र ? भेदोऽज्ञानकल्पित:"-विष्णुधर्मोत्तर—

इत्यादिश्रुतिभिरपि द्वैतभेदनिरसनपुरःसरमभेद एव प्रतिपादितो भवति। अत एव विशुद्धात्मा ब्रह्मनिष्ठो ब्रह्मविद् यतिः ज्ञानात्मिका दृष्टिं विधाय सर्वमेव जगद् ब्रह्मैव पश्यति। उक्तं च—

कृत्वा ज्ञानमयीं दृष्टिं पश्येद् ब्रह्ममयं जगत्'

स च प्रागुक्तलक्षणलक्षितब्रह्मभूतः परमात्मा प्रत्येकं रूपे विराजमानत्वात् स्वस्थितिमत्वाच्च प्रतिरूपस्वरूपो जायते। एतेनाऽस्य सर्वस्वरूपताकथनमपि साधु सङ्गच्छते।

देव एव देवता इतिवत् स्वार्थे 'तल्' प्रत्ययविधानात् मनुष्यत्वंमनुष्याणां रूपमस्ति, पशुत्व, पशूनाम् पक्षित्वंच पक्षिणामित्येव क्रमेण सर्वेषामेव स्वस्वरूपाणि पृथक् पृथगेवानुभूयन्ते। इत्थं च नास्ति कोऽपि सर्वस्वरूपो यत्र सर्वस्वरूपतानुभूयते।

परन्तु तस्य परब्रह्मपरमेश्वरस्य नृसिंहात्मकमेव केवलमस्त्येकमेवंविधं रूपं येन तस्य विभोः सर्वस्वरूपता प्रदर्शिता भवति। उक्तं च—

"यः पांचाननपांचजन्यवपुषा—

व्यादिष्टविश्वात्मतः।—चित्सुखी

तथापि राम, कृष्ण, परशुराम, मत्स्यादयोऽपि सन्ति तस्यैव रूपाणीति तेभ्योऽपि तस्य सर्वस्वरूपता नाविदितमस्तीति सुस्पष्टमेव।

अतः स विभुश्चेतनः कदाचित् कृष्णरूपेण कदाचित् रामरूपेण, क्वचित् परशुरामरूपेण, एवमन्यदा कालावच्छेदेन इतोऽतिरिक्तेनापि खल्वन्यान्यरूपेणोपासकानां कार्यार्थं प्रादुर्भवति। यथोक्तम्—

चिन्मयस्याऽद्वितीयस्य निष्कलस्याऽशरीरिणः।
"उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना" ॥

इयं च ब्रह्मणो नामरूपकल्पनोपासकानां कार्यार्थं तस्य चेतनतत्वस्य प्रतिख्यापनार्थं वेदितव्या । नामरूपाणामभावे तस्य चेतनतत्त्वस्य परब्रह्मपरमेश्वरस्य भूतनाथस्य जगन्नाथस्य बाबाविश्वनाथस्य "प्रज्ञानघन" संज्ञकं निरुपाधिकं रूपमेव नहि श्रुतिगोचरीभूतं भवितुं प्रभवति । इदं च सर्वमपि माहात्म्यम्=महत्वं मायाया एव विज्ञेयम् । उक्तं च—

"जीवेशावाभासेन करोति माया"

नृसिंहोत्तरतापनीयोप०

"एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"

मायया प्रभावितोऽयं खलु सर्वोऽपि विषयः । अत एव मायाया दुर्जयत्वं दुर्ज्ञेयत्वं च लोकशास्त्रप्रसिद्धमिति सर्वेऽपि वेत्तारो विवन्ति । परस्परमामनन्ति च ।

ब्रह्मब्रह्मेति प्रोच्चारयन्तोऽपि मायां तत्कार्यमेवानुगच्छन्ति सर्वतोभावेन सर्वेऽपि प्राणवन्तो जीवाः । ब्रह्मणः केवलं वाग्व्यवहारविषयत्वमेवानुभूयते नत्वन्तःकरणविषयत्वमपि । यथोक्तम्—

"सर्वेषां वाचि न मनसि पुनः कस्यापि पुण्यात्मनः"—श्रुतमात्रम्

अत एवान्तःकरणवृत्तिविषयत्वाऽभावादेव परमार्थभूते वस्तुभूते तस्मिन् ब्रह्मणि खल्वनास्थावन्तो भारतीयमहर्षिप्रणीतार्षग्रन्थानध्ययनेन केचन गुरुप्रसादपरम्परानुवर्तमानाचारपरिवर्जनेन अपरे च दूषितेन कर्मणा मोक्षे मोक्षसाधनीभूते च ज्ञाने श्रद्धाभक्तिविरहिताः सन्तः पौनः पुन्येन जननमरणजननीजठरे शयनप्रवाहे पात्यमाना दुर्विदग्धास्ते जीवा आनन्दैकरसं हस्तगतं मोक्षाख्यं फलं तिरस्कुर्वाणा नानायोनिषु नरके च भूयोभूयः पतनलक्षणमृत्युसंसारवर्त्मनि नितरां वर्तमाना जायन्ते म्रियन्ते च ।

अहो बत अज्ञानजन्यमेवेदं दौर्विध्यमपारदुःखकारणम् अहर्निशमनिपातनोन्मुखप्रमान्धकारमार्णवम् । तथा चोक्तम्—

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ?
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥

महर्षिणा व्यासमहोदयेनाप्ययमेव पक्षः समर्थितः । तथाहि—

अज्ञानसंज्ञौ भवबन्धमोक्षौ—
द्वौ नाम नान्यौ स्तः ऋतज्ञभावात् ।

अजस्रचित्यात्मनि केवले परे—
विचार्यमाणे तरणाविवाह्नि ॥

अन्ततोगत्वा वयं परमपूज्यब्रह्मलीनवेदान्तकेशरिणां श्रीस्वामिनिर्मलपादानामप्यस्मिन् विषये लेखात्मकं शब्दभूतं प्रमाणं पुष्ट्यर्थमेव समुपस्थापयामः । यथा—

कभी साया कभी पर्दा कभी जल्वा समझते हैं ।
न जाने लोग तुमको और भी क्या-क्या समझते हैं ॥

हकीकत तो बस इतनी है हकीकत खुद हकीकत है ।
त-अज्जुब है इसे अहले खिरद क्या क्या समझते हैं ॥

तात्विकदृष्ट्या विचार्यमाणे सत्यन्त्विदमेवास्ति यत् सत्यमेव सत्यमस्ति अद्वैतमेव सत्यम् ।

तच्च सत्यस्वरूपमात्मभूतं प्रभूतं चेतनतत्त्वं नहि कदाचित् कथंचित् कुतश्चित् वेद्यं भवतीति सत्यमेव सत्यम् । अपि च तत्रैव पुनः—

एक बात है अटपटी झटपट दर्शन होय ।
जो मन की खटपट मिटे चटपट दर्शन होय ॥

## प्रतिबिम्बवादः

प्रतिबिम्बः प्रतिबिंबनम्=अनुकरणम् इमे सर्वेऽपि सन्ति समानार्थकाः । यथा—दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।

विवरणानुसारिणो दार्शनिका इत्थं वदन्ति—

"दर्पणाभिपरावृत्तैर्निजैर्नयनरश्मिभिः—
सन्निकृष्टं मुखं तत्रोपाध्यन्तः स्थितिविभ्रमः ॥

न दर्पणे मुखाध्यासः संस्कारादेरसंभवात् ।
ममेवमिति मानाच्चेत्याहुर्विवरणानुगाः" ॥

अत्रायमस्ति प्रतिबिम्बसिद्धान्तः यद् दर्पणेऽस्ति मुखस्य दृश्यमानं प्रतिबिम्बं तन्नास्ति खलु मुखस्य मुद्रा, नापि च मुखस्यास्ति कश्चिच् चित्रविशेषः नापि च छायैव मुखप्रतिबिम्बशब्दार्थः ।

दर्पणावयवेन व्यावहारिकमुखस्योत्पत्तिस्तत्र जायते इत्यपि न वक्तुं शक्यते। रज्ज्वामेव सर्पवत् अनिर्वचनीयो मुखाभासः समुत्पद्यते इत्यपि कथनं न युक्तम्, किन्तु दर्पणदर्शनप्रवर्तमानस्य पुरुषस्य स्वच्छदर्पणादिपरावृत्तैर्निजैर्नयनरश्मिभिः सन्निकृष्टं मुखमेव ग्रीवाया उपरिभागे सन्तिष्ठमानं सत् प्रकाशमानं जायते, तत्र दर्पणद्रष्टुर्मदीयं मलिनं मुखमिति भ्रान्तिर्भवति दर्पणमालिन्यदोषात्।

अत एव द्रष्टुर्मदीयं मुखं दर्पणे वर्तते। ग्रीवास्थं च तन्मुखं दर्पणस्थमुखात् सर्वथा भिन्नमित्येवं प्रकारेण बिम्बप्रतिबिम्बभावाः स्वकीये एव मुखे प्रतीयन्ते।

तत्र च ग्रीवास्थमुखस्येव सत्यत्वात् बिम्बप्रतिबिम्बयोः स्वरूपस्यापि ग्रीवास्थ-मुखाभिन्नत्वाच्च ग्रीवास्थलक्षणलक्षितं बिम्बमेव सत्यम्। तथा बिम्बभूते ग्रीवास्थे मुखे ये सन्ति बिम्बत्व, प्रतिबिम्बत्वादयो धर्मास्तेषां सर्वथाऽनिर्वचनीयोत्पत्तिमत्त्वेन मिथ्यात्वमेव मीयते। एतद्दृष्टान्तानुसारेण दर्पणस्वरूपा विद्या। तादृशाविद्यायाः सन्निधानमात्रेण बिम्बभूते सत्यात्मके एकस्मिन्नधिष्ठानस्वरूपे ईश्वरे जीवत्वस्य भ्रान्ति-मात्रमेव भवतीत्यन्यत्र भाष्यादौविशदीकृतो विषयः।

## अवच्छेदवादः

अव्+छिद् घञ् अर्थात् 'अव्' उपसर्गात् 'छिद्' धातोः 'घञ्' प्रत्ययेन अवच्छेदः सिद्ध्यति। एवं चावच्छिद्यतेऽनेनेति करणे 'घञ्' प्रत्ययविधानेनावच्छेद-शब्दार्थानामनेकविधत्वात्तेषां मतमतान्तरेण विहितं वैशद्यं शोधग्रन्थेऽवच्छेदवादे विलोक्यताम्।

अत्र वाचस्पतिमिश्रा इत्थं वदन्ति यदज्ञानस्य विषयीभूतं चैतन्यमीश्वरः अज्ञानस्या-श्रयीभूतं च चैतन्यं जीवः। अर्थात् समष्टिभूता ज्ञानस्वरूपमायारूपकारणोपाध्यवच्छिन्नं चैतन्यमीश्वरः। तच्चेश्वरचैतन्यं नान्तः करणोपाध्यवच्छिन्न चैतन्यमीश्वरः। तच्चेश्वर-चैतन्यं नान्तःकरणोपाध्यवच्छिन्नम्, जीवस्यैव तथाविधत्वात्। रूपरहितस्य चेतनस्य प्रतिबिम्बं कथमपि नाङ्गीकर्तुं शक्यते।

यद्यपि रूपरहितस्याप्याकाशस्य जलादौ प्रतिबिम्बदर्शनात् प्रागुक्तकथनं सर्वथा निराधारमेव प्रतिभाति।

तथापि गगनवृत्तिनीलताया आरोपितत्वात्तदारोपितनीलत्वविशिष्टस्यैवाऽऽकाशस्य प्रतिबिम्बं दृश्यते न तु विशुद्धाकाशस्य। इत्थं च कूपतडागादिगतेऽपि जले तथाविधस्यैवाऽऽकाशस्य प्रतिबिम्बं दृष्टिगोचरीभूतं भवति।

जलगते आकाशे नीलताया विशालतायाश्चाऽभावसत्वेपि नीलं नभः 'विशालं नभः' इत्यादिविशेषप्रतीतिदर्शनात् आरोपितनीलत्वविशिष्टस्य तथा तथाविधविशाल-त्वविशिष्टस्य चाकाशस्य प्रतिबिम्बमवश्यमेवाभ्युपेतव्यम् ।

नीरूपमाकाशमिति चेत्तर्हि आरोपितां नीलताम्, आरोपिताञ्च विशालतामादायैव प्राग्दर्शितप्रतीतीनामुपपादयितुं शक्यत्वात । आकाशस्य प्रतिबिम्बं सर्वथा निराबाध-मेवेति भावः । किन्तु वस्तुभूते चेतनतत्वे आरोपितनीलतायाः विशालतायाश्चाभावेन चेतनस्य प्रतिबिम्ब नहि भवितुं प्रभवति । तन्न साम्प्रतं प्रतिभाति । यथा नीरूपस्यापि शब्दस्य प्रतिध्वनिरूपो यः प्रतिशब्दस्तस्यैव प्रतिबिम्बत्वेन स्वीक्रियमाणत्वात् ।

इत्थं च सैद्धान्तिकेऽप्यध्वनि, नीरूपशब्दवत् -तथाविधाकाशवच्च नीरूपस्यापि चेतनतत्वस्य प्रतिबिम्बमन्तःकरणे भवितुमर्हतीत्यत्र नास्ति कोऽपि वाद, विवादा-वसरो वा ।

अत्रावच्छेदवादी ब्रूते आकाशे योऽस्ति प्रतिध्वनिरूपः प्रतिशब्दो भासमानस्तस्य शब्दप्रतिबिम्बरूपता नाऽभ्युपगन्तु शक्यते, यतस्तस्य प्रतिशब्दस्वरूपस्य प्रतिध्वनिभूतस्य तस्य शब्दस्य शब्दप्रतिबिम्बरूपता नाङ्गीकर्तुं शक्यते, तथा सति आकाशवर्त्तिशब्दस्या-भावः स्यात् । यतः भेरीदण्डादिसंयोगजन्यस्यैव शब्दविशेषस्य प्रतिध्वनिरूपशब्दकारणत्वं निर्धार्यते ।

एव स्थिते प्रतिध्वनिरूपस्य शब्दस्य कथमपि कदापि कुतोऽपि केनापि प्रति-बिम्बरूपता नाङ्गीकर्तुं शक्यते नापि च भवितु प्रभवतीति विभावनीयम् ।

## मायाविषये किञ्चित्

इह खलु अद्वितीयसच्चिदानन्दमयपरमात्मैकस्वरूपपर्यवसितेऽपि अविद्याऽपर-पर्यायभूतमायाप्रकटितविविधवैचित्र्ये आपाततोऽतिरमणीयेऽस्मिन् वैरिञ्चे प्रपञ्चे प्रपञ्चकारणीभूताया अव्यक्ताऽव्याकृताद्यपरनामधेमाया. प्रकृतिस्वरूपाया मायाया अनन्तगुणगणयुतस्य रमारमणस्य सच्चिदानन्दस्वरूपस्य भगवतः परमेश्वरस्य अनाद्यन-न्तामा. साम्राज्य सर्वत्रैव सर्वतोभावेनाऽक्षुण्ण वर्तते इति स्वय वयमनुभवामः ।

न केवल वयमत्र स्वानुभवमात्रमेव दर्शयामोऽपि तु सर्वाणि शास्त्राणि सर्वेऽपि च शास्त्रकारा इत्यमेव समुद्गिरन्ति यद् यावत्कालपर्यन्त यत्रापि एकस्याप्यज्ञानस्य सहोदरीभूताया मायाया कुटुम्बभूताना परिवारभूताना वा कामक्रोधादीनाम् आशा-तृष्णादीना वा प्राधान्यमस्ति तावत्काल ततोऽस्या महाशक्तिस्वरूपाया मायायाः साम्राज्य नैव गन्तुं प्रभवति नापि प्रभविष्यतीति सिद्धान्तनिर्णयैः सर्वथा प्रमात्वेन [illegible]पताम् ।

यथा यावत्कालं भारते देशे धर्मनिरपेक्षतायाः साम्राज्यं पुष्टीकृतं वर्तते तादृशस्य वा राज्यस्य प्राधान्यमस्ति तावत्कालं दारिद्र्यस्य साम्राज्यमितो नैव गन्तुं शक्नोति नापि गन्तुं शक्ष्यतीति शास्त्रीयसिद्धान्तपूर्विका मदीयानुभूतिरेवात्र प्रमाणम् । अपि च—

"धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" ।

इत्यभियुक्तोक्तेरपि प्रामाण्यदर्शनात् मदीयानुभूतेरेव प्रामाण्यं लभते । अपि च—

ब्रह्मा विष्णुपदं हरिः शिवपदं—
तृष्णावधिः को गतः ॥[1]

इत्याविना तृष्णापरवशा अविद्याकामकर्मकारिणो जनाः खलु इतस्ततो भ्रमन्ति, सिनेमाप्रभृतीनां च गानादिकं शृण्वन्ति गायन्ति च । तद्गानं यथा —

"चुरा ली गर किसी की चीज तो क्या आपकी हो ली ।
हमारा दिल हमें दे दीजिए बस दिल्लगी हो ली ।"

अस्यैव संस्कृतेऽप्यनुवादः—

"अचौरि कस्यचिद्वस्तु तदा किन्तेन तज्जातम् ।
मदीयं मानसं देहि अहो हास्यं विराज्जातम्"[2] ॥

नहि कुत्रापि शान्तिं सुखं च लभन्ते । यच्चापि सुखन्तेऽनुभवन्ति सुखाभासमात्रमेव तदित्यपि विज्ञेयम् ।

इयमेव माया महतो ऋषि-महर्षिप्रवरान् योगिनो महायोगिनो वा अविच्छिन्नप्रयासायासभारमुद्वहतो वा अमान् अज्ञानान्धकारमयेषु सांसारिकेषु विषयेषु अहर्निशमनिशं भ्रामयति, रमयति, इयमेव च माया कदाचिद्रूपान्तरावच्छिन्ना रजोगुणतमोगुणावच्छिन्ना सती निर्भर्त्सयति, विषादयति च ।

इत्थं चाज्ञानापरपर्यायभूतेयं माया किं किं समाचरतीति तदर्थं दर्शनशास्त्रमवगाह्यतां विलोक्यतां च । अस्य विषयस्य विशदविवेचनं मायास्वरूपनिरूपणावसरेऽग्रे वयं स्वयं करिष्यामः ।

---

१. श्रुतिः (श्रूयते)
२. श्री पं० ज्वालाप्रसादगौड़विरचितम्

प्रथमोऽध्याय

# दार्शनिकसाहित्ये मायास्थानं तदीयं महत्वं च

तात्त्विकदृष्ट्या विचार्यमाणेऽसारेऽस्मिन् खलु ससारे दु खजनकीभूता एव पदार्था बाहुल्येन समुपलभ्यन्ते । तत्र च प्रामाण्यमप्याह—

"परिणामतापसंस्कारदु खैर्गुणवृत्तिविरोधाच्च दु खमेव सर्वं विवेकिन[1]"

परिणामश्च तापश्च संस्कारश्च तज्जानि दु खानि तै सम्बन्धात् इत्यर्थं । एव गुणवृत्तिविरोधाच्चायतो दु खसम्मितत्वाच्च प्रकृतितत्कार्यंसुखादिक सर्वं दु खमेवास्ति विवेकिन ।

यद्यप्यविवेकिनोऽपि सर्व दु खमेव प्रतिभाति, तथापि सोऽविवेकी मूढत्वात् सुखकाले दु खतया न जानाति ।

विवेकी (योगी) तु सुखकालेऽपि सर्व दुःखात्मकमेव पश्यति । तथा चोक्त विष्णुपुराणे—

कलत्रमित्रपुत्राद्यंगृहक्षेत्र धनादिकै ।
क्रियते न तथा भूरिसुख पु सां यथा सुखम्[2] ॥

अय च विशदीकृतो विषय आवद्यजैगीषव्यसंवादे स्वयमेव तत्र द्रष्टव्य ।

प्रागुक्तकलत्रमित्रपुत्रप्रभृतिभि सुखसाधनत्वेनाभिमतैर्यत् सुखमनुभूयते तत् सुख न सुख किन्तु सुखाभासमात्रमेव तत् अतस्तदपि सुख दु खमेव ।

सर्वत्रैव सर्वदा ईप्साजिहासाप्रेरिता एव जना दृष्टिगोचरता यान्ति, एवमीप्सा-जिहासाप्रयुक्ता एव च तेऽप्य कामयन्त । अर्थं कामयमानाश्च ते जना इतस्ततो भ्रमन्ति अविच्छिन्नप्रयासायासभारमुद्वहन्ति, नैकमपि क्षण सुख समुपलभन्ते । अयमेव च ससार, ससारश्च मायाकल्पित, सर्वेऽपि च भावाभावभूता पदार्था मायाकल्पिता सन्ति । यावदज्ञान तावदेव हि ससार । ससारस्य सकल्पो भानं वा विद्यापरपर्याय-

---

१. योगदर्शन पा० २, सू० १५
   विष्णु पु०

भूतया माययैव जायते। अर्थात् मायाया गुणक्षोभाद् ब्रह्मसत्तयैवाऽसदिदं दृश्य-प्रपंचात्मकं जगत् सदिव प्रतिभासते। अत एव सदसद्भ्यामनिर्वचनीयत्वेनास्य जगतो मायिकत्वमाविद्यकत्वं च कथितमाचार्यपादैः। अस्मिन्नये मायाया अविद्यायास्तत्कार्य-भूतस्य च जगतो नास्ति वास्तविकी सत्ता। एतदर्थमेव चाचार्येण आभासवादः कल्पनावादश्चाङ्गीकृतः। केवलमेवाद्वयं ब्रह्म सत् परमार्थं च स्वीकृतमस्ति, इतो-ऽतिरिक्तं सर्वमेव आभासरूपं कल्पनामात्रं चेति विज्ञेयम्। उक्तंच—

जात्याभासं चलाभासं वस्त्वाभासं तथैव च।
अजलाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम्[1]॥

अपि च तत्रैव—

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः[2]॥

एतेन सकलमेवेदं चराचरात्मकं जगदतात्त्विकत्वादन्यथाभावरूपत्वादाभासरूपं कल्पनामात्रं वा सिद्ध्यति, इति जगतो भ्रान्तिरूपत्वं सुस्पष्टमेव। तथा चोक्तम्—

एवं न सन्नासदिदं भ्रान्तिमात्रं विभासते[3]।

अपि च तत्रैव—

जगदवादनुत्पन्नं यच्चेदमनुभूयते।
तत्संविद् व्योमवचनं स्वप्नस्त्रीसुरतं यथा[4]॥

मिथ्याज्ञानघनाः सर्वे जगदाकारराशयः।
यथा नौयायिनो मिथ्या स्थाणुस्पन्दमितिस्तथा[5]॥

मनोव्यामोह एवेदं रज्ज्वामहिभयं यथा।
भावनामात्रवैचित्र्याच्चिरमावर्तते जगत्[6]॥

इत्यादि प्रबलप्रमाणान्यनुसृत्य जगदाकारराशीनां स्थाणुस्पन्दवत् रज्ज्वामहि-भयवच्च भ्रान्तिमात्ररूपत्वं सिद्ध्यति।

---

१. माण्डूक्य का० ४-४५
२. " २-१२
३. " ३-४४।२७
४. " ३।५४।२०
५. " ४।४५।१८
६. " ४।४५।२६

अतएव ज्ञानिनो जना मायातत्कार्यपक्षं भ्रमान्धकारकुक्षिनिक्षिप्तं तत्स्वरूपं वा विचार्य परीक्ष्य चाऽचिन्त्या ऽतर्क्य-निष्पं च[१] ब्रह्मपक्षं समाश्रयन्ति । यतस्तस्य ब्रह्मणः स्वयं प्रकाशरूपत्वात् ज्ञानस्वरूपत्वाद् आनन्दरूपत्वाच्च तद्ब्रह्मतत्वमनादि अद्वयम् अनन्तं चेति सविकल्पबुद्धिद्वारा सर्वथा गम्यं नित्यशुद्धबुद्धमुक्तात्मस्वरूपं च । एतस्यैव ब्रह्मणो ज्ञानं सांसारिकजराजन्ममरणचक्रात्मकबन्धनतो मोचयत्येकरूपेण । बुद्धिः स्वयमेतद् ब्रह्मतत्वं नैव विज्ञाङ्कर्तुम् प्रभवति । अतः सविकल्पबुद्धिद्वारा अधिकाधिकरूपेणैतद्ब्रह्मविषये केवलं "नेति नेति" इति वदितुं शक्नोति, किन्तु "नेति नेती" ति ब्रह्मणो भावात्मकत्वं शून्यतात्मकत्वं वा नहि व्याहर्तुं पारयिष्यति । "नेति नेती" ति च ब्रह्मणोऽनिर्वचनीयतां बोधयति नहि शून्यतामपि ।

महर्षियाज्ञवल्क्यस्येदं कथनं वर्तते यत् द्रष्टुर्दृष्टेर्विपरिलोपो नहि भवितुं शक्नोति । तथा चोक्तम्—

"न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते[२] ।"

अर्थात् सात्विकदृष्ट्या विचार्यमाणे सति नास्ति कोपि भेदः । अनयोर्ज्ञातृज्ञानयोस्तादात्म्यातिरिक्तो नास्ति कोप्यपरः सम्बन्धः । अतः "नेति नेति" इत्यस्याऽयमेवास्ति अर्थः यद् ब्रह्मतत्वं बुद्धेरग्राह्यत्वात् विशुद्धविज्ञानात्मस्वरूपं तथा निर्विकल्पज्ञानसाक्षात्कारयोग्यं च । अथ यच्चापि किंचिदस्ति वस्तुत्वेन प्रतीयमानं तत् सर्वं ब्रह्मैवास्तीति यो ब्रह्म जानाति सः स्वयं ब्रह्मस्वरूपो भवति । तथा चोक्तम्—

"ब्रह्मैव ब्रह्मैव भवति[३] ।"

"ब्रह्मविद् ब्रह्मैव भवति[४] ॥"

इति च श्रुतेः ज्ञातृज्ञानयोरभेदः सिद्ध्यति । उद्दालक आरुणिः स्वीयं पुत्रं श्वेतकेतुं समुपदिष्टवान् यथा मृत्तिकाविनिर्मितघटादिपदार्थकारणीभूतमृत्तिकाज्ञाने सति मृत्तिकाविनिर्मितघटादिसकलपदार्थानां ज्ञानं भवति, यतो घटादयः सर्वेऽपि नामरूपस्वरूपा एव सन्ति केवलं मृद्विकारभूता इति । तत्र मृत्तिकैवास्ति सत्यम्, अन्येषां च मृद्विकारभूतघटादीनां मिथ्यात्वम्, तत्र मृत्तिकेत्येव सत्यम् । उक्तंच—

"यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्[५] ।"

१. मा० का० ७।१, बृहदारण्यकोप० ४।४।२१
२. बृहदारण्यके ४।३।२३
३. " ३।५।१
४. मु० उ० ३।२।६
५. छान्दोग्योप० प्र० ६।१ खं०सं० ४

एवं यथा सुवर्णज्ञाने जाते तन्निर्मितान्याभूषणानि स्वयमेव ज्ञातानि भवन्ति यतस्तान्याभूषणानि नामरूपस्वरूपाणि एव सन्ति केवलं स्वर्णविकारभूतानि तानि, तत्र सत्यं केवलं सुवर्णमेव। उक्तंच—

"यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम्[1]।"

तथैव हे श्वेतकेतो ! आत्मतत्वे (ब्रह्मतत्वे) ज्ञाते नामरूपात्मकस्य जगतः सर्वेऽपि पदार्थाः स्वयमेव ज्ञायन्ते, तत्र आत्मा (ब्रह्म) एवास्ति परमार्थ सद्वस्तु, हे श्वेतकेतो ! त्वमेवासि ब्रह्मभूत आत्मा। तथा चोक्तम्—

"स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच"।[2]

छान्दोग्योपनिषदि प्रजापतीन्द्रयोः सम्वादेन सुस्पष्टं भवति यदयमात्मा नास्ति शरीरस्वरूपः, यत आत्मनो नित्यत्वात् सुखदुःखादिद्वन्द्वशून्यत्वात्, शरीरस्य चाऽनित्यत्वात् सुखदुःखादिद्वन्द्वसंस्पृष्टत्वात्। अपि च शरीरस्य परिणामपरिवर्तयोर्दर्शनात् आत्मनि च तददर्शनान्नात्मानः शरीररूपता व्याहर्तुं शक्यते।

न चाऽयमात्मा स्वप्नद्रष्टाऽपि भवितुमर्हति, यतः स्वप्नावस्थायां केवलं सुखदुःखरूपक्षणिकविज्ञानधारा प्रतीयते। स्वप्नद्रष्टा खिन्नः, संतप्तमनस्कः रुदन्निव च प्रतीयते, आत्मनि च तद्भावात् नात्मा शरीरम्।

आत्मा सुषुप्तेर्द्रष्टापि नहि भवितुं शक्नोति, यतः सुषुप्तौ विषयाभावात् अनुभवितुर्विषयिणश्चेतनतत्वस्यात्मनः सत्ता शुष्का रिक्ता च भविष्यति।

तात्त्विकदृष्ट्या विचार्यमाणे आत्मनो ब्रह्मणश्चेतनतत्वस्य विशुद्धनित्यविज्ञानरूपता, नित्यानन्दरूपता, सत्यस्वरूपता च सिद्ध्यति। उक्तंच—

"सत्यं ज्ञानमनन्तं ब्रह्म"[3]
"नित्यं विज्ञानमानन्दं ब्रह्म"[4]

माण्डूक्योपनिषद्यपि इदमेव प्राग्वर्णितं मतं परिपुष्टं कृतं विलोक्यते।

---

१. छान्दोग्योप०अ०६।१खं०।मन्त्र ५
२. तत्रैव, अ०६,खण्ड८,मं० ७
३. तैत्तिरीयोप० २।१
४. न्या०नि०मु०आत्मप्रकरणम्

तत्रेदमपि प्रतिपादितं यत् सांसारिकाः शोकमोहादयो दोषा भेदजन्यद्वैतजन्या एव खल्वनुभूयन्ते, अद्वैते शोकमोहो कुतः ?

आत्मानन्दस्य पुरस्तात् सर्वेऽप्यन्ये विषयानन्दास्तिरस्कृता भवन्ति। अनेनैव खल्वात्मज्ञानेन जन्ममृत्युजराव्याधिभवरोगतोऽवश्यमेवात्यन्तिकी मुक्तिरपि जायते। मुक्तेरवाप्तये नान्यः कश्चन मार्गः। उक्तं च—

"नान्यः पन्था विद्यतेऽयनाय"

अपि च—

यथाग्निर्महान् दीप्तः शुष्कमार्द्रं च निर्दहेत्।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहते क्षणात्॥[१]

अन्यच्चापि—

"देहे ज्ञानेन दीपिते बुद्धिरखण्डाकाररूपा यदा भवति तदा विद्वान् ब्रह्मज्ञानाग्निना कर्मबन्धं निर्दहेत्।"[२]

अपि च—

"क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे"[३]।
"संचितं विलयं याति प्रबोधात् स्वप्नकर्मवत्"[४]।"

अन्यच्च—

"नास्ति ज्ञानात् परं किंचित् पवित्रं पापनाशनम्।"[५]

स्वयमेव नन्दकपाणिर्नन्दनन्दनो भगवान् सच्चिदानन्दः श्रीकृष्णचन्द्रोऽर्जुनं प्रति ब्रूते—

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति॥[६]

---

१. शिवधर्मोत्तरे द्रष्टव्यम्
२. पैङ्गलोपनि० ४।११
३. मुण्डकोपनि० २।२८
४. अध्यात्मोपनि० ५०
५. (अ)श्रुतिः
६. गीता अ०४,श्लो० ३८

इत्थं च देव, मनुष्य, पशु, पक्षीत्यादिनानाविधयोनिषु अनेकविधजन्ममरणादि-महादुःखप्रवाहपरम्पराप्रापकाणि पुण्यपापमिश्रात्मकानि नानाकल्पशतोपार्जितानि सकलान्येव संचितादिकर्माणि समूलमुन्मूलयति निर्विकारात्मज्ञानम् । एतस्मादेव कारणात् अनेनाऽविक्रियात्मज्ञानेन सदृशमत्यन्तशुद्धिकरं परमपुरुषार्थसाधनीभूतमस्मिन् लोके शास्त्रे च नोपदिष्टमस्ति उपायान्तरं किमपीति भावः । एतादृशं मोक्षकारणमस्मिन् लोके लोकान्तरे वा सर्वथाऽनुपलब्धमेवास्ति ।

एवम्भूतमविद्यातत्कार्यविध्वंसकारणीभूतमविक्रियात्मकमात्मज्ञानं नित्यनैमित्तिक-प्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः श्रवणमननादिसाधनसम्पन्नश्च प्रमाता यतिरेव केवलमधिकारित्वेन प्राप्तुमर्हतीत्यत्र नास्ति लेशतोऽपि विवादः ।

सोऽपि यतिर्महता दीर्घकालेन ज्ञानयोगेन नित्यनिरन्तरसमाधिनिष्ठया प्राप्तेन निःशेषविनष्टसर्वबाह्यवासनारूपां संसिद्धिं गतः सांसारिकदुष्कृतजन्याशेषप्रतिबन्ध-निर्मूलितत्वेन स्वात्मन्येव तादृशं सर्वथा विशुद्धं खल्वात्मज्ञानं विन्दति । येन सर्वमिदमहं च ब्रह्मैवेति सर्वथा सर्वप्रतिबन्धरहिता वृत्तिः स्वान्तः करणे समुदेति ।
अपि चोक्तम्—

ज्ञानं लब्ध्वा परां शान्तिमचिरेणाऽधिगच्छति[1] ।

अर्थात् प्रागुक्तविशेषणाऽवच्छिन्नोऽविच्छिन्न एव यतिः अहं ब्रह्मास्मीति सर्वथा प्रतिबन्धरहितं ज्ञानं लब्धुं शक्नोति, यच्च ज्ञानं शतधा श्रुतश्रावितवेदान्तोऽपि विद्वान् नैव लभते ।

इत्थं च महता दीर्घकालेन नित्यनिरन्तरब्रह्मनिष्ठया सुसम्पन्नं स्वस्य जगतश्च ब्रह्मात्मनैवोपलभ्यामानत्वाऽऽपादकं विशुद्धं ज्ञानं लब्ध्वा श्रवण-मननादिसाधनसम्पन्नो यतिरुत्तरक्षणावच्छेदेनैव संशयविपरीतभावनादिविनिर्मुक्तज्ञानाऽवभासितत्वात् अविद्यातत्कार्यभावभानशून्यां निरतिशयसुखस्वरूपां ब्रह्मात्मनाऽवस्थानलक्षणां विदेह-मुक्तिरूपां परां शान्तिं प्राप्नोतीति भावः । उक्तं च—

> सैव देहक्षयं राम ? पुनर्जननवर्जिता ।
> विदेहमुक्तता प्रोक्ता तत्स्था नायान्ति दृश्यताम्[2] ॥

इयमेवाऽवस्था पारमार्थिकावस्था कथ्यतेऽद्वैताचार्यैः प्राचीनाचार्यचरणैः । अस्यामवस्थायां द्वैतो द्वैतजन्यो वा भेदो नैव भासते । यतो द्वैतभेदयोर्मायाकार्यत्वाद् अस्या-

---

१. गीता अ० ४।३९
२. योग वा० ५।४२।१३

मवस्थाया माया तत्कार्यं वा सर्वथा विलुप्त भवति। सर्वेऽपि लोका आत्मनि ब्रह्मणि एवौता. प्रोताश्च जायन्ते। चराचरात्मकमव्याकृतादिस्थूलान्त सर्वमेव जगज्जगत्कारणीभूते सर्वाधिष्ठाने ब्रह्मण्येवाऽनुगन भवति, नावशिष्यते ब्रह्मातिरिक्तं किमपि।

तदानी तन्तुषु पटवत्, मृत्तिकाया घटवत् सूत्रे च मणिगणवत्, मत्सत्तामेवानुवृत्य जगदिद सम्प्रवर्तते सतिष्ठते च, वतः पृथक्सत्ता नास्ति जगतः। आधाराधेयभावोऽपि तदानी समाप्तो भवति। केवलमाधारमात्र ब्रह्मं वावतिष्ठते, ततोऽतिरिक्त नहि किमपि तस्य परमावस्था गतस्य ब्रह्मविद् यतेर्भासते। ब्रह्मातिरिक्तस्य सर्वस्यापि कल्पनाविषयत्वात् मिथ्यात्वात् च।

इयमेवास्ति अद्वैतावस्था। अस्यामवस्थाया "सर्वं खल्विद ब्रह्म नेह नानास्ति किंचन" इति श्रुतिप्रतिपादितभेदनिरसनपूर्वकाऽद्वैतब्रह्मण एव स्थिति सत्ता चाऽनुभूयते। अयमेवचाऽद्वैतभावोऽयमेवचाऽद्वैतवाद इति। उक्त च—

अहं चिदम्बरे भानावहं विद्भूतपंजरे।
सुरासुरेषु चिदहं स्थावरेषु चरेषु च[1] ॥
अपारपर्यन्तनभोदिक्कालादित्रियान्वितम्।
अहमेवेति सर्वत्र य पश्यति स पश्यति[2] ॥
मयि सर्वमिदं प्रोत सूत्रे मणिगणा इव।
चित्तन्तु नाहमेवेति य पश्यति स पश्यति[3] ॥

इद यत् किमपि वस्तुत्वेन भासमान विद्यमान वर्तमानकाले प्रतीयते तत् सर्वं ब्रह्मैव। ब्रह्मणोऽतिरिक्त किमपि नास्तीत्युक्त प्रागेव। तथाहि—

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्त ब्रह्मेदमक्लमम्[4] ॥
सर्वं च खल्विदं ब्रह्म नित्य चिद्घनमक्षतम्।
कल्पनान्या मनोनाम्नी विद्यते नहि काचन[5] ॥
परं ब्रह्मैव तत्सर्वमक्षरामरमव्ययम्।
सर्वमेकमनाद्यन्तमविभागमखण्डितम्[6] ॥

---

१. यो० वा० ५।२७।१२
२. " ४।२२।२५
३. " ४।२२।३१
४. " ६।१।१२५।१
५ " ३।११४।१४
६. " ३।८४।२६

सर्वाण्यपि वेदशास्त्राणि स्वस्वोपनिषन्मुखेन केवलं ब्रह्मप्रतिपादनपराणि एवाऽनुभूयन्ते । तथाहि—

"ईशावास्यमिदं सर्वम्"[1]

"तत्त्वमसि"

"सदेव सोम्येदमग्र आसीत्"

"सत्यं ज्ञानमनन्तम् ब्रह्म"

"सर्वं तत्प्रज्ञानेत्रं प्रज्ञानं ब्रह्म"

"सत्यं चाऽनृतं च सत्यमभवत्"

"ऐतदात्म्यमिदं सर्वम्"

"अयमात्मा ब्रह्म"

"आत्मा वा इदमेक एवाग्रे आसीत्"

इत्यादिश्रुतीनां सर्वासां तात्पर्यविषयीभूतोऽर्थः केवलं परं ब्रह्मैव वर्तते ।

याज्ञवल्क्यादयोऽपि महर्षय एतस्यैवाऽक्षरस्य नित्यकूटस्थस्य, असङ्गस्य चिदेकरसस्य, अद्वितीयस्य परब्रह्मणः शिष्येभ्य उपदेशं प्रकुर्वन्ति स्म, आहोस्वित् शिष्येभ्य उपदेशं प्रयच्छन्ति स्म । तथा च श्रुतिः—

"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्"

एवंविधरूपेणाऽशेषविशेषापवादेन निष्कलं निष्क्रियं शान्तमनन्तं ब्रह्मोपदिशन्ति । एवं वीतरागाः सम्यग्ज्ञानसम्पन्ना यतयः—

"संप्राप्यैनमृषयो ज्ञानतृप्ताः"

इत्युक्तश्रुतिप्रकारेण यत्परं ब्रह्म प्राप्नुवन्ति, यच्च परं ब्रह्म गुरोर्ज्ञातुमिच्छन्तः सन्तो महान्तो ब्राह्मणा —

"भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ"

इत्येवंविधश्रुतिदर्शितदिशा गुरुसमीपे ब्रह्मचर्यव्रतपालनपूर्वकास्ते वसन्ति ।

अथ च सर्वविधविषयानन्दवैमुख्येनाऽऽहारादिनियमेन स्वधर्मेण चाऽनन्यया श्रद्धयाऽव्यभिचारिण्या च भक्त्या श्रोत्रियब्रह्मनिष्ठगुरोः समीपं गत्वा वेदान्तश्रवणात्मकं ब्रह्मचर्यव्रतं चरन्ति यद्ब्रह्मविषये, तद् अद्वैतम् अक्षरं परं ब्रह्म तुभ्यं (शिष्याय) अहं कथयिष्यामीति गुरुः शिष्यं प्रति प्रोवाच ।

---

१. ईशोप० मन्त्रः १

प्रधानम् :—

'प्रधान' शब्दजन्यबोधविषयतावन्तः सन्ति बहवोऽर्थाः। ते च यथा—]

१. "श्रेष्ठम्" इति

२. "प्रशस्तम्" इत्यपि च,

३. "मुख्यम्" इति च गीयते,

४. "सेनापत्यध्यक्षः" अयमप्यर्थस्तादृशविषयतावान्।

५. "सचिवः" इत्यपि च तथाविध एव।

६. "सांख्यास्तु" मूलप्रकृतिरेव प्रधानम्।

इत्येवं क्रमेण बहवोऽर्थाः समनुभूयन्ते प्रधानशब्दस्य। ते च सर्वेऽप्यर्थाः प्रधान-शब्दस्य सन्ति वाच्यीभूताः, न तु लक्ष्यीभूता.।

यथा हरिपदस्य विष्णु-सूर्य-इन्द्राद्यनेकार्थेषु शक्तिमत्त्वेन ते सर्वेऽप्यर्था वाच्यीभूता भवन्ति न तु तत्र लक्षणाऽङ्गीक्रियते, शक्यसम्बन्धाभावात्, शक्यसम्बन्धो हि लक्षणा। हठात् स्वीक्रियमाणे लक्षणायास्तत्र लक्षणानुपपत्तिः, गौरवापादनं च स्यात्। तस्माद् यथा हरिपदं विष्णु-सूर्येन्द्राद्यनेकार्थवाचकत्वम्। 'हरिपदं विष्णुवाचकम्' इत्यादिहरिपद-शक्तिज्ञानात् केवलविष्णुत्वप्रकारकविष्णुविशेष्यकः शाब्दबोधो जायते।

एवं 'हरिपदं सूर्यवाचकम्' 'हरिपदम् इन्द्रवाचकम्' इत्याद्याकारकशक्तिज्ञानाच्च केवलसूर्यत्वप्रकारकसूर्यविशेष्यकः, केवलेन्द्रत्वप्रकारकेन्द्रविशेष्यकश्च शाब्दबोधो यथा भवति, यतो हरिपदस्य प्रत्येकं विष्ण्वादिरूपेऽर्थे पृथक् पृथगेव शक्तिस्वीकारेण नानार्थत्वं अभ्युपगम्यते, तथैव प्रकृतेऽपि 'प्रधान' शब्दस्य एव 'माया' शब्दस्य पृथक् पृथगेव शक्तिस्वीकारेण तयोर्नानार्थत्वं सूपपद्यते।

तादृशपदनिरूपितायास्तत्तदर्थेष्वेकस्याः शक्तेरनभ्युपगमान्न नानार्थत्वं प्रति-षिध्यते, नानाशक्तिमत्त्व एव नानार्थत्वोपगमात्। शक्यतावच्छेदकभेदेन शक्तिभेदस्य नितान्तमावश्यकत्वात्। अवच्छेदकभेदस्याऽवच्छेद्यभेदनियतत्वात्। अन्यथा हर्यादिपदे-ष्वपि शक्त्यैक्यापत्तेः। तथा च 'माया' शब्दवत् प्रधानशब्दस्यापि नानार्थत्वं निष्प्रत्यूहमेवेति मन्तव्यम्।

अत एव भगवान् शङ्कराचार्यः मायाया अन्यपर्यायवाचि अव्याकृतादिशब्दद्वारा प्रधानमपि मायाशक्तेर्वाच्यमङ्गीकृतवान्। इत्थं च प्रधानस्यापि मायाया पर्यायवाचित्वं निष्प्रत्यूहमेवेति मायाया नानार्थत्वं सूपपद्यते। तथा चोक्तं भाष्ये—

"प्रधानमपि प्रकल्प्यमानं श्रुत्यविरोधेनाऽव्याकृतादिशब्दवाच्यम्"[1]

कार्यात्मना प्रधीयते इति प्रधानम् अर्थात् कार्यरूपेण यत् परिणमति तत् प्रधानम्, अर्थाद् अज्ञानम्, अज्ञानमेव च माया। अज्ञानं चाऽत्र प्रकृते मूलाज्ञानमिति व्याख्येयम्।

---

१. ब्र० सू०,शां०,भा० १।२।२२

**अध्यास :**

"अतस्मिंस्तद्बुद्धिरेव अध्यासः"[1]

इयमेवाऽध्यासस्य परिभाषा कृता श्रीशङ्कराचार्येण स्वीये भाष्ये। अन्यस्मिन्नन्यावभासोऽध्यासः कथ्यते। इदं चाऽध्यासलक्षणं सर्ववादिसम्मतमिति न तिरोहितमस्ति केषामपि विदुषाम्। नापि च व्यभिचरितमस्तीदं लक्षणम्। शुक्तिका हि रजतवदेव भासते, रज्जुः सर्पवदित्यनेनाऽध्यासस्वरूपं सर्वथा विवादशून्यम्।

तमेतमेवं लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते। अविद्या हि सर्वानर्थकरीति सर्वत्र श्रुति, स्मृति, इतिहास, पुराणादिषु प्रसिद्धिरस्ति।

अध्यासस्याऽविद्याकार्यत्वादविद्यात्मकत्वम्। अस्याऽध्यासस्यैव निवृत्तये सम्पूर्णं वेदान्तशास्त्रं प्रवर्तते नाऽतोऽन्यथेति वेदान्तडिण्डिमः।

अत्रेदं बोध्यं यस्मिन्नधिकरणे अधिष्ठाने वा यस्यापि वस्तुत्वेन भासमानस्याऽध्यासो जायते तदधिष्ठानम ध्यस्तकृतेन दोषेण गुणेन वाऽणुमात्रेणापि न सम्बध्यते।

> आरोपितं नाश्रयदूषकं भवेत् कदापि मूढैर्मतिदोषदूषितैः।
> नार्द्रीकरोत्यूषरभूमिभागं मरीचिका वारिमहाप्रवाहः॥[2]

तमेतमात्माऽनात्मनोरितरेतराध्यासमविद्याख्यं पुरस्कृत्यैव सर्वेषां सर्वेऽपि प्रमाण-प्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवर्तन्ते। विधिनिषेधमोक्षपराणि च सर्वाणि शास्त्राणि प्रवृत्तिशीलानि भवन्ति।

किमधिकमध्यासविषये वयं ब्रूमहे चराचरात्मकस्यास्य प्रपंचस्य प्रपंचात्मकस्य वा जगतोऽस्तित्वेऽपि खलु अस्यैवाऽध्यासस्य प्रामाण्यं विज्ञेयम्।

**शक्ति :**

अद्वैतवेदान्ते खलु श्रुतित्रयीव सदुपदेशजननी, जननीव प्रजाकल्याणकामिनी, कामिनीव रसिकमनोहारिणी, जगज्जननीयं सत्त्वगुणप्रधानभूता माया शक्तिरूपेणाऽङ्गीकृता श्रीशङ्कराचार्येण।

शाक्तदर्शनस्यापि मूलभूता चास्तीयमेव शक्तिस्वरूपा महामाया। परन्त्वस्ति एतावानेव खलु विशेषो यत् शाक्तदार्शनिकैः सा शक्त्यात्मिका महामाया चिद्रूपेति गीयते, अत्र तु जडात्मिकेति।

---

१. ब्र० सू० शां० भा० १।१।१
२. ,, ,, सत्यानन्दी दीपिका टीका

इयं च जडात्मिका जगज्जननी जगदम्बा शक्तिस्वरूपा माया परमेश्वराधीना सती चराचरात्मक प्रपंचभूतं जगदिदं समुत्पादयति, अर्थाज्जगदुत्पत्तौ जगन्नियन्तुः परमेश्वरस्य सर्वथा साहाय्यमपि विधत्ते। तया विना परमेश्वरस्य जगत्कर्तृत्वं नैव सिद्ध्यति। शक्तिरहितस्य तस्य परमेश्वरस्य प्रवृत्त्यनुपपत्तिदर्शनात्। एतदेव च तस्याः शक्तेरर्थवत्वं महत्त्वं च। तथा चोक्तम्—

"तदधीनत्वादर्थवत्"[1]

अर्थात् परमेश्वरस्य साहाय्यकर्त्र्या मायायाः परमेश्वराधीनत्वात् अस्वातन्त्र्यमङ्गीकृतं श्रीशङ्कराचार्येण। एतदेव हि तस्या मायाशक्तेः सार्थकत्वम् (अर्थवत्व) प्रत्यपादि आचार्यमहोदयेन।

अयमाशयः—सुख, दुख, मोहात्मकत्वेनाऽस्य जगतस्त्रैगुण्यमङ्गीकृतमाचार्येण। अतः सुख, दुःख, मोहात्मकस्यास्य त्रिगुणात्मकस्य जगतः कारणेनापि तथाविधेनैव भवितव्यमिति विचारविमर्शानन्तरमेवाऽऽचार्यः परमेश्वरस्य साहाय्यप्रदानकर्तृत्वेनैव स्वीया शक्तिभूता प्रभूता महामायामङ्गीकृतवान्।

मुक्ताना च जीवानां पुनर्नोत्पत्तावप्यस्या एव त्रिगुणात्मिकाया स्वशक्तिस्वरूपाया मायाया हेतुत्वं बोध्यम्। 'कुतः' इति जिज्ञासायां समाधानमाह—विद्यया ज्ञानशक्त्याऽज्ञानशक्तिभूतायास्तस्या मायास्वरूपाया बीजशक्तेर्दाहात्।

अविद्यात्मिका हि खल्विय बीजशक्तिर्माया 'अव्यक्त' शब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिरस्ति। यस्या महासुषुप्तौ स्वरूपप्रतिबोधशून्याः किल सासारिका जीवाः संशेरते। 'अविद्या' रूपोपाधिमत्वेनैव च तेषा जीवाना सर्वेऽपि संव्यवहाराः संतत वर्तन्ते।

अतस्तेषामेवाऽविद्योपाध्यवच्छिन्नजीवाना स्वस्वरूपप्रतिबोधशून्यतां दूरीकर्तुं पृथक्-पृथक् प्रस्थानाश्चतुश्चतुर्दशाष्टादशभेदभाजोऽनवद्या विद्याः समुपदिष्टाः खलु प्रावर्तन्त। येन तादृशविद्याऽध्ययनजन्यकर्तव्याऽकर्तव्यविषयकज्ञानशक्तिप्रादुर्भावजन्य-भगवच्छ्रवण, कीर्तन, स्मरण, चरणसेवन, अर्चन, वन्दन, दास, सखिभाव, आत्मनिवेदन, प्रभेदभिन्ननवविध परमात्मगोचरभक्तिप्रवणान्तःकरणसमुद्भूतविलक्षणाऽनुभवैकवेद्य-चिदानन्दमयवृत्तिविशेषानुभूतिर्जायते।

तदनन्तरमेव खलु श्रोत्रिय-ब्रह्मनिष्ठगुरोः समीपं गत्वा श्रवण, मनन, निदिध्यासनादिभ्योऽभिव्यक्तौ स्वस्वरूपसाक्षात्कृतौ सञ्चितक्रियमाणकर्मकलापेषु च तत्वज्ञानाग्निना[2]

---

१. ब्र०सू०शा०भा० १।४।३

२. ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन—गीता

भस्मतामुपनीतेषु प्रारब्धकर्मणां चोपभोगादेव विनाशं गते आत्मसाक्षात्कारोत्तरकालीन-कृतिसम्पादितैर्विहितप्रतिषिद्धव्यामिश्रलक्षणैः[1] कर्मकलापैः पुण्यापुण्यप्रचयानुत्पत्तौ सत्यामेव च चतुरशीतिलक्षयोनिकारणीभूतधर्माधर्मबीजप्रक्षयस्य जायमानत्वेन शरीराद्यनुत्पत्तौ स्वस्वरूपोपलब्धिरूपा वा स्वरूपप्रतिष्ठारूपा वा निरतिशयनित्यसुखाविर्भावरूपा वा आहोस्विद् आत्यन्तिकदुःखोच्छित्तिरूपा च परममुक्तिलक्षणा[2] शान्तिस्तेषां जायते।

उपाधि :

(क) श्रीकेशवमिश्रेण स्वकीये 'तर्कभाषा' नामके ग्रन्थे उपाधिशब्दस्य प्रयोजकरूपोऽर्थो व्याहृतः। प्रयोजकस्तत्र निमित्तकारणम्। तथाहि—

"मैत्रीतनयत्व-श्यामत्वयोर्न स्वाभाविकः सम्बन्धः, किन्तु औपाधिक एव, शाकाद्यन्नपरिणामस्योपाधेर्विद्यमानत्वात्। तथाहि—श्यामत्वे मैत्रीतनयत्वं न प्रयोजकं, किन्तु शाकाद्यन्नपरिणतिभेद एव प्रयोजकः। प्रयोजकश्चोपाधिः, इत्युच्यते"[4]।

इत्थं च सर्वत्र तर्कभाषाग्रन्थे 'उपाधि' शब्दस्य प्रयोजक एवाऽर्थो मिलति नान्य इति।

(ख) क्वचिच्च कारणमपि उपाधिशब्दार्थो वर्णितो वर्तते। यथा वायोःप्राणाऽपानादिसंज्ञाया हृदादिस्थानं मुखनिर्गमनादिक्रिया चोपाधिः। अर्थात् वायोः प्राणाऽपानादिसंज्ञायां द्वयोः कारणत्वमस्ति। तत्रैकं कारणं हृदादिस्थानम्, अपरं च मुखनिर्गमनादिक्रिया इति। तथा च वायोः प्राणाऽपानादिसंज्ञायामित्यनयोर्द्वयोरेवोपाधित्वम् अर्थात् कारणत्वं वर्णितम्।[5] इत्थं चात्रोपाधिशब्दस्य कारणत्वमेवार्थो वर्णितो विज्ञेयः।

(ग) एवं क्वचिद् धर्ममात्रम् उपाधिशब्दार्थः। स चोपाधिरूपो धर्मः क्वचिज्जातिस्वरूपः, क्वचिच्च जातिभिन्नोऽपि भवति। यथा—'पदार्थविभाजकोपाधिमत्त्वम्' इत्यत्र पदार्थविभाजकोपाधयस्तावज्जातिस्वरूपा अपि सन्ति, तद्भिन्ना अपि च भवन्ति। यथा—द्रव्यत्व, गुणत्व, कर्मत्व, सामान्यत्व, विशेषत्व, समवायत्व, अभावत्वरूपा भवन्ति

---

१. नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।

२. यदात्मानं विजानीयादहमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय संसारमनुसंसरेत्॥

—न्या० कु० प्रथमः स्त० कारिका-२

३. मुक्तिवादे द्रष्टव्योऽयं विषयः

४. तर्कभाषा, उपाधिप्रकरणम् पृ० ९१

५. मून मथुरानाथी १ पृ० ८५

पदार्थविभाजकोपाधयः । तत्र खलु कर्मत्वान्तास्तावदुपाधयो जातिस्वरूपतां भजन्ते, तदतिरिक्ताश्च खलु अभावत्वान्तास्तद्भेदावच्छिन्नरूपतामिति ।

'स चोपाधिः सखण्डाऽखण्डभेदेन द्वेधा'[१]

तत्र सखण्डोपाधिर्घट-पटादि । घटत्वेन रूपेण सकलघटवत्ता बोधो जायते । एवं पटत्वेन निखिलपटाधिकरणानामलौकिकं खलु सामान्यलक्षणाजन्यं प्रत्यक्षं भवति ।

परन्तु घट पटादीनामनित्यत्वात्तेषां विनाशदशायां कथमिदं प्रागुक्तमलौकिकं प्रत्यक्षं स्यात्तदर्थं सखण्डेऽप्यखण्डमेव परम्परासम्बद्धं प्रत्यासत्तिः । अखण्डं च तदुपाधिर्जा-त्यादिरूपमेवेति भावः ।[२]

(घ) अद्वैतवेदान्तिनश्चाऽविद्यापरपर्यायभूताया मायाया ब्रह्मणश्चेतनतत्त्व-स्योपाधिं वदन्ति । मायाया ब्रह्मण उपाधित्वे सत्येव ब्रह्म ईश्वरसाक्षि इति संज्ञां लभते । उक्तंच—

'ईश्वरसाक्षि तु मायोपहितं चैतन्यम्' तच्चैकं तदुपाधिभूतमायाया एकत्वात् ।[३]

अपि च—'मायाया विशेषणत्वे ईश्वरत्वम्, उपाधित्वे साक्षित्वमिति ईश्वर-त्वसाक्षित्वयोर्भेदः, न तु ईश्वरतत्साक्षिणोः ।'[४]

अत एव तत्राऽयमपि स्वीयः सिद्धान्तो दर्शितोऽद्वैतवेदान्तिभिर्यद् यथा विषयेन्द्रिय-सन्निकर्षादिरूपकारणवशाज् जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते, तथैव खलु भुज्यमानप्राणिकर्मवशात् परमेश्वरस्योपाधिभूतमायाया अपि इदमिदानीं स्रष्टव्यम्, इदमिदानीं पालयितव्यम्, इदमिदानीं संहर्तव्यम् इत्येवरूपा वृत्तिविशेषा जायन्ते ।

एकोऽपि सन् खलु परमेश्वरः स्वोपाधिभूतमायानिष्ठसत्वरजस्तमोगुणभेदेन ब्रह्म, विष्णु, महेश्वर इत्यादि शब्दैर्व्याह्रियते व्यवह्रियते च ।

(ङ) नैयायिकसार्वभौमश्रीउदयनाचार्यमते 'उपाधि' शब्दो योगरूढः उप समीपवर्तिनि, आदधाति सङ्क्रामयति स्वीयं धर्ममित्युपाधिः ।

यद्धर्मबोधकपदसमभिव्याहारेण चोपाधिपदं प्रयुक्तं भवति तद्धर्मसङ्क्रामकत्वं तद् बोधयति । यथा स्फटिकमणिनिष्ठे लौहित्यगुणे 'जपाकुसुमम्' उपाधिर्भवति तत्र लौहित्य-सङ्क्रामकत्वं विशेयम् ।

१ जागदीशी सामान्यलक्षणा
२ अयच विषयः सा० स० सिद्धान्त० तर्कंकौमुद्यां द्रष्टव्यः
३. वेदान्तपरिभाषा प्रत्यक्ष परिच्छेद
४. तत्रैव

एवं यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं निश्चीयते सोऽप्युपाधि-शब्दाभिधेयो भवति। अयं चोपाधिः केवलमनुमानस्थल एव प्रयुज्यमानोऽनुभूयते न सर्वत्रेति। अनुमानस्थलेऽपि यत्र हेतुः साध्यस्य व्यापको भवति तत्रैव। यथा धूमवान् वह्नेरित्यत्राऽयोगोलकावच्छेदेन वह्नौ आर्द्रेन्धनसंयोगात्मकोपाधेर्धूमस्य व्यभिचारिता निश्चीयते इति भवत्यार्द्रेन्धनसंयोगोऽत्र उपाधिः। तथा च धूमवान् वह्नेरित्यत्र वह्निर्धूमव्यभिचारी धूमव्यापकाऽऽर्द्रेन्धनसयोगव्यभिचारित्वाद व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात्। तदुक्तं विश्वनाथपंचाननेन

"व्यभिचारस्याऽनुमानमुपाधेस्तु प्रयोजनम्"[1]

अपि च—

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता॥[2]

अयमेव पक्षः चिन्तामणिकृता श्रीगंगेशोपाध्यायेनापि समर्थितः—

"यः साधनव्यभिचारी स साध्यव्यभिचारोन्नायकः।[3]

इत्थं चोपाधेः साध्यव्यभिचारोन्नायकतया दूषकत्वं बोध्यम्। अर्थाद् उपाधिव्य-भिचारेण हेतौ साध्यव्यभिचाराऽनुमानमेवोपाधेः प्रयोजनं दूषकत्वं चेत्यर्थः।

यत्र च शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभि-चारानुमानं भवतीति निश्चयः। यथा—धूमवान् वह्नेरित्यत्र वह्निर्धूमव्यभिचारी धूमव्यापकाऽऽर्द्रेन्धनसयोगव्यभिचारित्वात्।

अयमाशयः—धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोग उपाधिरित्युपन्यासानन्तरं वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात्, यो यद्व्यापकव्यभिचारी भवति स तद्व्यभिचारी भवतीति व्याप्तेरनुभूयमानत्वात्। यथा प्रमेयत्वं द्रव्यत्व-व्यापकगुणवत्त्वव्यभिचारि तत्प्रमेयत्वं द्रव्यत्वस्यापि व्यभिचारि भवतीति सामान्य-व्याप्तेर्दर्शनात् प्रागुक्ताऽनुमानं साधु सङ्गच्छते।

यत्र तु किंचिद्धर्मावच्छिन्नसाध्यस्य व्यापक उपाधिस्तत्र तद्धर्मवति उपाधि-व्यभिचारेण साध्यव्यभिचारानुमानं बोध्यम्। यथा स श्यामो मित्रातनयत्वाद् इत्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वात्।

---

१. भाषापरिच्छेदः गुणनिरूपणे श्लो० १४०
२. तत्रैव,
३. चि० २, पृ० २६

अस्योपाधेर्लक्षणमप्याह—

स्वावच्छिन्नानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकतावच्छेदकवत्वे सति साधनाव्यापक उपाधिः[1]।

अर्थात् स्वावच्छिन्नानधिकरणं यत् साधनाधिकरण तद्वृत्तिर्यो धर्मस्तादृशधर्मावच्छिन्न यत् साध्यम् तद्व्यापकतावच्छेदकेत्यादि। अत्र स्वपदेनोपाधितावच्छेदकीभूतो धर्मो ग्राह्य.। यथा धूमवान् वह्नेरित्यत्रस्वपदेनाऽऽर्द्रेन्धनसयोगत्वरूपमुपाधितावच्छेदकरूपमादायतदवच्छिन्नानधिकरणं यत् साधना (वह्नि) धिकरणमयोगोलकं तन्निष्ठो यत्किंचिद्धर्मः द्रव्यत्वरूपोधर्मस्तदवच्छिन्नो धूमस्तदधिकरणनिष्ठा यावन्तो धर्मा आर्द्रेन्धनसयोगत्वावच्छिन्नसमानाधिकरणा भवन्ति।

नैयायिकसार्वभौम श्रीउदयनाचार्या —'साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधेर्लक्षण वदन्ति।[2]

अपरे च नैयायिकाः—"यद्व्यावृत्त्या यस्य साधनस्य साध्य निवर्तते स धर्मस्तत्रत्यहेतावुपाधि ।"[3]

प्रकृते चास्माभिर्मायापरपर्यायभूतशब्देषु 'उपाधि'शब्देन कीदृशोऽर्थो गृह्यतामिति जिज्ञासाया जायमानायामिदमेव समाधीयते यद् ब्रह्मण उपाधिलक्षणलक्षितः अविद्याऽज्ञानापरपर्यायभूतः सत्वेन, असत्वेन, सदसत्वेन, अनुभयात्मकत्वेन वा सर्वथा निर्वक्तुमशक्य अत एवाऽनिर्वचनीयोऽय मायारूपोऽर्थ। इयमेव परमेश्वरस्योपाधिभूता शक्तिस्वरूपाऽव्यक्ताऽनादिभूता त्रिगुणात्मिका माया समस्तस्यापि प्रपचभूतस्य जगतः समुत्पत्तिकारणत्वेन ब्रह्मण पराशक्तिरप्यभिधीयते। तथा चोक्तम्—

> अव्यक्तनाम्नी परमेशशक्ति —
> अनाद्यविद्या त्रिगुणात्मिका या।
> कार्यानुमेया सुधियैव माया—
> यया जगत् सर्वमिदं प्रसूयते ॥[4]

---

१. न्यायसिद्धान्तमजरी २, पृ० २२
दीधिति २, पृ० १०५

२. न्यायसिद्धान्तम० २, पृ० २१
तर्ककौमुदी २, पृ० १२ तर्कसं०। दीधितिः २, पृ० १०५

३. चि० २, पृ० २८
दीधिति २, पृ० १०२

४. विवेकचूडामणिः १०८

इयमेव च माया पराशक्तिवत् महासुषुप्तिरप्यभिधीयते। अत एवाऽस्यां महासुषुप्तिस्वरूपायां मायायां सर्वेऽपि प्राणिनः स्वस्वरूपबोधरहिताः सन्तः संचरन्ति, अत्रैव सर्वेऽपि संसारिणो जीवाः शयनं च कुर्वन्ति। तथा चोक्तवान् श्री शङ्कराचार्यः—

"अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिः यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः"[1]।

अस्याः ब्रह्मण उपाधिभूताया मायाया विषये विशेषतश्च वयमग्रे वक्ष्यामः।

मायाशब्दार्थविचारः—

अनाद्यज्ञानस्वरूपया उपाधिभूतया मायया देहात्मप्रत्ययवत् अर्थात् अनात्मन्यात्मत्वभ्रमेणाऽज्ञानान्धकारपतितानां सांसारिकदुःखदावाग्निना सन्तप्यमानानां प्राणिनां शास्त्राध्ययनजन्यविवेकोदयरूपकारणवशात् इयं जिज्ञासा जायते। यदस्य नाशप्रतियोगिता गतस्य विश्वकारागारस्वरूपस्य संसारसागरस्य किं कारणं, कथं च ततः सन्तरणं भवेत्?

अत्रेदं समाहितं सदानन्देन—

"शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतयोपादानं च भवति। यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवति"[2]।

अर्थात् इदमेव जगतो मूलभूतमज्ञानम् आवरणविक्षेपनामकशक्तिद्वयसहितं सत् मायापदाभिधेयतां गच्छति।

मीयतेऽनया—मा+य+टाप्, उणादितो 'यक्' प्रत्ययः, 'अजाद्यतष्टाप्' इति सूत्रेण 'टाप्' प्रत्ययो भूत्वा 'माया' इति शब्दो निष्पन्नो भवति। अस्या मायाया बहवोऽर्था भवन्ति, ते चार्था अनुपदमेव चास्माभिर्विवेचयिष्यन्ते।

एवं माति इति माया, 'श्याद्व्यधास्रु' इत्यादिसूत्रेण 'ण' प्रत्ययः, 'ण' लोपे टाप् अनुबन्धलोपश्च युगागमश्चापि। अन्यत् सर्वं पूर्ववदनुसन्धेयम्।

अपि च माम्परमात्मानं,याति-प्राप्नोति-आश्रयतीति वा माया। तथा चेयं माया परब्रह्म परमात्मानं समाश्रित्यैव सन्तिष्ठते। अत एव ब्रह्माश्रिता मायेति च कथ्यते, मायाया आश्रयीभूतं ब्रह्मेति च तुल्यवित्तिवेद्यतयार्थोऽत एवाऽऽयाति। इत्थंच मायाया आधारभूतत्वाद् ब्रह्मणो जगदाधारत्वं सिद्ध्यतीति भावः।

---

1. ब्रह्मसूत्र शां० भा० १।४।३
2. वेदान्तसारः विक्षेपशक्तिनिरूपणावसरे

जगन्निर्माणकार्ये इयमेव माया परमात्मस्वरूपस्य चैतन्यस्य सहकारिणी भवति, तस्य साहाय्यं करोति। एतस्याः साहाय्यमन्तरा परमात्मा कदापि कथमपि कुतोऽपि नहि चराऽचरात्मकस्यैतस्य जगतो निमित्तकारणम् उपादानकारणं वा भवितुमर्हति।

परमात्मनिष्ठं जगन्निष्ठकार्यतानिरूपितं यदुपादानकारणत्वं तत्र प्राधान्यं केवलं मायायाः। तदुक्तम्—

"स्वोपाधिप्रधानतयोपादानं च भवति।"[1]

इदंच परमात्मनिष्ठं यदुपादानकारणत्वं तन्मायाया एव विज्ञेयं यतस्तत्र मायाया एव प्राधान्यात्। परमात्मनिष्ठन्तु केवलं याचितमणिमण्डनन्यायेनेति बोध्यम्, इत्यस्माकं स्वतन्त्रो विचारः।

एवं गीतायां भगवता श्रीकृष्णेनापि मायाया एव प्राधान्यं दर्शितं कथितं चाऽर्जुनस्य कृते। तथाहि—

"भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया"[2]

सर्वलोकनियन्ता परमेश्वरः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि वासनात्मिकया मायया विक्षेपशक्तिसहकृतया भ्रामयन् अर्थात् स्वस्वकर्मसु प्रवर्तयन् विशेषतो भक्तानां हृदयात्मिकायां बुद्धिगुहायां सन्तिष्ठते।

**मायाशब्दार्थस्य विशेषतो विचारः—**

मीयते अनया—मा+य+टाप् बा० नेत्वम्। अनया यौगिकव्युत्पत्त्या सामान्यतो माया शब्दार्थोऽयमेव निश्चीयते यत् संसरणशीलस्य संसारस्य तुलना यया शक्त्या सह संभवेत् सैव शक्तिर्माया। सा च मायात्मिका शक्तिर्नानार्थवाचिका नानार्थबोधिका चास्ते इत्यपि विज्ञेयम्। तथाहि—

१. पराभिभवेच्छा माया, छायाऽपि माया।[3]

२. परवंचनेच्छाया मायात्व प्रतिपादित गौतम सू० वृत्तौ।[4]

३. कापट्यं माया, धूर्तता अपि माया—[5]

४. इन्द्रजालं माया, स्वप्नोऽपि माया। तदुक्तम्—

"स्वप्नो नु माया नु मतिभ्रमो नु"[6]

---

१. वेदान्तसारे
२. गीता अ० १८, श्लो० ६१
३. वाचस्पत्यम्
४. गौ० सू० ४।१।३
५. पंचरात्रम् १।३५१
६. शाकुन्तल०

५. अवास्तविक आभासोऽपि माया, मनोलीलाऽपि माया।

तथा चोक्तम्—

"मायां मयोद्भाव्य परीक्षितोऽसि"[1]

६. भ्रान्तिर्माया, अध्यासोऽपि माया, अज्ञानमविद्यापि माया, इत्यादीनां सर्वेषां मायाशब्दार्थत्वमङ्गीकृतं सर्वत्राऽद्वैतवेदान्तदर्शने।

७. एवं प्रधानं, प्रकृतिः, अव्यक्तम्, इत्यादयोऽपि सन्ति सर्वे मायाशब्दार्थभूताः-सांख्यदर्शने।

८. किमधिकं ब्रूमो—भगवतो बुद्धस्यापि माता "माया" शब्दार्थभूताऽऽसीत्।

९. कापट्येन जीवनयापनकर्तृत्वावच्छिन्नः, अर्थात् कपटपूर्णजीवनयापनकर्त्ताऽपि माया।—पंचद०

१०. भगवदिच्छाया अपि मायात्वं प्रतिपादितं व्यासमहोदयैर्भागवते।[2] यथा—

"यन्मायया तो बुध आभजेत्तम्"[3]

यथा वा—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया"[4]

अत्रैव मध्वमतानुयायिन इत्थं प्रोट्टङ्कयन्ति—

"मायेत्युक्ता प्रकृष्टत्वात्प्रकृष्टे हि मयाभिधा"[5]

११. वल्लभमतानुयायिनो हि भगवच्छक्तिविशेषस्यैव मायात्वं प्रवदन्ति। एतच्छक्तिविशेषसाहाय्येनैव स परमपिता परमेश्वरो जगदात्मकं प्रपंचमिमं रचयति। इत्थंच पुनरलौकिकाद्भुतमयं प्रपंचजातमिदं पौनः पुन्येन रचयित्वा अर्थात् कृत्वा कृत्वा स्वीयशक्तिसाहाय्येनैव संहरति। हृत्वा हृत्वा च कुर्वन्नेव क्रीडति। तथा चोक्तम्—

कारं कारमलौकिकाद्भुतमयं—

मायावशात् संहरन्।

---

१. रघुवंश २।६२
२. भागवत पु० ११।२।३७
३. „ ११।२।३७, ब्रह्मसूत्रमध्व० भा० १।४।२५
४. गीता ७।१४
५. मर्वद० सं० पृ० १४१ पूर्ण०

हारं हारमपीन्द्रजालमिव यः
कुर्वन् जगत् क्रीडति ॥[1]

एतेन भगवन्निरूपित जगन्निर्माणसाहाय्यकर्तृत्व मायात्मकैतच्छक्तिविशेषनिष्ठमेवेति दर्शितम् ।

एवम्भूत जगन्नाथ मन्नाथम् अनाथनाथम् भगवन्त बाबाविश्वनाथं नमन्नहम् अन्तकालेऽप्यपि भूयासम् ।

सर्वदर्शनसंग्रहेऽप्येतस्या एव मायाया प्रभुत्व प्राधान्यच दर्शितम् । तथाचोक्तम्—

"सैव मानत्राणकर्त्री यस्य यन्मायामात्रम्"[2]

नैयायिकसार्वभौम श्रीउदयनाचार्या अत एव खलु अनाथनाथं बाबाविश्वनाथ नमस्कृतवन्तः, येन नमस्कर्तारं शरणागत भक्तप्रवर मायाया. प्रभुत्व नैव व्याप्नुयात् । अन्यथा मायाप्रभुत्ववशीभूता हि प्राणिनो भूयोभूय स्वीयपुण्यपुञ्जवशात् तपोबलाद्वा ऊर्ध्वलोक गता अपि पुनरावर्तिनो भवन्तीति शास्त्रेषु श्रूयते । यत सर्वेऽपि लोका. सन्ति पुनरावर्तिन । अर्थात् ब्रह्मलोकमारभ्य सर्वेऽपि लोका. पुण्यवशात् ऊर्ध्वलोकगन्तान् जनानपि पुनरावर्त्तयन्ति, अर्थात् पुण्यक्षयान्ते पुनर्भवमेव प्रापयन्तीति ते पुनरावर्तिन कथ्यन्ते । उक्तच—

आब्रह्मभुवनाल्लोका पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥[3]

इत्थ च सत्यादिलोकेषु नित्यत्व, नित्यसुखत्व, अनावर्तित्वविषयिण्या बुद्ध्या सत्कर्मानुष्ठानेन पौन पुन्येन गमनागमनसविधानेन गत्वा पुनरागच्छन्तो निर्गच्छन्तः "पुनरपि जनन पुनरपि मरण पुनरपि जननीजठरे शयनम्" इत्यादिक्रमेण पुन. पुनर्जायमाना म्रियमाणाश्च सन्त सर्वेऽपि प्राणिनोऽहर्निशमनिशमविच्छिन्नप्रयासायासभारमुद्वहन्तो दु खमेवानुभवन्ति नैकमपि क्षण सुख समुपलभन्ते अन्धपरम्परावत् गच्छन्तमनुगच्छन्ति च, अहो कष्टानुभूतिरिय मायाकृता ।

अत प्रभु वरस्य करुणावरुणालयस्य श्रीबाबाविश्वनाथस्य कृते नमस्कृतिसविधानेन भगवत्प्राप्त्या भगवच्छरणागतो विद्वान् मायाकृता पुनरावृत्ति तज्ज या च

१. न्या० कु० द्वि ६ स्त० श्लो० ४
२ सर्वद० स० पृ० १४१ पूर्ण
३ गीता अ० ८, श्लो० १६

कष्टानुभूति तत्साधनीभूतं दैवं प्राजापत्यं वा गान्धर्वं वा मानुषं वा दु:खभूयिष्ठं पांचभौतिकमिदं शरीरं नाप्नोतीति सुनिश्चितमेतत् ।

**मायाशब्दार्थस्य वृत्तिसहितो विचारः—**

इह खलु अद्वितीयसच्चिदानन्दमयपरमात्मैकस्वरूपपर्यवसितेऽपि मायाऽपरपर्यायभूतया प्रकृत्या प्रकटितविविधवैचित्र्ये आपाततोऽतिरमणीयेऽस्मिन् प्रचंचूर्यमाणे वैरिंचे प्रपंचे प्रपंचकारिणीभूताया अविद्यास्वरूपाया मायाया अनन्तगुणगणयुतस्य रमारमणस्य सच्चिदानन्दस्वरूपस्य भगवतः परमेश्वरस्याऽनाद्यनन्तायाः शक्तिभूतायाः साम्राज्यं सर्वतोभावेन सर्वत्रैवाक्षुण्णतया व्याप्तमस्ति, आसीच्चेतः पूर्वकालावच्छेदेनापीति स्वयं वयमनुभवामः ।

इदानीन्तदीयस्वरूपनिर्वचनतः प्राक् संकेतात्मिका लक्षणात्मिका वा वृत्तिमाश्रित्यापि तस्या अर्थविचारो नितान्तमावश्यक इत्येतादृशदृष्टिकोणमालम्ब्यैव दर्शितदिशा "माया" शब्दार्थविचारो विधीयते ।

सर्वेषामेव शब्दाना विभिन्ना बहवोऽर्थाःखलु समुपलभ्यन्ते । बहवश्च पर्यायवाचिनो मायाशब्दा अपि सर्वत्र शास्त्रेषु दर्शनेषु च समवाप्यन्ते । तैरपि शक्तिग्रहो जायते । शक्तिग्रहसाधननिर्वचनप्रकरणावसरे विवरणादपि शक्तिग्रहो भवतीति स्वयमेवाऽङ्गीकृतः श्री विश्वनाथपंचाननमहोदयैः साधुस्वभावैर्विपश्चिद्वरैः ।

विवरणन्तु तत्समानार्थकपदान्तरेण तदर्थकथनम्, अर्थात् घटपदशक्यतावच्छेदकावच्छिन्नार्थे शक्तं यत्कलशरूपं पदान्तरं तेन तादृशसमानार्थकपदान्तरज्ञानजन्येन घटपदशक्यतावच्छेदकावच्छिन्नार्थविषयकज्ञानानुकूलोच्चारणम् । यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद् घटपदस्य कलशे शक्तिग्रहो जायते । तेन चानन्तरमुपस्थितिः, ततश्च शाब्दबोध इत्यस्ति शब्दजन्यार्थोपस्थितिमाश्रित्य शाब्दबोधात्मककार्यक्रमः ।

एवमेवाऽन्यत्रापि प्रत्यक्षानुमानस्थलेष्वपि तत्तत्साधनजन्यार्थोपस्थितिमालम्ब्यैव कार्यकारणभावक्रमो विज्ञेयः । तत्र इन्द्रियार्थसन्निकर्षादिनाऽर्थोपस्थितिर्जायते, केवलमस्ति एतावांस्तु विशेषः । अर्थोपस्थितिरेव सर्वथा विषयप्रकाशनाय सर्वत्रार्थमपेक्षते यतस्तामर्थोपस्थितिमन्तरा जगदान्ध्यं प्रसज्येत । उपस्थितेर्ज्ञानत्वात् ज्ञानस्य च स्वयंप्रकाशरूपत्वेनाऽन्धकारनिवर्तकत्वात् । तदभावे जगदान्ध्यं सुस्पष्टमेव ।

शब्दं (पदं) श्रुत्वापि यद्यर्थोपस्थितिर्न भवति तर्हि तादृशपदस्य (शब्दस्य) श्रवणमश्रवणं चोभयमेव समानम् । यत अर्थोपस्थितिं विना तत्र प्रवृत्तिनिवृत्ती न स्याताम् । उपस्थितेर्ज्ञानत्वात् प्रवृत्तिं प्रति चेष्टसाधनताज्ञानस्य, निवृत्तिं प्रति द्विष्टसाधनताज्ञानस्य,

चिकीर्षायाश्च हेतुत्वात् । चिकीर्षायाश्च ज्ञानसाध्यत्वात् । एतेन सर्वत्र ज्ञानस्यैव महत्वं प्राधान्यं चानुभूयते ।

तथा च ज्ञानस्य स्वस्यप्रकाशकत्वेन स्वविषयीभूतानां घट-पटादिविषयाणामपि प्रकाशकत्वं दृष्टम् । इत्थं च ज्ञानस्यैव सर्वथा स्वतः प्रकाशकत्वेन चेतनत्वमङ्गीकृतं योगाचारवेदान्तिभिर्दार्शनिकैः । अत एव ज्ञानस्यैव स्वतः प्रकाशरूपत्वात् स्वपरव्यवहारे स्वभिन्नप्रकाशानपेक्षत्वात् चेतनत्वं न तु जडत्वम् । किम्बहुना—

"ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता"[1]

अर्थात् ब्रह्मविषयकं यदज्ञानं तन्नाशायापि वृत्तिस्वरूपज्ञानविषयता सर्वथाऽपेक्षिता भवति ।

विषयस्यास्य विशदविवेचनं पुनरग्रे मायास्वरूपनिरूपणावसरे स्वयं वयं करिष्यामः । लेखविस्तरभयान्नात्र विधीयते ।

एवं तत्रैव "पचती" त्यस्य पाकङ्करोति इत्यनेन विवरणाद् 'ति' प्रत्ययस्वरूपस्याऽऽख्यातस्य यत्नार्थत्वं निश्चीयते । इत्थं च पचतीतिवाक्योच्चारणोत्तरकालीनोच्चारणजन्य 'पाकं करोती' ति वाक्यघटककृञ् धातुपदश्रवणजन्यकृतित्वावच्छिन्नार्थविषयकबोधस्य जायमानत्वेनाऽऽख्यातस्य (तिप् प्रत्ययस्य) कृतित्वावच्छिन्ने शक्तिग्रहो निर्णीयते ।

अर्थात् आख्यातं कृतित्वावच्छिन्ने शक्तं कृतित्वावच्छिन्नशक्तकरोतिपदप्रतिपादितार्थप्रतिपादकत्वात् इत्यनुमान तत्र फलीभूतं भवतीति भावः । तदपि च प्रकृते शक्तिग्राहकत्वेन प्रोट्टङ्कितम् । तथा चोक्तम्—

शक्तिग्रहं व्याकरणोपमान—
कोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति—
सान्निध्यतः सिद्धपदस्य वृद्धाः[2] ।।

एभिर्व्याकरणोपमानप्रभृतिभिः साधनैर्द्वग्रहोपि शक्तिग्रहो जायते । तत्र च घटकीभूतेन 'विवृति' इत्यपरपर्यायभूतेन विवरणेनापि शक्तिग्रहो भवतीति सुस्पष्टीकृतम् ।

विवरणन्तु तत्समानार्थकपदान्तरेण तदर्थकथनरूपम् । तच्चेदनीमेव प्रागेवाऽस्माभिर्निरूपितम् । दृष्टान्तभावाभिप्रायेण सङ्केतात्मिकां वृत्तिमाश्रित्येति ।

१. पंचदशी ७।९२
२. न्या०सि०मु० शब्दखण्डे

इतः परं खलु दार्ष्टान्ताऽभिप्रायेण विशुद्धां सङ्केतिमकां वृत्तिमाश्रित्य अखिलशक्तिशालिनो गोवर्धनधारिण+-राधारमणस्य माधवस्य भक्तकामपूरणी पौराणिकी वैदिकी वा पुराणेषु, वेदेषु, शास्त्रेषु च प्रतिपादिताम् अविद्यापरपर्यायभूतां त्रिगुणात्मिकां सत्वगुणप्रधानभूता तां मायां नानाविधतदीयार्थविवेचनपुरः सरं विवेचयामः। तत्र च खलु स्तबकार्थसंग्रहश्लोकावसरे न्यायकुसुमांजलौ स्वयमेवोक्तवान् उदयनाचार्यः—

*इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता। देवोऽसौ विरतप्रपंचरचनाकल्लोलकोलाहलः—साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम*[1]।

अर्थात्जगन्नियन्ता परमपिता परमेश्वरः प्राणिनां प्रारब्धकर्मवशादेव सृष्टिं रचयति। एतेन मायाऽपरपर्यायभूतस्याऽदृष्टस्य जगन्निर्माणकर्तृत्वमर्थत एवाऽऽयाति। एवं च माया—प्रकृति—अविद्याप्रभृतिपदमप्येतददृष्टपरमेवेति न "मायिकं जगत्" इत्यादिश्रुतिविरोधः।

अदृष्टशक्तितो मायात्मिकायाः शक्तेः, प्रकृतिस्वरूपायाः शक्तेर्वा अविद्यालक्षणलक्षितायाः वा अर्थभूताया बोधो लक्षणयैव जायते।

*मायाऽपि दुःखेनोन्नीयते, अदृष्टमपि तथेति सादृश्यमुभयोः तन्मूलिकैवाऽदृष्टरूपे*ऽर्थे मायापदस्य गौणी लक्षणा।

एवं साङ्ख्यानां त्रिगुणात्मिका प्रकृतिः समस्तस्यापि जगतोऽस्ति मूलभूतेति साङ्ख्यैरन्यैश्चापि गीयते, इत्यतः सहकारिशक्तिपदाऽभिधेयमदृष्टमपि साक्षात् परम्परया वा सर्वस्यापि जगदात्मककार्यस्य मूलभूतमित्यस्ति अनयोः प्रकृत्यदृष्टयोः सादृश्यं साम्यं वेति प्रकृतिपदस्याऽदृष्टरूपेऽर्थे गौणी लक्षणैव।

*एवमेव हि यथा वेदान्तिनां मते अविद्यायास्तत्वज्ञानप्रतिबध्यत्वात् तत्वज्ञानेन सा विनश्यति, तथैवाऽदृष्टमपि उत्पन्नतत्वज्ञानस्य भोगेन विलीयते इत्यस्ति उभयोः* सादृश्यमित्यत्रापि पूर्ववदेव लक्षणा विज्ञेया।

*मुख्यार्थस्तु मायाशब्दस्य दोषविशेषोत्पादनपूर्वकभ्रमजनक आत्मनिष्ठव्यापारविशेषरूपोऽर्थो विज्ञेयः।*

*मायाया नानार्थकत्वम्—*

*जगतो मूलभूतत्वादियमेव माया प्रकृतिशब्दजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावती भवति। तत्वज्ञानप्रतिबध्यत्वाच्चेयमेव मायाऽविद्या-*

१. न्या०कु० प्रथम. स्तबकः श्लो० २०

(ग) "अनात्मनि देहादावात्मबुद्धिस्तु देहिनाम् अविद्या"[1]
"अतस्मिंस्तद्बुद्धिरविद्या"[2]

(घ) "निःसंदिग्धाऽबाधिताऽध्यवसायात्मिका प्रतीतिर्विद्या।
तद्विपरीता चाऽविद्येति"[3]।

(ङ) "यदेव पररूपादर्शनं सैवाऽविद्या"[4]

(च) "असत्प्रकाशनशक्तिरविद्या"[5]

(छ) "अविद्या च (वैशेषिकमते) इन्द्रियदोषसंस्कारदोषाभ्यां बुद्धिविशेषः (अयथार्थबुद्धिः)"[6]

(ज) "शंकराचार्य.—अविद्या बीजशक्तिस्वरूपा परमेश्वराश्रीता मायामयी महासुषुप्तिरूपा चास्तीति ब्रूते। उपनिषत्स्वपि 'अविद्या' शब्दस्य ज्ञानरूपेऽर्थे प्रयोगो मिलति।

(२) अज्ञानम्—

(क) भगवता श्रीकृष्णेन गीतायां स्वयमेवाऽज्ञानशब्दस्य प्रयोगोऽमिथ्याकरूपेऽर्थे तथा मायारूपे चाऽर्थे कृतः। तथाहि—

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"[7]।

वेदान्तसारप्रणेता सदानन्दो मायावत् अज्ञानमपि सदसद्विलक्षणं सदेव तदनिर्वचनीयमिति व्याख्यातवान्। अपि च—सर्वदर्शनसंग्रहेऽपि अज्ञानविषये इत्थं प्रोद्टङ्कितवन्तो मायावादिवेदान्तिनः—

अनादि भावरूपं यद्विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते॥[8]

अज्ञाने भावत्वसाधकं खलु प्रमाणमनुमानमेव। तथाहि—

---

१. सर्वद०सं०पातंजल द० पृ० ६६७
२. " पृ० ६६८
३. न्यायकन्दली पृ० ४१४ गुणे बुद्धिप्रक०
४. सर्वद०सं०शांकर द०पृ० ८७२
५. तत्रैव
६. प्रशस्त० गुण नि० पृ० २३
७. गीता
८. सर्वद०सं० पृ० ६३

"विवादास्पदीभूतं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्य-स्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् प्रथमोत्पन्नदीपप्रभावत्" ।[1]

(ख) अज्ञानम्—निग्रहस्थानम्, 'अविज्ञातं चाज्ञानम्'[2]

एतत्सूत्रोपरि वात्स्यायनभाष्यम्—

'विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञानं तदज्ञानं निग्रहस्थानम् । अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति"[3] ।

एतेषा नये ज्ञानं नास्त्यविद्या येन वेदान्तमतानुप्रवेशः स्यात्, अपि तु निग्रह-स्थानरूपम्, ज्ञानाभावस्वरूपं चेति ।

(ग) परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञानम् । इदं च किं वदसि—बुद्ध्यते एव नेत्याविष्करणेन ज्ञातुं शक्यते इति ।

(घ) "अत्र अविज्ञानमित्यस्यार्थस्तु वाक्यार्थस्याऽनवबोध इति" ।[4]

(३) प्रकृति—

(क) दर्शनक्षेत्रे प्रकृतेः स्वरूपद्वयं समुपलभ्यते ।

(१) एकं तत्स्वरूपं साङ्ख्यदर्शनस्य जगन्निरूपितकर्तृत्वावच्छिन्ना स्वतन्त्रा प्रकृतिः ।

(२) अपरं च तत्स्वरूपमद्वैतवेदान्तसम्मतं परमेश्वरपरवशा प्रकृतिः । अस्यैव तत्स्वरूपस्य समुल्लेखः श्वेताश्वतरोपनिषदि 'मायां तु प्रकृतिं विद्यात्" इत्यादिरूपावच्छिन्नः समुपलभ्यते । इयमेव च श्वेताश्वतरोपनिषदि समुल्लिखिता प्रकृतिर्मायायाः खलु पर्यायवाचित्वेनाऽङ्गीकृता चास्तीति सर्वेऽपि मायावादिनो वदन्ति ।

श्रीशङ्कराचार्यः "ईश्वरस्य मायाशक्तिः प्रकृतिः" इत्याद्युक्त्या मायायाः पर्यायवाचित्वमस्या एव प्रकृतेरभ्युपगतं न तु साङ्ख्यशास्त्राभिमतायाः प्रकृतेः । यतोऽस्याः साङ्ख्याभिमतायाः प्रकृतेः स्वतन्त्रत्वात्, तदितरायाश्च तस्याः परमेश्वराधीनत्वेन परतन्त्रत्वाद्द्वयोश्चास्ति परस्परं महदेव वैषम्यम् ।

अज्ञानमेकमनेकं वा आहोस्विदुभयं वेति विचारः—सर्वेषामेव जागतिकानां तदतिरिक्तानां वा पदार्थानां विषयाणां वा स्वरूपं द्विविधमेवाऽनुभूयते ।

---

1. सर्वद० सं० पृ० ९२
2. गौ० ५।२।१८
3. वात्स्यायनभाष्यम् ५।२।१८
4. गौ० वृ० ५।६०
5. नीलकण्ठी

(1) एकं सद्रूपम्,

(2) द्वितीयं चासद्रूपम् ।

इत्यतोऽतिरिक्तं तृतीयं वा चतुर्थं वा किमपि स्वरूपं न विलोक्यते नाप्यनुभूयते च । यतस्तृतीयस्योभयात्मकस्य रूपस्य, चतुर्थस्यानुभयात्मकस्य वा रूपस्य सर्वथाऽलीकत्वात् तुच्छत्वाच्चानुपादेयत्वं हेयत्वंच सिद्ध्यति । अतस्तादृशरूपावच्छिन्नत्वेनाऽनिर्वचनीयत्वघटितमेवाऽज्ञानलक्षणं प्रकुर्वन्ति श्रीसदानन्दयतिमहोदया —

अज्ञानन्तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किंचिदिति ।[१]

अपरे तु अनादिभावरूपं यद्विज्ञानेन विलीयते ।

तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते[२] ॥

आभ्यां द्वाभ्यामेव लक्षणाभ्यां तदितरैश्चापि सर्वैरेव अस्याऽज्ञानस्य भावरूपता सिद्ध्यति नाऽभावरूपता तस्य येन ज्ञानाभावरूपमज्ञानं स्यात् ।

अज्ञानस्य भावत्वसाधकं प्रमाणमप्यनुमानमेव विशेषं तच्चाऽनुमानं यथा—

विवादास्पदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्[३] इत्यनुमानं बोध्यम् ।

'अहमन्यं न जानामि' 'त्वदुक्तमर्थं न जानामि' 'एतावन्तं कालं सुखमहमस्वाप्सम् न किंचिदवेदिषम्' इति स्मृतिविषयीभूतं सौसुप्तप्रत्यक्षविषयीभूतं चेदमज्ञानं समष्टि—व्यष्टितात्पर्याभिप्रायेणैकमिति व्याह्रियते व्यवह्रियते च ।

तत्र समष्टितात्पर्याऽभिप्रायेणैकमिति व्यवह्रियते व्यष्टितात्पर्याऽभिप्रायेण चाऽनेकमिति व्यवह्रियते ।

समष्टित्वं च सर्वत्राऽनुस्यूतत्वम् गोत्व, घटत्व पटत्वादिवत् । प्रकृतदृष्टान्ते च वनत्वं समुदितेषु सर्ववृक्षेषु वर्ततेऽनस्तत् समष्टित्वरूपम् ।

व्यष्टित्वंच तत्तद्व्यक्तिस्वरूपम् । अनेकपदार्थानां मेलनकरणेन व्यवहारे समष्टिरिति उच्यते । यथा वनं, जलाशय इत्यादिः । प्रत्येकव्यवहारे च व्यष्टिर्वृक्षो जलमिति च उच्यते ।

१. वेदान्तसार गंगाटीकासहित. पृ० ४०

२. सर्वद० सं० पृ० ६३

३. सर्वद० सं० पृ० ६६

एवमनेकत्वेन ज्ञायमानानां जीवगताऽज्ञानानां समष्टितात्पर्याऽभिप्रायेणाऽज्ञानैकत्वव्यवहारोऽपि जायते, अजामेकामिति श्रुतेः।

अयमाशयः—शास्त्रेष्वास्तिकाभिमतेषु सर्वत्रैव शुकप्रभृतीनां मोक्षश्रवणात्तदुपलम्भाच्च अस्मदादीनाञ्च संसारोपलम्भात्,प्रतिपुरुषं न जानामीत्यनुभूयमानानि खल्वज्ञानानि पृथक्-पृथक् एव अर्थाद् भिन्नानि भिन्नानि अवश्यमङ्गीकर्तव्यानि, अन्यथा बन्धमोक्षव्यवस्था न स्यात्। अतश्चाऽजामेकामिति श्रुतेरज्ञानसमष्ट्यैक्यविषयत्वमवश्यमेव स्वीकर्तव्यम्।

ततश्चाऽज्ञाननानात्वे निश्चिते तादृशाऽज्ञानोपाध्यवच्छिन्ना जीवाश्च नाना भवन्ति, एवं च शुकादीनां मोक्षे जायमानेऽप्यस्मदादीनां संसारोपलम्भो न व्याहतो भवति, इदमेवोक्तं यतिवरश्रीसदानन्देन—

"इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते। तथाहि यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशो, यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति। तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशः, अजामेकामिति श्रुतेः।"[1]

समष्टिश्च जगतो मूलभूतमज्ञानं माया इति चोच्यते। इयं चाज्ञानापरपर्यायभूता माया मोहादिना अप्रतिहतज्ञानशक्तिकस्य चैतन्यस्योपाधिः। एतदुपाध्यवच्छिन्नं चैतन्यं सर्वज्ञः सर्वेश्वरः सर्वनियन्ता अन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते।

एतादृशाऽन्तर्यामी ईश्वर एव खलु सात्त्विक, राजस, तामसगुणानवलम्ब्य सृष्टिस्थितिसंहारकर्ता भूत्वा ब्रह्मा, विष्णु, रुद्र इति च नामत्रयं दधौ।

किंचाऽयमेवेश्वरपदाभिधेयो भक्तकामकल्पद्रुमः परमात्मा विष्णुर्दुष्टदमनपूर्वकगोविप्रसुरादिसाधुपरित्राणपरायणो भूत्वा राम, कृष्ण, नृसिंहाद्यवतारान् जग्राह। अयमेव च भक्तकामपूरणीं पौराणिकीं लीलामपि समये समये विदधानो दृष्टिगोचरतां याति। अयमेव च कृष्णरूपेणाऽवतारितो भूत्वा दुष्टसदसि दुष्टदुःशासनदुःशासितायाः भक्तवरायाः द्रौपद्याः कृतेऽनेकाऽनेकालौकिकवस्त्ररूपेण साहाय्यमपि सम्पूर्णतया चकार। अयमेव च पुनः तुलसीमालागोपीचन्दनाद्यलङ्कृतायां प्रतिमायां प्रतिष्ठाविधिना सुस्थिरो भूत्वा भक्तजनानां चोपास्यो भूत्वा सर्वाननुजिघृक्षति।

तथा च विराडुपासनायामनधिकारिणः खलु त्रिमूर्तीनामुपासनां कुर्वन्तु। तदनधिकारिणश्च रामकृष्णप्रभृतीन् देवानुपासन्ताम्। तत्राप्यनधिकारिणश्च ताम्र, मृदादिप्रतिमादावुपासन्ताम्। इदं च सर्वं माहात्म्यं समष्टिभूतस्याज्ञानाऽपरपर्यायभूतस्य मायास्वरूपस्योपाधेर्वेदितव्यम्।

---

१. वेदान्तसारः गङ्गाटीकासहित पृ० ४१

इदमत्रावधेयं शंकराचार्यमतानुसारं तत्त्वम् आत्माऽथवा ब्रह्म वास्ति। यच्च ब्रह्म ज्ञानस्वरूपं वर्तते। इदंच परमार्थत. परं, निर्विकल्पं निर्विशेषं निर्गुणं चास्ति। इयं चाऽज्ञानापरपर्यायभूता ब्रह्मशक्तिर्माया, अविद्या (मूलाविद्या) वा स्वीयावरणविक्षेपशक्तिसमन्विता सती इदं ब्रह्म अपरम्, सविकल्पम्, सविशेषम्, सगुण च विद्यते। एतत्स्वरूपावच्छिन्नमेवात्मतत्वमीश्वरः कथ्यते। अयमेवेश्वरः खलु जगत. समुत्पत्तिस्थिति, लयकारणं च जायते।

अयमेव च खलु विषयी यो जीवस्तद्रूपेण विषयभूतच यज्जगत्तद्रूपेण भासमान भवति। इदमपि प्रसङ्गसङ्गतिवशादेव पुनरधिकं निरूपितम् इत्यलमतिविस्तरेण।

(४) अव्यक्तम्—

भगवता श्रीशङ्कराचार्येण स्वीये ब्रह्मसूत्रभाष्ये विद्यात्मिका बीजशक्तिर्मायाऽव्यक्तशब्देन निर्दिष्टा। तथा हि—"अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्य-परमेश्वराश्रया मायामयी महासुषुप्तिः यस्या स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः तदेतदव्यक्तम्"[1]—

इत्थं चाऽव्यक्त मायामयी बीजशक्ति-अविद्यायाश्चास्ति पर्यायभूतम्। एवं मायामयी बीजशक्तिस्वरूपाऽविद्याऽव्यक्तस्यास्ति पर्यायभूता तथा चाव्यक्तं बीजशक्तिस्वरूपाऽविद्यातो नास्ति अतिरिक्तम् अपि त्वनतिरिक्तमेवेति विज्ञेयम्। अविद्यारूपकारणवशादेव च जीवस्य सर्वे व्यवहारा. प्रवर्तन्ते। तथा चोक्तम्—

"अविद्या ह्यव्यक्तम्। अविद्यावत्त्वेनैव जीवस्य सर्वः सव्यवहारः संतत वर्तते।"[2]

(५) आकाशम्—

अविद्याया. पर्यायभूतस्याऽव्यक्तशब्दस्य निर्देशः क्वचिदाकाशशब्देनापि कृतोऽनुभूयते। उक्तंच—

"तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्"—तत्रैव

"एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतः प्रोतश्च॥"[3]

इत्थं चाकाशस्य प्रपंचहेतुत्वादेवाऽविद्यायाः पर्यायवाचित्वमवश्यमेवाभ्युपेयम्। अपि च "तदभिन्नाभिन्नस्य तदभिन्नत्वम्" इति नियममाश्रित्यापि अविद्यातो भिन्नस्याव्यक्तस्याऽभेद आकाशे सन्तिष्ठतेऽतोऽविद्यातोऽप्यभिन्नमाकाशं सुतरां सिद्ध्यतीति भावः।

---

१. ब्र०सू०शां०भा० १।४।३

२. तत्रैव „ १।४।३

३. बृहदारण्यको० ३।८।११

(6) अक्षरम्—

भगवन्तः श्रीशङ्कराचार्यपादा —"क्वचिदक्षरशब्दोदितम् ॥"[1]
"अक्षरात परत पर ।"[2]

इति श्रुतिभाष्योक्त्यनुसारेण अक्षरस्यापि अव्यक्तपर्यायवाचित्वमङ्गीकृतम् । ज्ञान बिना अन्तो न भवति नापिभविष्यतीत्यत एवाऽविद्याया अक्षरत्व व्याहृतम् ।

"अश्नोति व्याप्नोति स्वविकारजातमित्यक्षरम्[3] ।"

अर्थात् स्वविकारसमूह यद् व्याप्नोति तस्यैवाऽपर नाम 'अक्षर' इति चास्ति । 'अक्षर' शब्दस्य प्रकृते नास्ति 'अविनाशी' इति चार्थं इत्यपि विज्ञेयम्, ब्रह्मणोऽतिरिक्तस्य सर्वस्यापि विनाशित्वप्रतिपादनात्[4] ।

"ब्रह्म सत्य जगन्मिथ्या"

इत्यादिश्रुत्या ब्रह्मभिन्नस्य सर्वस्यापि मिथ्यात्वप्रतिपादनेन विनाशित्व निश्चीयते ।

(७) अव्याकृतम्—

अक्षरमव्याकृत नामरूपबीजशक्तिस्वरूप भूतसूक्ष्ममीश्वराश्रय तस्यैवोपाधिभूत मायावत् । मायावदेव चेदमव्याकृतमीश्वराधीन सन्नामरूपयोरुपादानकारण जायते । श्रीशङ्कराचार्योऽव्याकृतमपि मायाविद्ययो पर्यायवाचत्वमङ्गीकरोतीत्यतोऽव्याकृतमपि मायाया समुचितार्थबोधक भवतीत्यत्र नास्ति लेशतोऽपि सशयावकाश इति । मायावदेव चेदमव्याकृतमपि नैसर्गिकलोकव्यवहार जनयति प्रपच रचयति, सृष्टि चापि विधत्ते उक्त च—

"अक्षरमव्याकृत नामरूपबीजशक्तिस्वरूपम् ।
भूतसूक्ष्ममीश्वराश्रय तस्यैवोपाधिभूतम्[5] ॥

अर्थात् इदमव्याकृत नाम-रूपात्मकस्य जगत कारणीभूतस्य परमेश्वरस्योपाधिभूतमस्ति यस्मिन्नव्याकृते भूताना सस्कारा अपि शक्ति सन्तिष्ठमाना चिन्मात्र परमेश्वरो यस्याः याश्रयोभूतस्तस्यैवोपाधिभूत किंचित्स्वतन्त्र तत्व तदेवाव्याकृत, मायानिरूपितसादृश्यवत्वेन मायासदृश मायापर्यायवाची चेति मन्तव्यम् ।

---

१ बृहदारण्यको० ब्र० सू० शा० भा० १।४।३
२. मुण्डकोप० २।१।२
३ ब्र० सू० सत्यानन्दी टीका १।२।२२
४. अयच विषयो रत्नप्रभाया द्रष्टव्य १।४।३
५. ब्र० सू०शां०भा० १।२।२२

प्रथम: पादः

# मायाया महत्त्वम्

ब्रह्मैव केवलमीश्वर-जीव, जगद्रूपेण प्रतीयमानो भवति। एकमेव ब्रह्मतत्वं द्रष्टुमिच्छन्तो विद्वांसो जना नानारूपेषु पश्यन्ति। उक्तंच—

"एकं सद् विप्रा बहुधा वदन्ति।"

तच्च ब्रह्मतत्वं नास्ति केवलं चिन्मात्रसत्वम्, अपितु आनन्दसत्वमपि तत्। संसारे जीवने च आहोस्वित् सांसारिकजीवने यदप्यस्ति प्रतीयमानमानन्दसत्वमविवेकिनां तत् केवलमानन्दलेशमात्रम् आनन्दस्याऽऽभासमात्रं वेति। अयञ्च विषयानन्दशब्देन कथ्यते।

द्विविधो ह्यानन्द. परमानन्दो विषयानन्दश्च। तत्र द्विविधाऽऽनन्दमध्ये योऽस्ति ब्रह्मानन्द: स परमानन्दशब्देन गीयते। अपरश्च विषयाऽऽनन्द: संसाराऽऽनन्द इति च शब्द्यते।

सर्वेऽपि प्राणिनो जीवा आनन्दान्वेषणपरा एव खलु दृष्टिगोचरता गता: संलक्ष्यन्ते। वास्तविकमानन्द (परमानन्द) प्राप्तुं सामर्थ्यसम्पन्ना: सन्तोऽपि ते तत: पराङ्मुखा एव तावताऽपि दृश्यन्ते। एतस्यैव च ब्रह्मण आनन्दरूपता प्रतिपादिता भवति सर्वत्र श्रुति-स्मृत्यादिषु। तथाहि—

"अयमात्मा सन्मात्रो नित्य. शुद्धो बुद्ध: सत्य:।
मुक्तो निरञ्जनो विभुरद्वयानन्द. पर: प्रत्यगेकरस: ॥"[1]

अपि च—

"आत्मा ब्रह्मैव भवति सद्रूपत्वाच्चिद्रूपत्वादानन्द-
रूपत्वादविक्रियत्वादसंगत्वात् परिपूर्णत्वाच्च"

अन्यदप्युक्तम्—

मायाऽविद्ये विहायैव उपाधीपरजीवयो:।
अखण्डं सच्चिदानन्द परं ब्रह्म विलक्ष्यते।[2]

अयमेव चाऽऽनन्दोऽपरिच्छिन्नानन्दोऽप्रमेयानन्द, निरतिशयानन्द. नित्यानन्द:, परमानन्द', अक्षयानन्द:, भूमानन्द.। तथा सर्वाधिष्ठानस्वरूपपरमप्रेमास्पदप्रियतमाऽमृतात्मानन्दश्चाऽयं ब्रह्मानन्द: आनन्दाऽऽभासत्वेन सुखाभासत्वेन वा भासमानान् सकलविषयाऽऽनन्दान् स्वाभ्युदयाऽपवर्गहितोत्तरक्षणाविच्छेदेनैव सातिशेते। अस्मिंश्च परमानन्दस्वरूपे ब्रह्मानन्दे इदमेवास्ति इतरानन्दतो वैलक्षण्यम्, यदयं परमानन्द: प्रकाशस्वरूप: चित्स्वरूप.,आत्मरूपश्च। अपरश्च अर्थाद् विषयानन्द अन्धकारस्वरूपो जडात्मको नात्मरूपश्चेति सर्वथा तद्विपरीत:, अयंच परमानन्दोऽनादिरनन्तोऽद्वैतरूप:,अपरश्चास्ति सर्वथा सर्वतोभावेन वैलक्षण्यमापन्नस्तद्विलक्षण:।

अयं च परमानन्द: सविकल्पबुद्धिद्वारा गम्यो नित्य: शुद्धो बुद्धो,मुक्त आत्मरूप:। विषयानन्दश्च सर्वथा तद्विपरीत: अनात्मरूप.।

---

१. नृसिंहोत्तरतापनीयोप०
२. अध्यात्मोप० १।३२

एवं परमानन्दस्य ज्ञानेन जरा-जन्म-मरणरूपचक्रात्मकबन्धनात् सर्वथा विनिर्मुक्तो भवति, विषयानन्दानुभवेन चैतद्विपरीतं प्रागुक्तं बन्धनमेव जायते।

विषयाणां विषयजन्याऽऽनन्दानां चैतेषां सर्वेषामेव कारणीभूतेयमस्ति जगज्जननीऽविद्यापरपर्यायभूता सत्त्वाऽसत्त्वादिरूपेण केनापि निर्वक्तुमशक्या सत्त्वगुणप्रधानाऽनिर्वचनीया महाशक्तिस्वरूपेयं माया ममाश्रयमापन्ना सती सृष्टिरूपं कार्यं साधु सम्पादयति सञ्चालयति च।

यथा दुग्धस्य विकार (जामन) संसर्गमापन्नं दुग्धमपि दधिरूपेण परिणतं जायमानमनुभूयते, तथैव प्रकृतेऽपि सत्त्वगुणप्रधानभूताऽनिर्वचनीयेयं भगवत्सम्बन्धिनी ब्रह्माश्रिता माया ब्रह्मसंसर्गवशात् जगद्रूपेण परिणमते।

अत एव सचराचरं जगदिदं मायाया अस्ति परिणामभूतम् अध्यक्षभूतस्य च ब्रह्मणो विवर्तभूतम्। ब्रह्मणः सन्निधिमात्रेण प्रधान-मायाऽऽदीनां प्रवृत्तिर्दृश्यते। साक्षिणा, कूटस्थेन, असङ्गचिद्रूपेण प्रधानापरपर्यायभूताया मायाया जगद्रचनाविषयकप्रवृत्तिकारणीभूतेन ब्रह्मणा संसृष्टेयं मायैव सर्वमिदं चराऽचरात्मकं जगज्जनयति, स्थापयति, संहरते च केवलं ब्रह्मणः सान्निध्यमात्रेण। साक्षात् स्वयं जडत्वेन गतिराहित्यावच्छिन्ना सतीयं माया सर्वसाक्षिणो ब्रह्मणः सान्निध्यमात्रेण गतिशीला जायते।

यथा वा 'चुम्बक' नामकं लोहखण्डं स्वसंसर्गेण निष्क्रियं जडभूतं चायः पिण्डमपि सक्रियं विधत्ते।

यथा वा सर्वसाक्षिणो भगवतो भास्करस्य सान्निध्यमात्रेण अर्थात् स्वप्रकाशबलेन सर्वेषामेव प्राणिनां प्रवृत्तिनिवृत्तिश्च इष्टानिष्टसुखादिज्ञानं च स्वयमेव सिद्ध्यति।

यथा वा शरीराश्रिता सर्वा अपि शैशव, तारुण्य वृद्धत्वाद्यवस्थाविशेषाः शरीरसान्निध्यमात्रेण केवलं स्वयमेव जायन्ते।

तथैवास्य समस्तस्यापि सचराचरस्य विश्वस्य जननी तथाश्रमीभूतापीयं ब्रह्मणोऽनिर्वचनीया माया ब्रह्मणः सान्निध्यं समवाप्यैव खलु विश्वमिदं सृजति, पालयति, संहरति चेति।

नैतावन्मात्रमेवाऽस्माकं मायाया महत्त्वविषये पर्याप्तं कथनं तात्पर्यं वा विशेषम्, अपितु तस्मिन् भगवति परब्रह्मणि सर्वा अपि क्रिया क्रियाविशेषाश्च गतिस्वरूपा, एवं तदीयं जन्म, अवतरणं च द्वैतलक्षणलक्षितं भेदात्मकं मिथ्याभूतं सर्वमपि जगद्रूपं कार्यं मायामात्रमेव, अर्थात् मायाकल्पितमेव, अर्थात् अज्ञानाऽविद्या-कल्पितमेव। तथा चोक्तम् —

"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः"।[1]

अपि चोक्तम् —

"ब्रह्मादिस्तम्बपर्यन्ता मृषामात्रा उपाधयः[2]

---

१. गौ० उ० ७।२४।१

२. अध्यात्मोप० १८

एवं ब्रह्मा, विष्णुः, भगवान् शङ्करः बाबाविश्वनाथः इत्यादिरूपेण योऽस्ति परमात्मनो विभागः एवमिन्द्र, वरुण यमेत्यादिरूपेणापि यो ऽस्ति देवतानां विभागः सोऽप्यज्ञानाऽ परपर्यायभूतमायाकल्पित एव। इत्थं च सर्वमेव द्वैतं भेदं तदात्मकं वा जगत् मायैव रचयति। यथा—

"परात्मनो मनुष्येन्द्र ? विभागो ज्ञानकल्पितः"[1]

तथाऽयमेव खलु विषयः प्रकारान्तरेणापि वर्णितः —

"एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः"[2]

एवं तत्तद्भेदावच्छिन्नो भगवान् यदपि करोति कुर्वन् वा प्रतीयते सोऽपि मायादेवीप्रभावतो मायादेवीसंसर्गतो वेति महत्त्वं वेदितव्यं मायायाः।

एवं तात्त्विकदृष्ट्या विचार्यमाणे तत्त्वैकमेव ब्रह्मभूत परमात्मतत्त्वं सर्वत्र व्याप्तमस्ति, तच्च खल्वखण्डैकरसस्वरूपं ब्रह्मतत्त्वं नाप्यस्ति कस्यचिदाश्रयभूतं नापि च विषयभूतम्। "नाश्रयो भवति नापि गोचरः" इत्यभियुक्तोक्तेः।

परन्तु अस्या मायायाः प्रभावेण संसर्गेण वा उभयथा वा तत् परमतत्त्वं तत्तद्गुणभेदावच्छिन्नं सत् तत्तद्रूपताम् अर्थात् तत्तत्स्वरूपतां प्रतिपद्यते। अर्थात् सत्त्वगुणप्राधान्यावच्छिन्नो ब्रह्मा भवति, रजोगुणप्राधान्यसमन्वितश्च विष्णुर्भवति, एवं तमोगुणप्राधान्यावच्छिन्नश्चाऽस्ति महेश्वर इति रूपत्रैविध्यावच्छिन्नमेकमेव तत्त्वं त्रिविधदेवताभावं प्राप्नोति।

इदमेव चाऽस्ति तस्य परब्रह्मणो विकृतं रूपं, यच्चास्ति खलु कलुषत्वमिवापन्नं भेदरूपमिति सर्वमपि माहात्म्यमविद्यापरपर्यायभूताया मायाया एव केवलं विज्ञेयम्। एवं चात्र विवर्तवादः सुस्पष्टीकृतः। तथा चोक्तम् —

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते॥

## द्वितीयः पादः

अपि चोक्तम्—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥[3]

---

१. विष्णुधर्मोत्तर पु०
२. ब्रह्मपूर्वोपनि० ५।७
३. वा०प०

अन्यच्चापि—

अर्थाविभागमेवेदं ब्रह्मतत्वं सदा स्थितम् ।
अविद्योपप्लवाल्लोको विचित्रं त्वभिमन्यते ॥[1]

एवंविधचेदं ब्रह्मणि वैचित्र्यदर्शनं, विभागदर्शनं द्वैतदर्शनं, भेददर्शनं चेति सर्वमेवास्ति मायाया माहात्म्यम् ।

इत्थं चैकस्मिन् एकविधे एव वा तस्मिन् ब्रह्मतत्वे मायासंसर्गवशात् जायमानभेदभावसाहाय्येन तदेवैकमद्वितीयं ब्रह्मतत्वं कदाचिज्जीवरूपेणाभिनयं करोति, कदाचिच्चेश्वररूपेणेति । एवं स्थिते यत्कालावच्छेदेन तस्मिन्नेव तत्वभूते ब्रह्मणि मायाप्रभावेणैवंविधः प्रागुक्तो विभागः समुत्पद्यते तत्कालाऽवच्छेदेनैव तत्र जीवेश्वरयोरुपास्योपासकभावयोरपि जागृतो भवति । अर्थाज्जीवः स्वयमुपासको भूत्वा जगन्नियन्तारं परमात्मानमीश्वरमुपास्ते इतीश्वरस्तत्रोपास्य. ।[2] एवंविधं भेदभावं भेदभावजन्यवैधर्म्यं वा जनयित्री केवलं जगज्जननी महामाया ब्रह्मण. शक्तिभूता स्वयं चाऽपि भेदभावभूषिता एवाऽस्तीति ततोऽतिरिक्तस्य कस्यापि नहि भेदकत्वं कल्प्यते, कल्पयितुं वा शक्यते इति तु परमार्थः । इदमेवास्ति सर्वं महत्वं मायाया नेतरस्य वक्तुं शक्यते । उक्तं च—

तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मनोः ।
चिन्मयस्याऽद्वितीयस्य निष्कलस्याऽशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना [3] ॥

अन्यदप्युक्तम् —

"मयि जीवत्वमीशत्वं कल्पितं वस्तुतो नहि" [4]

इत्यादिश्रुत्यनुसारमविद्यापरपर्यायभूतया मायया चिन्मयस्य शरीररहितस्य निष्कलस्याऽद्वितीयस्य ब्रह्मणो रूपकल्पना या कृता वर्तते सा केवलमुपासकानामुपासनाकार्यार्थमेव विज्ञेया । परन्तु मायासम्बन्धावच्छिन्नेश्वरस्योपासनयाऽऽत्यंतिकी दुःखनिवृत्ति कालत्रये ऽपि न सम्भाव्यताम्, इत्यपि महत्वं मायाया एवास्तीति भाव. ।

अपि चेयं माया स्वयं साक्षादेव नहि किन्तु सत्वरजस्तमोगुणद्वारा आहोस्विद् गुणत्रयजन्यमायापारिवारिकव्यक्तिविशेषकामक्रोधादिद्वारा जीवात्मानं स्ववशीभूतं विधत्ते । तदनन्तरञ्च पुनः पूर्णतया नियन्त्रितं विदधातीति कदाचित्तं जीवात्मानं रमयति, कदाचिद् विषादयति, कदाचिच्च निर्भर्त्सयतीत्येवास्ति जीवात्मनोऽभिनयः ।

---

१. तत्वसंग्रहे १४८

२. स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ (न्यायकुसुमाञ्जलि.प्रथमस्तबके: का०२)

३. श्रीरामपूर्वतापनीयोपनि० १।७

४. सरस्वतीरहस्योपनि० ३३

एवमियमेव ब्रह्मशक्तिभूता माया स्वीयाऽवान्तरशक्ति (आवरणशक्ति) द्वारा जीवात्मन स्वरूप सम्यक्त्वेनाऽऽवृणोति, तथाभूतविक्षेपशक्तिद्वारा च रूपान्तरमुदभावयति, एवम्भूतेनाऽभिनयेन जीवात्मान पौन पुन्येन भ्रामयति, तत्तद्विषयाऽजन्य विषाद च समुत्पादयति, सत्वरजस्तमोगुणप्राधान्यावच्छिन्नमिम जीवात्मान प्रागुक्ततत्तद्गुणानुसारमुत्तम-मध्यमाऽधमलोकाश्च प्रापयति, तत्तद्योनिषु च पातयतीत्यपि माहात्म्य मायाया ।

पारमार्थिक्या विचारधारया खल्विदमेवाऽऽयाति जीवात्मा ब्रह्मणोऽतिरिक्तो नास्ति कश्चन पदार्थविशेषो वस्तुविशेषो वेति । अपि तु तस्यैवाऽखण्डस्याऽद्वयस्य, निर्गुणस्य, निराकारस्य, निर्विकारस्य, सजातीय, विजातीय, स्वगतभेदत्रयशून्यस्य, एव दिक्कालवस्तुपरिच्छेदत्रयानवच्छिन्नस्य च तस्यैव परमतत्वभूतस्य परब्रह्मणोऽस्त्येक स्वरूपभूतश्चेतनतत्वविशेष । तथाचोक्तम्—

"निर्विकारे निराकारे निर्विशेषे भिदा कुतः"[1]

अपि चोक्तम्—

यद्वन्मृदि घटभ्रान्तिः शुक्तौ हि रजतस्थितिः ।
तद्वद् ब्रह्मणि जीवत्वं वीक्ष्यमाणो विनश्यति ॥
यथा मृदि घटो कनके कुण्डलाभिधा ।
शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथाऽपरे ॥
यथैव व्योम्नि नीलत्व यथा नीरं मरुस्थले ।
पुरुषत्वं यथा स्थाणौ तद्वद्विश्व चिदात्मनि ॥[2]

इत्यादिश्रुतियाथार्थ्यजीवब्रह्मणोस्तादात्म्यापरपर्यायभूतो भेद एव सिद्ध्यति, भेदश्च सर्वथा निराकृतो भवति । सचराचर जगदिदमात्मतत्वस्यैवाऽविद्याकृतविवर्तभूतमित्यतो जगतोऽपि नास्ति स्वातन्त्र्येण भिन्नमस्तित्व प्रभुत्व वा ।

जगत्तस्य तत्वस्यास्ति केवल प्रतिभासमात्रम् । अर्थाद् अविद्या (माया) रूपकारणवशादेव हि तद्ब्रह्मतत्त्व जगद्रूपेण भासमान भवतीति वेदान्तिन समुद्गिरन्ति ।

वेदान्तसिद्धान्तमुक्षिदक्षा हि विद्वांसो जगदिद स्वप्नवत्, मायावत् गन्धर्वनगरवच्च मन्यन्ते । यथोक्तम्—

स्वप्नमाये यथा दृष्टे गन्धर्वनगर यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥

यथाऽन्धकाररूपकारणवशाद् रज्जौ सर्पो भासते, तथैवाऽविद्या (माया) रूपकारणवशात् तस्मिन्नेव आत्मभूते ब्रह्मतत्वे सर्वमिद चराचरात्मक जगदिद भासमानं

---

1. अध्यात्मोप० २२
2. योगशिखोपनि० ४।१०-१२

भवतीति भ्रान्तिमात्रमेव तत् इत्यतो ब्रह्मणोऽतिरिक्त तस्य किमपि सत्त्वम् (अस्तित्वम्) एव नास्ति। तथा चोक्तम्—

> प्रतिभासत एवेदं न जगत् परमार्थतः।
> इदं प्रपंचं नास्त्येव नोत्पन्नं नोस्थितं क्वचित् ॥[1]

अपि च—

> यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम्।
> यथा नास्ति नभोवृक्षस्तथा नास्ति जगत्स्थितिः ॥[2]
> "ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन"[3]

अन्यच्चापि—

> उपादानं प्रपंचस्य ब्रह्मणोऽन्यन्न विद्यते।
> तस्मात् सर्वप्रपंचोऽयं ब्रह्मैवास्ति न चेतरत् ॥[4]
> सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम्।
> प्रपंचाधाररूपेण वर्ततेऽतो जगन्नहि ॥[5]

अपि चोक्तम्—

> 'ब्रह्मैवेदं सर्वम्" [6]
> 'आत्मैवेदं सर्वम्'[7]
> 'सच्चिदानन्दरूपमिदं सर्वम्'[8]
> 'अहमेव जगत्सर्वम्'[9]

इत्यादिप्रबलतमश्रुतिवाक्यस्वरूपप्रमाणेनापीदमेव निश्चीयतेऽखण्डाऽद्वयसच्चिदानन्दब्रह्मतत्त्वरूपतामापन्नो जीवोऽपि यत्कालावच्छेदेन स्वीयशुद्ध-बुद्ध-मुक्तस्वरूपविस्मृतिमापन्नो जायते तदा स्वस्वरूपपरिभ्रष्टो जीवो नानाविधशूकर, कूकर प्रभृतिषु योनिषु परिभ्रमति विचरति च।

तथा अविद्याजालबन्धनग्रस्तकण्टकमयदुःखमयासारसंसारसागरस्य कीटाणु-

---

1. तेजोबिन्दूपनि० ५।३१
2. योगशिखोपनि० ४।१८
3. तेजोबिन्दूपनि० ३।३२
4. योगशिखोप० ४।३
5. आत्मप्रबोधोपनि० १२
6. बृहदारण्यकोप० २।५।१
7. छान्दोग्योपनि० ७।२५।२
8. नृसिंहोत्तरताप० ७
9. तेजोबिन्दूपनि० २।४३

भूत्वा मत्स्यो वा मत्सरो भूत्वा कदाचिच्च भूतप्रेतपिशाचादिशरीरं धृत्वा जन्मजन्मान्तरार्जितपुण्यपापपरिपाकप्रसरसमासादितस्यास्य पांचभौतिककलेवरस्य भस्मपुरीषरसान्ततामपरिकलयन् अहर्निशमनिशमविच्छिन्नप्रयासायासभारमुद्वहन् नैकमपि क्षणं सुखं दुःखाभावं वा समनुभवति समुपलभते वेति शास्त्रीयोऽस्ति सिद्धान्तः ।

इत्थं च स्वस्वरूपप्रच्युतिमावहन् भयशोकमोहादिस्थानं प्राप्नुवन् जराजन्मजननीजठरेशयनमृत्युचक्रं च पौनः पुन्येन समनुभवन् जगत् प्रपंचस्योपासको जायमानो जागतिकान् विषयानासक्तिपूर्वकमुपभुंजानो घोरान्धकारे भूमान्धकारे वा पतति । इदं चापि सर्वं माहात्म्यं मायाया एव वेदितव्यम् ।

किमधिकं वयं ब्रूमहे महापुरुषोऽपि सन् मर्यादापुरुषोत्तमःसच्चिदानन्द आनन्दकन्दो दशरथनन्दनो भगवान् रामचन्द्रोऽपि अस्या एव मायायाः संसर्गवशित्वमापन्नः पांचभौतिकं शरीरं धारयन् पामरसाधारणसामान्यजनवत् भवनवाधिभौतिकपदार्थजातजटिलजालजवनिकाप्रोर्णु वितः सन् कदाचित् शिशुरल्पवयाः खलु मातुः स्तन्यपानपरो बभूव, कदाचिच्च अर्थात् लक्ष्मणस्याचेतनावसरेऽश्रुसाम्राज्यसंस्थापनपरोऽभूदिति के न जानन्ति ।

अपि चाऽनाथनाथो जगन्नाथो बाबाविश्वनाथोऽपि अस्या एव मामायाश्चक्रं (वशित्वम्) आपन्नः सन् मदनं भस्मावशेषं चकार । तथा चोक्तम्—

क्रोधं प्रभो संहर संहरेति—
यावद् गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा—
भस्मावशेषं मदनं चकार ॥[1]

*इयमेवाऽस्ति महत्त्वभूतमतीव विलक्षणं लोकोत्तरमहत्वं खलु मायायाः । इयमेवा*स्ति ब्रह्मणोऽपरशक्तिस्वरूपाऽज्ञानापरपर्यायभूता माया ।
अपि च सुरेश्वराचार्योऽपि—

अहमा भवतः कैयं साधकत्वप्रकल्पने ।
किं न पश्यसि तत्रैव संसाराज्ञानकल्पितम् ॥[2]

तत्र "चित्सुखी" *ग्रन्थे* "स्वप्रकाशचिदात्मने" इत्याद्युक्तस्वप्रकाशत्वनिरूपणावसरे सांसारिके आत्मनि काल्पनिकधर्माणामङ्गीकारः सर्वेषामेव सुरेश्वराचार्यप्रभृतीनां प्राचीनाचार्यचरणानां विदुषामपि सर्वथाभिमतो वर्तते इति पक्षं सुरेश्वराचार्यः 'तत्रैवाऽज्ञानकल्पितम्' इत्यादिना स्वयमेव समर्थितवान् ।

पंचपादिकाचार्योऽपि *आनन्दो विषयानुभवो नित्यत्वं* चेति धर्माः स्वयमेवात्मनि सर्वथाऽङ्गीकृतवान् । तथाचोक्तम्—

---

१. कुमारसंभवः, ३सर्गः, मन्मथदाहावसरे
२. चित्सुखी , प्र० परि०स्वप्रकाशत्वनिरूपणे

आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः ।
अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते ॥[1]

एतेन निर्धर्मकस्य ब्रह्मणः सधर्मकत्वसम्पादनेऽप्यस्या एव ब्रह्मशक्तिभूताया मायायाः प्रभावस्य संसर्गस्य वा प्राधान्यं वेदितव्यम् इति सूचितम् ।

एवं निर्गुणे ब्रह्मणि सगुणत्वसम्पादनेऽपि अस्या एव खलु अविद्यापरपर्यायभूताया मायाया माहात्म्यं वेदितव्यम् । अस्याः प्रभावेण निर्गुणमपि सगुणं जायते । यथा—

'सगुणनिर्गुणस्वरूपं ब्रह्म' [2]

सर्वस्वरूपस्य ब्रह्मण उभयरूपताया स्वीकारे नास्ति कोऽपि विवादो विपरीतप्रत्ययो वेति । यतःसर्वस्वरूपतान्तर्गतोभयरूपताया अक्षुण्णत्वात् ।

## तृतीयः पादः

## ब्रह्मणो मायाकृतं सगुणरूपं विविच्यते

इत्थं च सर्वमूर्तसंयोगित्वेन व्यापकीभूतस्याऽनन्तशक्तिशालिनोऽनन्तस्य ब्रह्मणः कथमवतरणं भवति, किंरूपावच्छिन्नस्य चाऽवतरणं जायते इत्यादि विषया अधिकांशेन विचार्यन्ते ?

अत्रेदं समाधीयते शास्त्रकारैः यत्तस्यावतरणं क्वचित् कदाचित् किंचिदंशेन भवति, क्वचित् कदाचिच्च सम्पूर्णतयेत्यत्राप्यस्ति मायाया प्रभावः संसर्गो वा कारणमित्येवास्ति शास्त्रसिद्धान्तः ।

यन्निमित्तं चावलम्ब्य मायासंसर्गित्वमापन्न. प्रादुर्भवति भगवान् भक्तकामकल्पद्रुम. परमात्मा तन्निमित्तं नास्त्येकविधमपि तु नानाविधम् तत् । अतः एतस्मिन् विषये बहवः खलु विप्रतिपद्यन्तेऽप्यान्य सिद्धान्तमङ्गीकृत्य च विवदन्ते । तथाहि—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥[3]

इति सच्चिदानन्दस्य नन्दनन्दनस्य भगवतः श्रीकृष्णचन्द्रस्यार्जुनाय र्थवचनं प्रमाणयन्तः खलु केचन विद्वांसो धर्मोत्थानपूर्वकसत्कर्मानुष्ठानात्मिका धर्मग्लानिरेव तस्य भगवतः परमेश्वरस्य ब्रह्मणोऽवतरणे मुख्य कारणमिति वदन्ति, विवदन्ते चात्र बहवः ।

अन्ये च पुन. दुष्टदमनपूर्वकं गोविप्रसुरसाधुप्रभृतीनां व्यक्तीनां यदस्ति संरक्षणं तद्द्वारा धर्मस्य चास्ति यत् संस्थापनं तस्यैव हेतुत्वं समुद्गिरन्ति, प्रमाणयन्ति चात्र—

---

१. चित्सुखी, तत्त्वप्रदीपिका, पृ० १७
२. त्रिपाद्विभूतिमहानारायणोप० ११
३. गीता

 

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥[1]

तत्त्वज्ञानसम्पन्नस्य ज्ञानिनामग्रगण्यस्य श्रीशुकदेवस्येदमस्ति प्रमाणभूतं वचनम् यद्यपि अनन्तस्याऽनन्तगुणगणयुतस्य भगवतः श्रीकृष्णचन्द्रस्य जगन्नियन्तृत्वेन जगत्पालनकर्तृत्वेन च जगन्निरूपितप्रभुत्वमस्ति तस्येत्यत्र नास्ति लेशतोऽपि विवादावसरः तथापि गोब्राह्मणसुरसाधुजनानां वेदानां धर्मार्थयोश्च परित्रातुमवश्यमेवेश्वरस्तनूर्धत्ते, अर्थात् युगे युगेऽवतरति तदा तांस्त्रातुं धर्ममर्यादां च संस्थापयितुम्—

गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥[2]

अपि च—

बिभर्षि रूपाण्यवबोध आत्मा—
क्षेमाय लोकस्य चराचरस्य ।
सत्त्वोपपन्नानि सुखावहानि—
सतामभद्राणि मुहुः खलानाम् ॥[3]
सुरेष्वृषिष्वीश ? तथैव नृष्वपि—
तिर्यक्षु यादःस्वपि तेऽजनस्य ।
जन्मासतां दुर्मदनिग्रहाय—
प्रभो ? विधातः ? सदनुग्रहाय च ॥[4]

त्वमेवाऽऽनन्दकन्दो भगवान् श्रीकृष्णचन्द्रश्चराचरस्य लोकस्य कल्याणाय सद्व्यक्तीनां सुखावहानि सत्त्वोपपन्नानि नानाविधानि रूपाणि बिभर्षि । हे प्रभो ! विधातः ! तानि ते त्वदाश्रयभूतानि तथा जगदाश्रितसमस्तप्राणिनां मंगलकारकाणि रूपाणि समाधिनाऽऽवेशितचेतसः केवल एव ज्ञातुं शक्नुवन्ति । ये च ज्ञातुं पारयन्ति ते त्वत्पादपोतेनाऽस्मादसारसंसारसागरादवश्यमेव तरन्ति ।

इत्यादिः श्रीमद्भागवतस्थप्रमाणभूतवचननिचयोऽपिब्रह्मभूतपरमेश्वरस्यावतरणे प्रमाणभूत. ।

अपरे च विद्वांस सगुणलीलाप्रदर्शनेन भक्तानां भक्तिवर्धनाय सौकर्यसाधनमेवाऽवतरणकारणमिति कथयन्ति, तदेव च स्वीयं मतं प्रबलयन्ति प्रमाणयन्ति च । तथाहि—

---

१. गीता
२. श्रीमद्भाग० स्कं०८, अ०२४, श्लो०५
३. तत्रैव, स्कं० १०, अ०२, श्लो० २९
४. ,, ,, १०।१४।१०

सत्त्वं विशुद्धं श्रयते भवान् स्थितौ—
शरीरिणां श्रेय उपायनं वपुः ।
वेदक्रियायोगतपः समाधिभि—
स्तवार्हणं येन जनः समीहते ॥[1]

अपि च—

शृण्वन् गृणन् संस्मरयंश्च चिन्तय—
न्नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयो—
राविष्टचित्तो न भवाय कल्पते ॥[2]

भवन्तो जगत्स्थितेः साधु सम्पत्तये सत्त्व विशुद्धं च शरीरं धारयन्ति, अर्थात् प्रागुक्तविशुद्धादिलक्षणमङ्गलमयशरीरद्वाराऽऽत्मानं प्रकटयन्ति, येन भवतां भक्तिप्रबला भक्ता वेदयोगतपः समाधिभिर्भवन्तमाराधयन्ति । तथा चैतेन भक्तिशीलानां भक्तिवर्धनाय सौकर्यसाधनमेवाऽवतरणबीजं सिद्ध्यतीति भावः ।

अत्र श्रुतेरपि प्रामाण्यमाह—

'भक्त्या विना ब्रह्मज्ञानं कदापि न जायते' [3]
'बुद्धिमतामनायासेनाचिरादेव तत्त्वज्ञानं भवति'[4]
'मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते'[5]

अपि च—

भक्तिरेव परमार्थदायिनी—
भक्तिरेव भवरोगनाशिनी ।
भक्तिरेव परवेदनप्रदा—
भक्तिरेव परममुक्तिकारिणी ॥[6]

विवर्तवाद :

अध्यासो विवर्तरूपतां गच्छन् सन् अविद्याऽज्ञानस्वरूपमेव स्वीयं स्वरूपं प्रकाशयति । अयं च विवर्तो ब्रह्मणो भेदाभेदाभ्यां सर्वथाऽनिर्वचनीयेन भावाऽभावविलक्षणेन चराचरात्मकस्यास्यजगतो मूलभूतेनाऽनेनाऽज्ञानेनैव सिद्ध्यतीत्यत्र नास्ति लेशतोऽपि विवादः ।

१. श्रीमद्भाग० १०।२।३४
२. तत्रैव श्लो० ३७
३. त्रिपाद्विभूतिमहानारायणोप० ८।१
४. तत्रैव द्रष्टव्यम्
५. श्रीमद्भाग० १०।८२।४५
६. ज्ञानयोगः पृ० ६२

अध्यासनिरूपितप्रसङ्गसंगतिमत्त्वादेव विवर्तस्य प्रदर्शनमपि साधु संगच्छते- इत्यहं मन्ये इति न तत्प्रदर्शने काप्यनुपपत्तिरापत्तिर्वेति ।

तत्र श्रीमत्परमहंसपरिव्राजकाचार्यः श्रीसदानन्दो यतिः स्वीयवेदान्तसारग्रन्थेऽस्य विवर्तस्येत्थं व्याख्या कृतवान्—

"अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपंचस्य वस्तुमात्रत्वम्"

तदुक्तम् —

स तत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः ।
अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरितः ॥[1]

इत्थं च सत्ताविशिष्टेऽर्थब्रह्मणि शब्दब्रह्मणि वाऽध्यासेनाऽसतश्चराचरात्मकस्य प्रपंचस्य या प्रतीतिः खलु जायते सा भ्रमान्धकारभूता भ्रान्तिरूपा विज्ञेया । अत एवेयं प्रतीतिर्न तस्य सद्ब्रह्मणो विकारभूता परिणामस्वरूपा वाऽपि तु विवर्तरूपैवेति मन्तव्यम् ।

अयमाशय — "वाद प्रवदतामहम्" इत्यादिरूपेण साक्षान्नारायणस्वरूपेण भगवता श्रीकृष्णेन स्वकीयवाग्वाग्विभवस्वरूपस्य श्रीमद्भगवद्गीतायां समुल्लिखितस्य साक्षाद् वादस्य सत्कार्यवादरूपेण द्वैविध्य वर्णितवन्तोऽस्माकं प्राचीनाचार्यचरणाः ।

तत्र सत्कार्यवादोऽपि द्विविधः —परिणामवादः, विवर्तवादश्च । तत्र परिणामवादः साङ्ख्यै, रामानुजीयैश्चापि स्वीकृतो वर्तते । एतेषामिदमेव कथनं वर्तते यत् कारणमेव स्वयं कार्यरूपेण परिणमते इत्येतेषां नये कार्यकारणयोस्तादात्म्य सत्यत्वञ्च सिद्ध्यति । यथा क्षीरं स्वीयां सत्तामपरित्यजद् दध्यात्मना परिणमतेऽर्थाद् भासमानं भवति इति न दधिक्षीरातिरिक्तं कार्यान्तरं भवितुमर्हति, नापि भवति च ।

विवर्तवादश्च खलु मायावादिना वैयाकरणानां वैदान्तिनामेव शोभते, यतः अनयोर्द्वयोरेव शब्दार्थब्रह्मवादाऽङ्गीकारात् ।

एतेषां नये कारणमेव खलु कार्यरूपेण भासते, कारणसत्तातिरिक्तसत्ताकत्वाभावात् कार्यस्याऽतः कारणस्यैवाऽस्तित्वप्रयुक्तं सत्त्वं न तु कार्यस्यापीति भावः ।

यथाऽद्वैतमते शुक्तौ "इदं रजतम्" इति ज्ञानानन्तरमधिष्ठानभूतशुक्तिज्ञाने जायमाने सति नेदं रजतम् इति बाधज्ञानेन पूर्वकालावच्छेदेन ज्ञानविषयीभूतस्य रजतस्य निवृत्तिर्जायते, तथैव प्रकृतेऽपि सर्वाधिष्ठानभूतब्रह्मसाक्षात्कारे जाते सति सर्वस्यैव चराचरात्मकस्य भेदस्वरूपस्य जगदादिद्वैतप्रपंचस्य निवृत्तिर्भवतीति सर्वमवदातम् ।

उक्तं च—

यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।
तद्वत्सत्यमविज्ञाय जगत् पश्यति मूढधीः ॥[2]

---

१. वेदान्तसारः गंगाटीका, पृ० ८६
२. नादबिन्दूपनि० ४०।२६

अपि च तत्रैव —

> रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति ।
> अधिष्ठाने तथा ज्ञाते प्रपंचे शून्यतां गते ॥[1]

एवमन्यत्रापि जगदादिप्रपचस्याऽस्तित्वं बाधितमेवानुभूयते । तथाहि—

> सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ।[2]

अयमेव चास्ति विवर्तवाद., इदमेव च विवर्तस्य स्वरूपम् । तथा चोक्तम्— "वस्तुन. स्वस्वरूपापरित्यागेन वस्त्वन्तरमिथ्याप्रतीतिर्विवर्तः । यथा—रज्जावहे, शुक्तौ वा रजतस्य या जायमाना प्रतीति." ।[3]

अपि चोक्तम्—

> घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ।
> "जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥[4]
> "ब्रह्मैवेदं विश्वमिदं वरिष्ठम्"[5]
> "जगद्रूपतयाऽप्येतद् ब्रह्मैव प्रतिभासते"[6]

इत्यादिरूपेण कारणस्यैव कार्यरूपेण भासमानत्वं भवतीत्ययं सिद्धान्त सर्वथा निर्गर्वः ।

अन्यच्चापि च—

> अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम् ।
> विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[7]

इत्यादिप्रमाणैः कारणस्यैव केवल सत्यत्व कार्यस्य च सर्वथाऽसत्यत्व प्रतिपादितं भवति ।

नैयायिकवैशेषिकाभिमताऽऽरम्भवादोऽपि असत्कार्यवाद एवेत्येतेषा नये कार्यस्य सर्वथा सत्यत्वमङ्गीकृत सिद्ध्यति, एतावास्तु विशेष । माध्यवेदान्तिना मतेऽपि कार्यमसदेवोत्पद्यते । अर्थादुभयत्र घटादिकार्योत्पत्ते पूर्वमसदेव तत्तद्घटादिकार्यं दण्ड चक्र चीवर लालादिकारणसामग्रीसान्निध्यावच्छिन्नान्मृदादिकारणाद्भिन्न खलु सदुत्पद्यते ।

---

१. नादबिन्दूपनि० ४०।२६
२. तेजोबिन्दूप० ६।६३
३. अध्यात्मोपनि० ४।१८
४. योगशिखोपनि० ४।१८
५. मुण्डकोपनि० २।२२१
६. आत्मोपनि० २
७. वा — [illegible]

## चतुर्थः पादः

नैयायिक-वैशेषिक-माध्ववेदान्तिनाच नये स्वोत्पत्तेः प्राक्कालावच्छेदेन सर्वमेव कार्यं नासीदेवेति कार्योत्पत्तिप्राक्कालावच्छिन्नं तदीयमसित्त्वं सर्वथाऽनङ्गीकृतमेव वेदितव्यम् । इदं चाऽस्माभिः प्रसङ्गसङ्गतिवशादेव सर्वं निरूपितम् ।

अत्र संक्षेपशारीरिके उद्धृतानां सर्वेषामेव वादानां संग्राहकश्लोकानामस्माभिरुद्धरणं दीयते—

आरम्भवादःकणभक्षपक्षः :—
संघातवादस्तु भदन्तपक्षः ।
सांख्यादिपक्षः परिणामवादो—
वेदान्तपक्षस्तु विवर्तवादः ॥[1]

*अर्थात् वैशेषिकाणां, नैयायिकानां, माध्ववेदान्तिनांच दार्शनिकानां खलु आरम्भवादः* प्रसिद्धो वर्तते । ते हि कपालादिकारणाद्विभिन्नं स्वोत्पत्तिप्राक्कालावच्छेदेनाऽसदेव कार्यं स्वसमवायिकारण, निमित्तकारणवशाच्चोत्पद्यते ।

सौत्रान्तिका वैभाषिकाश्च घटादिरूपं सर्वमेव कार्यं परमाणुपुंजमात्रम् अर्थात् तत्समुदायमात्रम् सङ्घातमात्रमिति न वदन्ति । अर्थात् परमाणुसंघाततो भिन्नं नास्ति किमपि वस्त्वन्तरं घटादि कार्यमिति विज्ञेयम् । अयमेव खल्वेतेषां सङ्घातवादः प्रसिद्धः ।

साख्ययोगमये घटादिरूपं सर्वमेव कार्यं मृत्तिकाप्रभृतिकारणस्यास्ति केवलं परिणामः, तात्त्विकः समानसत्ताकोऽन्यथाभावश्चेत्ययमेव परिणामवादः । वेदान्तसिद्धान्तमङ्गीकुर्वाणाः खलु शाङ्कराद्वैतवादिनः समस्तमिदं चराचरात्मकं जगदस्ति ब्रह्मणो *विवर्तभूतम्, अत एवाऽतात्त्विकमन्यथाभावभूतं च, अर्थात् विषमसत्ताकमन्यथाभावस्वरूपम्* । उक्तंच —

"अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरित." ।[2]

तथा चेदमेवाऽस्ति विवर्तवादस्वरूपम् । तच्च विवर्तं सद्ब्रह्माधिष्ठानकाऽसत्प्रपंचविषयिणी या भ्रान्तिरूपा प्रतीतिस्तदात्मकमित्युक्तं प्रागेव । यथा रज्जौ सर्पः, शुक्तौ च रजतम्, इत्यादिदृष्टान्तैर्विषतस्य विवर्तस्वरूपस्य वा प्रागुदर्शितत्वान्नात्रोच्यते विस्तरभयात् ।

एतावत्मात्रन्तु नितान्तमावश्यकं यद् यथा रज्जौ सर्पत्वप्रकारके ज्ञाने जाते तादृश भ्रमापगमे रज्जुरेव सन्तिष्ठते, तथैवाऽविद्यानिवृत्तौ सत्यां ब्रह्मज्ञाने परोक्षात्मके जाते प्रपंचापगमे ब्रह्ममात्रमवशिष्यते । अर्थाद् ब्रह्मव्यतिरेकेण प्रपंचभूतस्य जगदात्मकस्य कार्यजातस्याभाव एव सिद्ध्यति ।

---

१. संक्षेपशा० अ०२,पृ० ६३
२. तत्रैव वेदान्तसारे

तथा च सूत्रम् —

"तदनन्यत्वमारम्भणशब्दादिभ्यः"[१]

तच्चाऽनन्यमित्थं प्रतिपादितमस्ति —

"अभेददर्शनं ज्ञानम्"[२]

"भेददृष्टिरविद्येयं तां सदा परिवर्जयेत्"[३]

"सच्चिदानन्दरूपमिदं सर्वम्"[४]

"ब्रह्मैवेदं सर्वम्"[५]

"आत्मैवेदं सर्वम्"[६]

अपि च तत्रैव—

"निर्विकारे निराकारे निर्विशेषे भिदा कुतः"[७]

"जगद्रूपतयाऽप्येतद् ब्रह्मैव प्रतिभासते"[८]

"जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम्"[९]

एवं सर्वं च ब्रह्मैव पश्यतो द्वैतस्य, द्वैतजन्यभेदस्य, तादृशप्रत्ययस्य चाऽभावात् सर्वस्य ब्रह्ममात्रत्वं सिद्ध्यतीति ब्रह्मणोऽव्यतिरिक्तस्य सर्वस्य सर्वथा निषेधप्रतिपादनमेव साधूक्तं भवति ।

प्राकृतमाविद्यिकं मायिकंच सर्वमविद्यया परिकल्पितत्वान्मिथ्यैव भवति न तु सत्यम् ।

इदं सर्वं दृश्यमानं मिथ्या मायाकार्यत्वात् ऐन्द्रजालिकवत् इत्यादियुक्तिभिश्च विचार्यमाणे शरीरेन्द्रियादिद्वैतप्रपञ्चस्य तथाऽविधस्य वा भेदप्रपंचस्य सर्वस्य मायाकार्यत्वेन मिथ्यात्वात्, द्वैतकारणमेव नोपपन्नं भवति । ब्रह्मात्मनो भेदस्य महाकाश-घटाकाशयोरिवौपाधिककल्पितत्वेन जन्यत्वान्मिथ्यात्वाच्च । उपाधिनिरासे जाते उपाध्यसत्त्वप्रयुक्तोऽभेदः सुस्पष्ट एव, स एव च खलु वास्तविकः भेदस्त्ववास्तविकः । ततस्तु श्रुतिस्मृतिप्रतिपाद्य ब्रह्मणोऽद्वितीयत्वं सर्वथा निरङ्कुशं निर्विचिकित्सं च सिद्ध्यतीत्ययमेवास्ति विवर्तस्य स्वभावः । अत्र श्रुतमुपस्थाप्यते—

---

१. ब्र०सू० २।१।१४

२. स्कन्दोपनि० ११

३. महोपनि० ५।११३

४. नृसिंहोत्तरतापनीयोप० ७

५. बृहदारण्यको० २।५।१

६. छान्दोग्योपनि० ७।२५।२

७. अध्यात्मोपनि० २२

८. आत्मोपनि० २

९. योगशिखोपनि० ४।१८

मनो बुद्ध्यहङ्कारचित्तानिनाहम् —
न च श्रोत्रजिह्वे न च घ्राणनेत्रे ।
न च व्योमभूमिर्न तेजो न वायुः—
चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥

अन्यदप्युक्तम् —

ब्रह्मैवाऽहं न संसारी ब्रह्मैवाऽहं न मे मनः ।
ब्रह्मैवाऽहं न मे बुद्धिर्ब्रह्मैवाऽहं न चेन्द्रियम् ॥[1]
ब्रह्मैवाऽहं न देहोऽहं ब्रह्मैवाऽहं न गोचरः ।
ब्रह्मैवाऽहं न जीवोऽहम् ॥[2]

अपि चोक्तम् —

"दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत्"[3]
"स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ।
न सन्ति नास्ति माया च तेभ्यश्चाऽहं विलक्षणः ॥[4]
"अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ।
अहमेवाऽक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ॥[5]
"अहमेव जगत् सर्वम्"[6]
"न तु तद्द्वितीयमस्ति"[7]

इत्यादिभिः श्रुतिस्मृतिभिर्विवर्तस्वरूपमेव प्रतिपादितं भवतीति विज्ञेयम् । श्रीसर्वज्ञात्ममुनिना विवर्तस्यैवंविधं स्वरूपं संक्षेपशारीरिके दर्शितम्—

अभेदिनो निर्विकृतेरनेक —
मृषास्वरूपान्तरदर्शकत्वम् ।
विवर्तशब्दार्थ इह प्रसिद्धः
तरङ्गभेदादिव चन्द्रभेदः ॥[8]

---

१. तेजोबिन्दूपनि० ६।३२
२. तत्रैव ६।३३
३. तत्रैव १।२६
४. वराहोपनि० २।१
५. नारदपरिव्राजकोपनि० ३।२०
६. तेजोबिन्दूप०
७. बृहदारण्यकोपनि० ४।४।२३
८. सं०शा०अ०२, श्लो ६६

विवर्तवादस्यैव शास्त्रसम्मतत्वम्—

यथा वेदान्तसिद्धान्ते एकस्यैव चन्द्रस्य तरङ्गभेदोपाधिरूपभेदवशादेवाऽनेकचन्द्रा भवन्ति, एको वा चन्द्रोऽनेकचन्द्ररूपेण दृष्टिगोचरतां याति । तथैवैकस्यैव कूटस्थस्य ब्रह्मणोऽविद्यापरपर्यायभूतमायारूपोपाधिवशादेव मिथ्याभूतमनेकात्मकं रूपाकाराविच्छिन्नं जगदात्मकं कार्यं दृष्टिगोचरीभूतं भवति, इदमेवास्ति विवर्तस्वरूपम् ।

"पूर्वरूपाऽपरित्यागेन रूपान्तरम्" अथवा
"अतात्त्विकरूपान्तरभेदो वा विवर्तवादः"
"अहं प्रजायेय बहु स्यां स्याम् —
इत्यादिनाऽऽदौ परिणाममुक्त्वा ।
विकारमिथ्यात्वमथ ब्रुवाणा —
विवर्तवादं श्रुतिराबभाषे ॥

अर्थादेकोऽहं बहु [1] स्याम् इत्याद्यात्मिकया सत्यया श्रुत्या विचित्रपरिणामरूपे स्वीयमागमनं सूचितं ब्रह्मणा । तदनन्तरञ्च—

"यदग्ने रोहितं रूपम्" [2]
इत्यादिना समारभ्य (प्रारभ्य)
"त्रीणि रूपाणीत्येव सत्यम्" [3]

एतावता ग्रन्थेनाग्निप्रभृतीन् सर्वानपि देवान् मिथ्यात्वेन निरूप्य अर्थात् अग्न्यादयः सर्वेऽपि देवाः सन्ति मिथ्याभूता इति सुस्पष्टीकृत्य पश्चाच्च एकमद्वितीयं सन्मात्रं कूटस्थं ब्रह्मैव मिथ्याप्रपञ्चरूपेण विवर्तमानं भवति । अतः श्रुतेर्निष्कर्षः खलु विवर्त एवेति मन्तव्यम् ।

संक्षेपशारीरिकमतानुसारिभिर्दार्शनिकैः विवर्ततयोपादानकारणमीश्वरस्य चैतन्यभाग एव, माया तु केवलं द्वारकारणम् ।

तत्रैव दर्शनशास्त्रेष्वप्रतिहतगतिकाः श्रीवाचस्पति मिश्रमहोदया रज्जुसर्पदृष्टान्तमाश्रित्येश्वरीयचैतन्यभागस्यैव विवर्ततयोपादानकारणत्वं कथयन्तीति नैव कारणत्वं मायाया अपि तु सहकारिमात्रत्वन्तस्या इति न तेषां नये कस्यापि परिणाम्युपादानकारणत्वम् । तथा च प्रपंचस्य विवर्ततया कारणं चैतन्यम् (ब्रह्मैव) एवास्तीति निष्कर्षः ।

एवमन्यासां श्रुतीनामपि विवर्तवादे एव सामञ्जस्यं वर्तते । तथाहि—

मायाश्रुतिस्मृतिरिव च सकलं तथा च—
वस्तुत्वमर्दनपरं घटते विवर्ते ।

---

१. छान्दोग्योपनि० ६।२।३
२. तत्रैव
३. छा० उ० ६।४।१

सर्वस्य कारणविकारविभागभाजः —
प्रागावृतस्य परमार्थतया प्रतीतेः ॥ [१]

अर्थात् विवर्तवादाश्रयणे एव "इन्द्रो मायाभिः पुरुरूप ईयते"[२] इत्यादिश्रुतयः एव "सम्भवाम्यात्ममायया" [३] स्मृतयश्च प्रपंचस्य निस्तत्वप्रतिपादने सामर्थ्यसम्पन्ना भवन्तीत्यतो विवर्तवाद एव श्रेयान् ।

प्रागुक्तमेवोपसंहरति—यथा रज्जौ सर्पभावकल्पनाकाले तदीयं (रज्जुनिष्ठम्) रज्जुत्वं नहि निवर्तमानं भवति, अर्थात् वास्तविको रज्जुभावो नहि निवर्तते । तथैव वस्त्वात्मनो (ब्रह्मणो) जीवभावकल्पनाकालेऽपि अर्थात् संसारावस्थायां तस्य ब्रह्मभावो नहि निवृत्तो भवति, केवलमतत्त्वतोऽन्यथाभावमात्रं विवर्तो भवति । तथा चोक्तम्—

"आत्मनि चैवं विचित्राश्च हि"[४]

इत्यस्मिन् सूत्रे सूत्रकारो भगवान् व्यासो विवर्तवादमेव प्रतिपादितवान्, भाष्येऽपि तथैव समर्थितवान् दर्शितवांश्च । भाष्ये इदमेव समर्थितं वर्णितंचयद् विवर्तवादे नहिस्वरूपोपमर्दनमावश्यकं भवति । स्वरूपोपमर्दनमन्तराऽपि विवर्तो जायते । यथा लोकेऽपि देवप्रभृतिषु एवं मायाविप्रभृतिषु न स्वरूपनाशं विनैव हस्तितुरङ्गादिसृष्टयोऽनुभूयन्ते । तथैवैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्दनेनैवाऽनेकाकारा सृष्टिर्जायमाना शास्त्रेषु श्रूयते । यथोक्तम् —

"एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः" [५]
"यथाऽऽकाशे द्विचन्द्रत्वं तद्वत् सत्ये जगतःस्थितिः" [६]

भाष्यमपि —' लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्दनेनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते । तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्दनेनैवाऽनेकाकारा सृष्टिर्भविष्यति ।'[७]

अधिष्ठानविपरीतरूपेण वर्तते इति विवर्तः अर्थात्: सत्, चित्, आनन्दस्वरूप-ब्रह्माधिष्ठानतो विपरीतरूपेण अर्थात् असत्, जड, दुःखस्वरूपेण जायमानो हि संसारो विवर्त उच्यते ।

---

१. संक्षेपशारीरिके अ०२,श्लो० ६८
२. बृहदारण्यकोप० २।५।१९
३. गीता ४।६
४. ब्र०सू० अ०२, पा०१, सू० २८
५. अन्नपूर्णोपनि० ५।७
६. योगशिखोपनि० ४।१६
७. ब्र०सू०शां०भा०अ०२, पा०१, सू०२८

तृतीयोऽध्याय

प्रथम. पाद.

# मायाया अविद्यायाश्च परिभाषा

**मायाया लक्षणम्**

श्रीशङ्कराचार्यं परवर्तिनो दार्शनिका श्रीवाचस्पतिमिश्रप्रभृतयो विद्वासोऽविद्यामाययो परिभाषा भेदाऽभेदसम्बन्धयावच्छिन्नामित्य व्याख्यातवन्त ।

श्रीवाचस्पतिमिश्रेणाऽविद्याया ब्रह्माश्रितत्वमनङ्गीकृत्य जीवाश्रितत्वमेवाङ्गीकृतम् । उक्त च—

"नाऽविद्या ब्रह्माश्रया किन्तु जीवे, सात्वनिर्वचनीयेत्युक्तम्,
तेन नित्यशुद्धमेव ब्रह्म" ।[1]

अद्वैतचन्द्रिकाकार श्रीसुदर्शनाचार्यो मायाऽविद्ययो परिभाषा सुस्पष्टीकुर्वन् इत्थ खलु प्रोट्टङ्कयति । यत् सच्चिदानन्दस्वरूपस्य भगवत परमेश्वरस्य शक्तिर्माया, सा च माया परमात्मज्ञानद्वारा बाधिता सती नहि कालत्रयेऽपि सती भवितुमर्हति ।

क्रियाकारिणी सती च सा नाप्यसतीति वक्तु शक्यते । इय च माया सत्वगुण, रजोगुण, तमोगुणात्मिका सतीति त्रिगुणात्मिका कथ्यते ।

अस्या मायाया खलु द्वैविध्येन विभाजन विलोक्यते वेदान्तादिशास्त्रेषु । तत्रैका विशुद्धसत्वप्रधाना माया सत्वगुणप्रधाना कथ्यते । अपरा च सा माया मलिनसत्वप्रधाना तमोगुणप्रधानाऽस्तीति बहुधा निरूपितम् ।

विशुद्धसत्वप्रधाना स्वशक्तिभूता ता माया परमेश्वर: स्वय स्ववशीकृत्य सन्तिष्ठमानोऽस्तीति पौन. पुन्येन घोषयति वेदान्तकेशरी ।

एतद्विपरीता च मलिनसत्वप्रधाना सा माया जीव स्वय स्ववशीकुर्वाणा सती तम् अहर्निशम् अनिश भ्रामयति नर्त्तयति, सम्मोहयति, कदाचिच्च विषादयति ।

---

१. भामती पृ० ६५, चा० शास्त्री सपा० १६३६

अतो जीवः सर्वदाऽविद्याद्वारा सर्वथा पारतन्त्र्यमेवाऽनुभवतीति सर्वाणि शास्त्राणि सर्वाश्च श्रुतिस्मृतयः समुद्घिरन्ति। विषयश्चाऽयं विशदीकृतः[1]—

शाङ्करमायावादस्य बहुमुख्याध्ययनदृष्टिकोणतः श्रीशङ्कराचार्यपरवर्तिना दार्शनिकानां मायाऽविद्ययोर्विभागस्य परिभाषायां प्रक्रियाऽत्यन्तमेव दुरुहा प्रशसनीया च वर्तते इति सर्वेऽपि विदाङ्कुर्वन्ति।

अपि च श्रीशङ्कराचार्येण मायाऽविद्येतिशब्दद्वयविषये एकस्याऽपरस्य पर्यायवाचिताऽप्यङ्गीकृतेत्यपि न तिरोहितमस्ति केषामपि विदुषाम्। पश्यन्तु[2]—

मायाऽविद्ययोः पर्यायवाचित्वेऽपि श्रीशङ्कराचार्यः प्रागुक्तविधा तयोर्भेदं सुस्पष्टीकृतवान्। एतत्पक्षसमर्थने निम्नोल्लिखिताः युक्तीः प्रदर्शयति खल्वाचार्यः।

(१) श्रीशंकराचार्यस्याऽऽवरणविक्षेपशक्तीनां भेदेन विभाजनमेव मायाऽविद्ययोर्भेदं सुस्पष्टं सूचयति। परवर्तिनो दार्शनिका अविद्या जीवाऽऽश्रिता कथयन्ति। श्रीशङ्कराचार्यमतानुसारं मायाया आवरणशक्तिरविद्याया एवाऽस्ति रूपान्तरम्। विवरणकारमते मायाऽविद्ययोरभेद एव स्वीकृतः, परन्तु व्यवहारभेदेन विक्षेपशक्तिप्राधान्येन च माया, आवरणप्राधान्येनाऽविद्या संज्ञा वर्तते। उक्तंच—

"तस्माल्लक्षणैक्याद् वृद्धव्यवहारेण चैकत्वावगमा-
देवैकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन माया,
आच्छादनप्राधान्येनाऽविद्येति व्यवहारभेदः."[3]।

परन्तु तात्विकदृष्ट्या विचार्यमाणेऽस्मिन् पक्षे मायाऽविद्ययोर्भेदो नाऽभ्युपगम्यते। इयमेव च माया जीवेश्वरयोरपि भेदं जनयति।

मायोपाधिकश्चेतनतत्वभूत आत्मा, ईश्वरो व्यपदिश्यते। अविद्योपाधिकश्चात्मा जीव इति च कथ्यते। जीवेश्वरयोर्भेदः शरावगतसूर्यप्रतिबिम्बवत्, जलाशयवच्चाऽस्ति कार्यकारणयोर्मिथ्योपाधिरूपकारणवशादेव भासमानः। अत एव स भेदो नास्ति वास्तविकः किन्तु काल्पनिक एवेत्यस्य विषयः पुनरग्रे विशदीकरिष्यते।

सा चाऽविद्यापरपर्यायभूता मायाऽव्यक्ता सती स्वसत्तयं बिभर्ति। सा न सद्रूपा नाप्यसतीति वक्तुं शक्यते, ब्रह्मणो भिन्नाऽभिन्ना वेत्यपि न वदितुं पार्यते। तथा चोक्तवान् श्रीशङ्कराचार्यः—

"अव्यक्ता हि सा माया तत्त्वाऽन्यत्वनिरूपणस्याशक्यत्वात्"[4]

---

१. अद्वैतप्रक्रियायाः ४१ पृष्ठे
२. ब्र० सू० शा० भा० १/४/३
३. पंचपादिका विवरण पृ० ३२
४. शाङ्करभा० १/४/३

अत एव साऽनिर्वचनीयेति निगद्यते वेदान्तिभिः। इयमेव चाऽविद्याशक्तिः इयमेव चास्ति बीजशक्ति-अव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्ति-स्वरूपा। अस्यामेव खलु सर्वेऽपि सांसारिका जीवाः स्वरूपज्ञानराहित्यावच्छिन्ना सन्तः संशेरते। अविद्योपाधियुक्तत्वादेव जीवस्य सर्वेऽपि व्यवहाराः प्रचलन्ति। तथा चोक्तम्—

"अविद्यात्मिका हि बीजशक्तिरव्यक्त-
शब्द निर्देश्या परमेश्वराश्रया मायामयी
महासुषुप्तिः यस्यां स्वरूपप्रतिबोधरहि-
ता शेरते संसारिणो जीवाः" ।[1]

अपि च—

"अविद्यावत्वेनैव जीवस्य सर्वः सुव्यवहारः सम्प्रवर्तते"[2]

अध्यासो विवर्तश्च सर्वोऽपि प्रातीतिकः कार्यकलापः खलु मायापरपर्याय-भूतयाऽविद्ययैव प्रवर्तते। अविद्या चास्ति मायाप्रकृत्यादिपर्यायभूता ब्रह्मणः शक्ति-स्वरूपा, तद्रुपाधिशब्दव्यपदेश्या, परमेश्वराश्रया सती चराचरविश्वबीजभूता शक्तिः।

सा चाऽनादि, भावाऽभावविलक्षणाऽत एव अव्यक्ता, तत्त्वाऽन्यत्वाभ्याम-निर्वचनीया, कूटस्थस्याऽसङ्गस्य निष्कलस्य च ब्रह्मणो भिन्नत्वाऽभिन्नत्वाभ्यां चास्ति सर्वथा निरूपणीया। सत्वगुणरजोगुणतमोगुणवत्वेन च सा त्रिगुणात्मिका।

अज्ञानाऽपरपर्यायभूतेयमविद्या न सद्रूपा तत्वज्ञानबाध्यत्वात्। नाप्यसद्रूपा, 'अहमज्ञः' इत्यनुभवात्। नापि सदसदुभयात्मिका, विरुद्धधर्माक्रान्तत्वादेकत्र सत्वाऽसत्व-विरुद्धधर्मयोरसमावेशात्। नापि सावयवत्वं तस्याः, मूलकारणत्वानुपपत्तेः जगतोऽ-मायिकत्वापत्तेश्च। 'मायिकं जगत्' इत्यभियुक्तोक्तेश्चाऽसङ्गत्यापत्तेर्वैयर्थ्यापत्तेश्च। नाऽपि तस्या निरवयवत्वं वक्तुं शक्यते, परिणामित्वानुपपत्तेः।

नास्त्यनुभयात्मकत्वं तस्याः, एकनिषेधे परविधानस्यार्थसिद्धत्वात्।

नाप्यात्मभिन्ना सा मन्तव्या, यतः शक्तिशक्तिमतोरभेदादित्यभेद नियमानुपपत्तेः अद्वैतव्याघातादित्यपि वक्तुं शक्यते।

आत्मनोऽभिन्ना सा इत्युक्ते च सति तस्याः अविद्यायाश्चेतनत्वं स्यादिति चेतन-त्वापत्तिः स्वयमात्मनो वा चैतन्यानुपपत्तिर्जडत्वापत्तिश्च स्यात् इत्यतोऽनिर्वचनीयैव सा वाच्या इत्येव समीचीनः पन्थाः।

---

१. ब्र० सू० शा० भा०१/४/३

२. इदमपि तत्रैव

अपि चाऽविद्या विद्याप्रागभावो वा, विद्याध्वंसो वा, विद्याऽत्यन्ताभावरूपो वा, विद्याऽन्योन्याभावस्वरूपो वा ?

नाद्यः, प्रागभावस्य प्रतियोगिसमानकालीनत्वाऽयोगात् प्रथमपक्षो न समीचीनः प्रतिभाति, यतोऽज्ञानापरपर्यायभूताया अविद्याया प्रतियोगीसमानकालीनत्वम् 'अहं घटं न जानामि' इति प्रतीत्यानुभूयमानत्वात् । अर्थात् विद्याऽविद्ययोः आहोस्विद् विद्या. प्रागभावस्वरूपाऽविद्याविद्ययोरेकस्मिन्नधिकरणे क्वापि कदाचित् कुतश्चित् कथंचिन्नानुभूयते ।

अत एवाऽविद्या न विद्याध्वंसरूपा । अत्रापि हेतुः प्रागुक्त एवविज्ञेयः । इति न द्वितीयपक्षोऽपि साम्प्रतं प्रतिभाति ।

नापि तृतीयः पक्षः विद्याऽत्यन्ताभावरूपा वेति । अत्यन्ताभावस्य प्रतियोग्यधिकरणाऽवृत्तित्वात् । अविद्यायास्तु (अज्ञानस्य तु) "नाहं जानामि" इत्याकारकप्रमाप्रतीत्या प्रतियोगिसामानाधिकरण्यस्यानुभूयमानत्वात् । अविद्याविषयक विद्याया अपि विद्यासामान्याभावप्रतियोगित्वात् । विशेषाभावस्य विद्यासामान्याऽविरोधित्वात् । अविद्यायाश्च विद्यासामान्यविरोधित्वं सर्वैरेवानुभूयते ।

नापि चतुर्थः पक्षः विद्याभेदो वेति । यतो भेदस्य तादात्म्येन प्रतियोगिविरोधित्वात्, अतोऽविद्या भावरूपेत्यवश्यमङ्गीकार्यम् ।

## द्वितीयः पादः

माया आहोस्विद् अविद्या नास्ति अत्यन्ताऽसती, केवलं भ्रान्तिर्वेति । इयं चाऽविद्या माया वा न केवलमग्रहणरूपा नाप्यज्ञानरूपा वा । इयं भावभूता, शक्तिरूपा च, अन्यथाग्रहणात्मिकापि चास्तीति निरवद्यम् । इयमविद्या माया वा सदसतोर्मिश्रणम्, सत्याऽनृतयोश्चास्ति मिथुनम् । अत एवेय सदसदनिर्वचनीया, अथवा तत्त्वाऽन्यत्वानिर्वचनीया च कथ्यते ।

माया अविद्या वा सती नैव भवितुमर्हति, यतः 'सत्' इत्यस्यार्थस्त्रिकालाबाध्यसत्ता । केवलं ब्रह्म, आहोस्विद् आत्मतत्वमेव केवलमस्ति एवम्भूता सत्ता ।

मायाऽविद्या वा नाऽसती भवितुमर्हति, यतः 'असत्' शब्दार्थोऽत्यन्ताभावः, तथाविधाश्च सन्ति वन्ध्यापुत्र, शशशृङ्गगगनारविन्दप्रभृतयस्तुच्छपदार्था एव परिगण्यन्ते न तु मायाऽविद्ये ति ।

मायाया अथवाऽविद्यायाः सद्रूपताऽत्र एव न स्वीक्रियते, तथा सति अनयोर्ज्ञानबाध्यता न स्यात् सद्वस्तुनः पदार्थस्य वा ज्ञानेन नहि बाध्यता क्वापि श्रूयतेऽनुभूयते वा ।

असद्रूपता चाऽनयोरत एव नाङ्गीक्रियते, येन व्यवहारेऽनयोः प्रतीतिरुपलब्धिर्वा जायमाना सत्यपि अनुपपन्ना स्यात्। भवति च व्यवहारेऽनयोर्मायाऽविद्ययोः प्रतीतिरुपलब्धिर्वेति। अतः सदसद्भ्यामनिर्वचनीयत्वादेवेयं मिथ्या, मिथ्याज्ञानरूपा, मिथ्याचाररूपा वा स्वीक्रियते। उक्तं च—

"ब्रह्मादिस्तम्बपर्यन्तं मृषामात्रा उपाधयः[1]"

इयं माया अथवा अविद्या रज्जुसर्पनिरूपितं साम्यं बिभर्ति। शुक्तिरजतवच्चास्ति अनयोरस्तित्वं व्यक्तित्वं चेति विज्ञेयम्।

अत एवेयं मायाऽविद्या वाऽध्यासशब्देनापि व्याह्रियते व्यवह्रियते च।

तात्त्विकदृष्ट्या विचार्यमाणे सतीयं माया अविद्या वा अतस्मिंस्तद्बुद्धिरूपैव चास्तीत्यत्र नास्ति लेशतोऽपि विपर्ययः। शुक्तेः रजतत्वेन, रज्जोर्वा सर्पत्वेन जायमाना बुद्धिरेवाऽध्यासः। यत्र शुक्तिस्वरूपे आहोस्विद् रज्जुस्वरूपे वाधिष्ठानेऽज्ञानेन क्रमशो रजतस्य सर्पस्य वाऽऽरोपो जायते, इयमेवास्ति भ्रान्तिः, इदमेवास्ति चाऽज्ञानम्। अनयोर्द्वयोरेव प्रमाज्ञानेन जायते निराकृतिः।

अनयोश्च शुक्तिरजतयोः रज्जुसर्पयोर्वा नास्ति कोऽपि पारस्परिको भेदः, नाप्यभेद एव व्याहर्तुं शक्यते। अनयोश्च शुक्तिरजतयोः रज्जुसर्पयोर्वा तादात्म्यातिरिक्तो नहि कोऽपि सम्बन्धो भवितुमर्हति।

तद्वदेव हि ब्रह्मणि आत्मस्वरूपे वाऽधिष्ठानेऽविद्यारूपकारणवशादेव जीवजगदादिप्रपञ्चजालस्याऽध्यासो भवति। अयञ्च खल्वध्यासोऽविद्ययैव केवलं निवर्तते। ब्रह्मप्रपञ्चयोश्चापि तादात्म्यातिरिक्तः सम्बन्धो नैव कदापि भवितुमर्हतीत्यवधेयम्। तथा चोक्तम्—

सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका।
विनिर्णीता विमूढेन देहत्वेन तथात्मता॥
घटत्वेन यथा पृथ्वी जलत्वेन मरीचिका।
गृहत्वेन हि काष्ठानि खड्गत्वेनैव लोहता॥
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः[2]॥

---

१. अध्यात्मोपनि० १८

२. योगशिखोपनि० ४/२३-२४

तृतीय पादः

## शङ्कराचार्यमतेनाप्ययमेव विचारः

श्रीशङ्कराचार्यपादाः खलु मायायाः पारमार्थिकमिथ्यात्वापेक्षया तदीयं व्यावहारिकं सत्यत्व विशेषतोऽङ्गीकुर्वन्ति, तत्रैव विशेषं स्वीयमाग्रहमपि दर्शयन्ति। अयमेव च श्रीआचार्यपादानां महत्ता महनीयताञ्च द्योतयति।

आचार्यपादाः स्वप्नजाग्रदवस्थयोर्नहि कदापि साम्यं स्वीकर्तुं प्रभवन्ति। स्वप्नजाग्रदवस्थयोस्तावानेवास्ति भेदो यावानस्ति जाग्रत् सम्यक्सम्बोधि-अवस्ययोः।

स्वस्वस्थाने सर्वं सत्यं प्रमाणभूतं चास्ति। आत्मतत्त्वज्ञानात् प्राग् जगतः सर्वमपि लौकिकं वैदिकं च कार्यं सत्यं प्रमाणभूतं च वर्तते। तथा चोक्तम्—

देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणन्त्वात्मनिश्चयात् ॥[1]

स्वप्नो जीवसृष्टो व्यक्तिगतश्चास्ति। जगच्च खलु परमेश्वरसृष्टं समष्टिगतं च वर्तते।

जीवोऽविद्यावशीभूतो वर्तते, अत एव जीवो भेदस्य सत्यतां स्वीकरोति तथा स स्वममात्मानं कर्त्तारं भोक्तारं च मन्यते। अविद्याया आवरणविक्षेपनाम्न्योर्द्वयोरेव शक्त्योराधिपत्यमस्ति जीवे। जीवगताऽविद्ययैव जीवब्रह्मणोरैक्यमावृतमस्ति, तथा[2] नामरूपात्मकस्य जगतः सृष्टिरपि जायते।

ईश्वरश्च मायावशीभूतो नास्ति येनेश्वरो माययाऽऽवृतो भवेदिति। ईश्वरः स्वयं मायाया विक्षेपशक्त्या स्वीयं सर्वमपि जगज्जातं जनयति। तथा चोक्तम्—

"विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत्"[3]
"एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्"[4]

अपि चोक्तम्—

"जन्माद्यस्य यतः"[5]
"यतो वा इमानि भूतानि जायन्ते, येन जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद् ब्रह्म"।[6]

---

१. वेदान्तपरिभाषा
२. अनेनैव जीवेनाऽऽत्मनानुप्रविश्य नामरूपे व्याकरोत्। छा० उ० ६/३/३
३. वेदान्तसारः
४. माण्डूक्योप० ६
५. ब्र० सू० १।१।२
६. तैत्तिरीयोपनि० ३।१

अन्यत्रापि च—

"येन प्रकाशते विश्वं यत्रैव प्रविलीयते, तद् ब्रह्म"[1]
"अक्षराद् विविधाः सोम्य ? भावाः प्रजायन्ते
तत्र चैवापि यन्ति"[2]

अन्यच्चाप्युक्तम्—

"विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत्
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम्"[3]।

अतो मायोपहितब्रह्मण ईश्वरादेव मायाया विक्षेपशक्तिसहितात् अथवा विक्षेपशक्तिप्रभावेण सर्वेषां प्राणिनामुत्पत्तिः स्थितिः विनाशश्च जायते।

मायोपाधिक आत्मेश्वरः, अविद्योपाधिक आत्मा जीवः। मायाया अविद्याया वा द्वे शक्ती वर्तेते वेदान्तसिद्धान्तानुसारतः।

१. आवरणशक्तिः।

२. विक्षेपशक्तिश्च।

आवरणशक्त्या प्रभावितो जीवः नित्यं, निष्कलं, निःसङ्गं, निर्विकारं निराकारंच ब्रह्म (आत्मानम्) सर्वथा एतद्विपरीतमेव स्वीकरोति। वस्तुभूतस्य ब्रह्मणो वास्तविकं स्वरूपं नैव जानाति। परप्रकाशाऽप्रकाश्यस्य स्वयंप्रकाशस्य चिदानन्द-स्वरूपस्य ब्रह्मभूतस्याऽऽत्मन स्वरूपबोधे इयमेव खलु शक्तिर्बाधं विधत्ते।

विक्षेपशक्तिश्च पुनः यथा रज्जुविषयिणी अविद्या (अज्ञानम्) अज्ञानेनाऽऽवृते रज्ज्वयच्छिन्ने चैतन्ये स्वकीयविक्षेपशक्त्या सर्पादिकमुद्भावयति, एवमेवाऽविद्यापरपर्यायभूता मायापि स्वावृतात्मनि अर्थात् स्वावच्छिन्ने चैतन्ये आत्मनि विक्षेपशक्त्याऽऽकाशादिप्रपंच समुद्भावयति। तथा चोक्तम्—

"विक्षेपशक्तिस्तु यथा रज्ज्वज्ञान स्वावृतरज्जौ स्वशक्त्या
सर्पादिकमुद्भावयति, एवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याऽऽका—

---

१. पंचब्रह्मोपनि० २०

२. मुण्डकोपनि० २।१।१

३. दृग्दृश्यविवेकः १३।१५
वेदान्तसारप्रभृतिग्रन्थेष्वपि

शाविप्रपंचमुद्भावयति"[१]।

अत एव मायोपाधिक आत्मेश्वरः अविद्योपाधिक आत्मा जीवः इत्यपि केषांचित् कथनं साधु सङ्गच्छते।

अज्ञानापरपर्यायभूताऽविद्यात्मिकाया मायायाः, अथवाऽज्ञानापरपर्यायभूतमायात्मिकायाः अविद्याया मतभेदेन बहुप्रकाराः समुपलभ्यन्ते, तथाहि—

"यदेव पररूपाऽदर्शनं सैवाविद्या"[२]।
"अज्ञानन्तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किंचित्"[३]
"असत्प्रकाशनमविद्या"[४]

प्राचीननैयायिकवैशेषिकाणां नये मिथ्याज्ञानं मिथ्याबुद्धिः, अयथार्थबुद्धिर्वा अविद्या अथवाऽज्ञानशब्देन कथ्यते। उक्तंच—

"अविद्या च दूरत्व पित्तदोषेत्यादीन्द्रियदोषजन्यो बुद्धिविशेषः (अयथार्थबुद्धिः)"[५]

एवं "परवंचनेच्छा माया"[६]
"भगवदिच्छा माया"[७]
"भगवच्छक्तिविशेषो माया"[८]

इत्यादिरूपेण नानाविधाः खलु अवान्तरभूताः प्रकाराः अत्र विषये सम्मिलन्ति।

चतुर्थः पादः

## अविद्या अथवाऽज्ञानं दर्शनस्य एका समस्या

**अज्ञानमेकम् अनेकमाहोस्वित् उभयं वेति विचारः**

इह खलु परमार्थतोऽद्वितीयसच्चिदानन्दमयपरमात्मैकस्वरूपपर्यवसितेपि मायापरपर्यायभूतप्रकृतिपिशाचीप्रकल्पितविविधवैचित्र्ये आपाततोऽतिरमणीये मायिके-

१. वेदान्तसारः पृ० ५७ पं० शिवदत्तमिश्र टीकायुक्तः
२. सर्वद० सं० शाङ्करमते पृ० ४५८
३. वेदान्तसारः पृ० ४० तत्रैव
४. सर्वद० सं० पृ० ४३६ तत्रैव
५. प्रशस्त० गु० पृ० २३
६. गौ सू० ४।१।३
७. भागवतटीका विज० ११।२।३७
८. तत्रैव

ऽस्मिन् वैरिंचे प्रपंचे नास्ति किमपि ब्रह्मातिरिक्तं वस्तु यच्च सत्, चित्, अनान्दपद-जन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपिताविशेष्यतावद् भवेत् । ब्रह्मातिरिक्तं सर्वमेवाऽतत्वभूतं मिथ्यालक्षणलक्षितमस्ति सर्वथा वस्तुत्वेन प्रमितं वेदान्तशास्त्रे । 'ब्रह्म सत्यं जगन्मिथ्या' इति श्रुतेः[1]—

अपि च — यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।
तद्वत् सत्यमविज्ञाय जगत् पश्यति मूढधीः ॥
रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति ।
अधिष्ठाने तथा ज्ञाते प्रपंचे शून्यतां गते ॥[2]

अतोऽत्र यच्चाप्यस्ति किमपि सत्तावद् वस्तु तत् सर्वं सर्वात्मकं ब्रह्मैव ।

यथोक्तम्—

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत"[3]

अपि च—

घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ।
जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥
गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् ।
वीक्ष्यमाणे प्रपंचे तु ब्रह्मैवाऽऽभाति भासुरम् ॥
यथैव मृण्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः ।
आत्माऽनात्मविवेकोऽयं मुधैव क्रियते बुधैः ॥[4]

तच्च ब्रह्म अखण्डम्, सच्चिदानन्दरूपम्, एकरसरूपम्: विशुद्धं स्वज्योतिः स्वरूपम्, चैतन्यमेव । चैतन्य च ज्ञानमेव—

"सत्यं ज्ञानमनन्तं ब्रह्म"[5]
"नित्यं विज्ञानमानन्द ब्रह्म"[6]

---

१. निरालम्बोप नि० ४/१६
२. नाद बिन्दूपनि० ४०/२६-२७
३. छा० उ० ३/१४।१
४. योग शिखोपनि० ४/२०, २१, २२
५. तैत्तिरीयोप० २/१
६. छां० उ०

इत्यनेन श्रुतिद्वयेन चैतन्यस्वरूपस्य ब्रह्मणो ज्ञानविज्ञानरूपता प्रतिपादिता भवति ।

श्रीमद्भागवते तु—

धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ।
गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः[1] ॥
इत्यादिना ऐकात्म्यदर्शनमेव ज्ञानम् अभिहितम् ।
"अभेददर्शनं ज्ञानम्"[2]

इत्यादिना चाऽभेददर्शनस्यैव ज्ञानत्वं विवक्षितम् । अन्ततः सर्वोऽपि ज्ञानस्वरूपता ब्रह्मण्येव पर्यवस्यति ।

नैयायिका यथा ज्ञानस्याऽऽत्मगुणत्वं व्याहरन्ति व्यवहरन्ति च, न प्रकृते तथाविधो मार्गः समादरणीयः, प्रकृते च तज्ज्ञानं ब्रह्मरूपं चिन्मात्रमिति ।

तदेव च ब्रह्म जगतोऽधिष्ठानभूतं सच्चिदानन्दस्वरूपम्, स्वगतसजातीयविजातीयभेदत्रयशून्यम्, एकं परमार्थतत्त्वं निर्विशेषम् आकाशवन्नित्यनिरन्तरं निर्विकल्पम्, निराकारं निर्विकारं निरंजनम्, अनाद्यनन्तम् असङ्गं नित्यशुद्धबुद्धमुक्तस्वभावम्, आनन्दैकरसम्, समुद्गिरन्ति । तथा चोक्तम्—

"अद्वितीये परे तत्त्वे निर्विशेषे भिदा कुतः"[3]
"भेददृष्टिरविद्येयं सर्वथा तां विसर्जयेत्"[4]

पुनरपि भेदनिरसनपुरस्सरमभेदमेव द्रढयति—

"निर्विकारे निराकारे निर्विशेषे भिदा कुतः"[5]
"न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः"[6]

अन्यच्चापि—

"ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन"[7]
"आत्मनोऽन्यन्नहि क्वचित्"[8]

इत्थं च मायोपाधिकात् सत्याविलक्षणात् परमेश्वराद् ब्रह्मणोऽतिरिक्तं किमपि नास्ति । यच्चाप्यस्ति सत्त्वेन प्रतीयमानं तत्सर्वमात्मनि ब्रह्मणि मणय इवोतं प्रोतं चाऽस्तीत्यत्र साक्षात् भगवद्वाक्यमेव प्रमाणम् । उक्तं च—

१. श्रीमद्भागवते ११/१६/२७
२. स्कन्दोप० ११
३. अध्यात्मोप० ४/१५
४. महोपनिषत् ५/११३
५. अध्यात्मोपनि० २२
६. तत्रैव ४६
७. तेजोबिन्दूपनि० ३।३२
८. अध्यात्मोपनि० ५।५६

मत्तः परतरं नान्यत् किंचिदस्ति धनंजय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव[5] ॥

अपि च—

"कस्मिन् सर्वे प्रतिष्ठिताः भवन्ति" इत्युपक्रम्य श्रुत्या
रसातलादिब्रह्माण्डान्तान् सर्वलोकानपोह्य, सर्वे लोका
आत्मनि ब्रह्मणि मणय इवोताः प्रोताश्च"[6]—

अन्यत्रापीदमेव समर्थितम्—

उपादानं प्रपंचस्य ब्रह्मणोऽन्यन्न विद्यते।
तस्मात् सर्वप्रपचोऽयं ब्रह्मैवास्ति न चेतरत्[7] ॥

अत एव जगत्कारणीभूते सर्वाधिष्ठाने ब्रह्मणि सर्वमेव अव्याकृतादिस्थूलान्तं चराचरात्मकं नामरूपलक्षणलक्षितं नश्वरं जगदिदं मृत्तिकायां घटवत् तन्तुषु पटवत् सूत्रे च मणिगणवत् ब्रह्मसत्तामेवानुवृत्य तिष्ठति, न ततो लेशतोऽपि पृथग् वर्तते। यथोक्तम्—

सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम्।
प्रपंचाधाररूपेण वर्ततेऽतो जगन्नहि[1] ॥
"आत्मा वा इदमेक एवाग्र आसीत्
नान्यत्किंचिन्मिषत्"[2]
"ब्रह्मैवेदं सर्वम्"[3]

इत्यादिनाऽस्मानमधिकृत्य अध्यात्मशास्त्रं वेदान्तशास्त्रं प्रवृत्तं भवति येन तत्त्वज्ञानं भवेत्। तत्त्वज्ञानेन च पुनः ब्रह्मात्मनाऽवस्थानरूपो मोक्षः स्यात्। स च मोक्षः श्रवणद्वारा मननद्वारा, निदिध्यासनद्वारा भवेत् अर्थात् "भक्तिनिपुणताऽऽलोके" इत्यादिन्यायेन समुदितरूपेण स्यात्, समाधिद्वारा वा स्यात्, निरस्तसमस्तकामनाभिर्वा स्यात्, आहोस्वित् इतोऽतिरिक्तेन प्रकारान्तरेण वा भवेत्, स्वानुभूत्या वा स्यादिति प्रागुक्तप्रकारेषु तत्त्वज्ञानप्राबल्यदार्ढ्यसिद्धिकारणीभूता सम्पत्ति विचार्य ज्ञानेन मोक्षं प्राप्नोति साधको यतिः।

---

५. गीता ७/७
६. गीताशाङ्करानन्दी, अ० ७/७
७. योगशिखोपनि० ४/३
१. आत्मप्रबोधोप० १२
२. एतरेयोपनि० १/१
३. बृहदारण्य० २/५/१

**अज्ञान (अविद्या) स्वरूपं विविच्यते**

इदानी प्रसङ्गसङ्गतिमुपोद्घातसङ्गतिं चाश्रित्यैव अज्ञानस्वरूपम् आहोस्वित् अज्ञानापरपर्यायभूताऽविद्यास्वरूपं प्रदर्श्यते।

मोक्षसाधनतत्वज्ञानविपरीतं च सर्वं रजस्तमोगुणजातमज्ञानमेव, अथवा अज्ञानसंवर्धनसाधनमेव। तदेव चैतच्चराऽचरविश्वकारणीभूतं ज्ञानप्रतिबन्धकं भवति। तथा चोक्तम्—

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥[1]

"तत्त्वज्ञानस्यार्थं फलरूपो मोक्षस्तस्य दर्शनम् एवं तत्सिद्धिप्रक्रियालोचनं च"[2]—

इदमेवाऽज्ञानं भेदो भेददृष्टिर्वा, द्वैतं द्वैतजनकं, द्वैतदृष्टिर्वा, देहाध्यासो देहात्मप्रत्ययो वा, मिथ्याज्ञानरूपो वा, मिथ्याचाररूपो वा, अग्रहणरूपो वा, आहोस्वित् प्रागुक्तेषु यदुपपन्नं भवति तत्स्वरूपो वा, सर्वस्वरूपो वेत्यादिरूपेण ब्रह्मातिरिक्तं सर्वमेवाऽज्ञानम्। उक्तञ्च—

देहोऽहमिति संकल्पो हृदयग्रन्थिरीरितः।
देहोऽहमिति यज्ज्ञानं तदेवाऽज्ञानमुच्यते॥
देहोऽहमिति या बुद्धिः सा चाऽविद्येति भण्यते।
देहोऽहमिति यज्ज्ञानं तदेव द्वैतमुच्यते॥[3]

अपि च—

"परात्मनो मनुष्येन्द्र? विभागो ज्ञानकल्पितः"[4]

मायापरपर्यायभूतेयमविद्या न केवलमज्ञानरूपा अपितु मिथ्याज्ञानरूपा सती मिथ्याचाररूपापीय भवतीत्यनुभूयते। नास्तीदमज्ञानमभावरूपम् अर्थात् ज्ञानाभावरूपमपि तु भावभूतमेवेति विज्ञेयम्।

अविद्याऽज्ञानयोर्मायारूपत्वात् अनिरूप्यतापि स्वीकृता वर्तते। इदमेवाऽज्ञानमविद्या वाऽनन्तं सान्तं विद्यते, अपरिच्छिन्नं परिच्छिन्नमिति। अद्वैतं चाऽऽत्मतत्त्वं द्वैतरूपेण अर्थात् नामरूपात्मकप्रपञ्चरूपेणाऽऽत्मज्ञानपर्यन्तं भासयति, एवमभेदं भेदरूपेण वर्णयति, अज्ञानिनो जनान् सुखयति, आनन्दयति, विषादयति च।

१. गीता १३/११
२. तत्रैव शङ्करानन्दी टीकायाम्
३. तेजोबिन्दूपनि० ५/६३-६४
४. विष्णुधर्मोत्तर

व्यवहारावस्थापर्यन्तमन्यपदार्थवदिदमप्यज्ञानम्, आहोस्वित् इयमप्यविद्याऽस्ति वस्तुभूतः पदार्थः। अत एवेदमप्यज्ञानमस्ति लोके लौकिकावस्थायामेव प्रमाणमित्यप्यनुसन्धेयम्। यथोक्तं धर्मराजाध्वरीन्द्रेण—

"लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्"[1]

इदं च निरूपितमज्ञानं नास्ति कश्चन अननुभूतो वस्तुभूतः पदार्थः। गाढनिद्रायां सर्वेऽपि जनाः "सुखमहमस्वाप्सं न किंचिदवेदिषम्" इत्यनुभवन्ति च।

अयमेव चाऽनुभवोऽज्ञानम्, इयमेव चाऽविद्येति च कथ्यते। अध्यासो विवर्तश्चाऽविद्यया सिद्ध्यतीत्यपि वेदान्तडिण्डिमः। (१) अध्यासस्य सार्वजनीनं स्वरूपं ब्रह्मसूत्रशाङ्करभाष्यस्य प्रथमाध्यायस्य प्रथमसूत्रव्याख्यायामित्थं समुद्घोषितं यत्—

"कोऽयमध्यासो नामेति। उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः"[2]

इत्यादिना बहूनि-अध्यासलक्षणानि निरूपितानि तत्रैव मिलन्ति, तानि नात्रोद्धृतानि, अनपेक्षितत्वात् लेखविस्तरभयाच्च।

सोऽयमध्यासः षड्विधः। तथाहि—

१. धर्माऽध्यासः

२. धर्मसहितधर्मिणोऽध्यासः,

३. सम्बन्धाऽध्यासः,

४. सम्बन्धसहितसम्बन्धिनोऽध्यासः।

५. अन्यतराऽध्यासः

६. अन्योन्याऽध्यासः,

अयं चाऽध्यासो दोषात्मको दोषजन्यो वेत्यपि व्याहर्तुं शक्यते। तत्र क्वचिदध्यासजनने प्रमातृदोषः कारणं, क्वचित् प्रमेयदोषः, क्वचिच्च प्रमाणदोष इति।

(१) धर्माध्यासो—यथा

"गौरोऽहं, कृष्णोऽहम्, स्थूलोऽहं, कृशोऽहम्" इत्यादिनाऽऽत्मनि जायमानः शरीरनिष्ठगौरत्वादिधर्मप्रकारकोऽध्यासो धर्माध्यासः कथ्यते।

एवं काणत्व-बधिरत्वादिरूपा ये इन्द्रियनिष्ठा धर्मास्तेषामात्मनि जायमानोऽध्यासोऽपि खलु धर्माध्यास उच्यते।

(२) धर्मसहितधर्मिणोऽध्यासो - यथा

कर्तृत्वादिधर्मविशिष्टसाहित्यावच्छिन्नाऽन्तःकरणरूपधर्मिण आत्मनि जायमानो-

---

१. वेदान्तपरिभाषा

२. ब्र०सू०शा०भा०।

ऽध्यासः स द्वितीयोऽध्यासो विज्ञेयः।

(३) सम्बन्धाऽध्यासो—यथा

शरीरेन्द्रियादिष्वात्मनस्तादात्म्यरूपसम्बन्धस्य जायमानो योऽध्यासः स सम्बन्धाऽध्यासो भवतीति विज्ञेयम्।

(४) सम्बन्धसहितसम्बन्धिनोऽध्यासो—यथा

प्रागुक्ततादात्म्यरूपसम्बन्धसहितशरीरेन्द्रियादिरूपाऽनात्मभूतपदार्थानां सम्बन्धिभूतानामात्मनि जायमानोऽध्यासश्चतुर्थोऽध्यासो निरूपितः श्रीसर्वज्ञात्ममुनिना।

(५) अन्यतराऽध्यासो—यथा

आत्मनि अनात्मभूतशरीरेन्द्रियादिपदार्थानामध्यासो भवति न त्वनात्मभूतशरीरादिष्वात्मनोऽध्यास इत्ययमेवाऽन्यतराध्यासः। यत्र द्वयोरेकस्याऽध्यासो जायते स एवाऽन्यतराऽध्यासः।

(६) तप्ताऽयः पिण्डवद् अर्थाल्लोहाग्निवत् परस्परं जायमानो योऽनात्मभूतपदार्थानामात्मनश्चाऽध्यासः स एवाऽन्यतराध्यासो वर्णितः खलु शास्त्रेषु।

प्रकारान्तरेण चायमध्यासो द्विविधो वर्णितः। तथाहि—

१. स्वरूपाध्यासः,

२. सम्बन्धाध्यासश्च।

अयमेव च सम्बन्धाध्यासः संसर्गाध्यासशब्देनापि व्यपदिश्यते।

प्रागुक्तेषु षड्विधप्रकारेषु प्रथम, द्वितीय, पंचमाऽध्यासाः स्वरूपाऽध्यासाऽन्तर्गता अन्तर्भूताश्च भवन्ति। तृतीयश्च संसर्गाध्यासे। चतुर्थस्तथा षष्ठोऽध्यासः संसर्गाऽध्यास, स्वरूपाऽध्यासयोर्मिश्रणं विज्ञेयम्।

अत्राऽयमप्यस्त्येको विशेषतो विचारणीयो विषयः यद् अध्यासस्थलेऽध्यस्तवृत्तिधर्मा अधिष्ठाननिष्ठधर्मान् आवृत्य स्वयं तत्र भासमाना भवन्ति। यथा प्रकृते--आत्मनः सन्ति चत्वारि विशेषणानि, तानि च सत्, चित्, आनन्द, अद्वैताख्यानि।

एवमनात्मनोऽपि सन्ति चत्वार्येव विशेषणानि एतद्विपरीतानि, तानि च अनृत, जड़, दुःख, द्वैताभिधानपराणि।

अन्योन्याध्यासद्वाराऽऽत्मनः सत्, चित्, विशेषणानि खल्वनात्मनोऽनृत, जड़ विशेषणद्वयमावृण्वन्ति। एवमनात्मनो दुःख-द्वैतविशेषणानि खल्वात्मन आनन्दाऽद्वैतद्वयविशेषणमभिभवन्तीति पुरातनमहापुरुषगिरो गिरन्ति।

अयमेवाऽभिभव इदमेव वाऽऽवरण चिज्जड्ग्रन्थि वच्यते। अयमेव खलु पञ्चविधो भेद संसारस्य भ्रमाऽन्धकारभूतस्याऽस्ति हेतुभूता बीजशक्ति.।

अयञ्च पञ्चविधो भ्रमस्तन्निराकरणोपायश्चेत्थं श्रूयते महापुरुषैः—

भेद भ्रम कर्तृभ्रम संगभ्रम औ विकार—
ब्रह्मभिन्न जग सत्यभ्रम पाचो भ्रम संसार।
बिम्ब-प्रतिबिम्ब औ रक्तस्फटिक घटाकाश गुणभार—
कनककुण्डलदृष्टान्त से पाचो भ्रान्ति निवार॥[1]

अपि च तत्रैव—

भेदकर्तृत्व संसर्गविकृतिविश्वसत्यता—
विभ्रान्तयो निराकार्या दृष्टान्तैः पञ्चभिः क्रमात्।
बिम्बकप्रतिबिम्बोऽथ लोहित स्फटिको मणि —
घटाकाशश्च विज्ञेयो रज्ज्वहिर्हेमकुण्डलम्॥[2]

(१) जीवेश्वरौ परस्पर भिन्नौ—अयं भेदः भ्रान्तिभूत.। भ्रान्तिमूलको वा। 'भेददृष्टिरविद्येयम्'[3]

अस्य भेदस्य निराकरण निवृत्तिर्वा बिम्बप्रतिबिम्बदृष्टान्तेन भवतीति विज्ञेयम्। यथा दर्पणे दृश्यमान मुखप्रतिबिम्ब मुखस्वरूपबिम्बाद् भिन्न नास्ति, तात्त्विकदृष्ट्या च विचार्यमाणे बिम्बमेव प्रतिबिम्बमित्येव निर्णीत भवति चान्ते। तथैव जीवेश्वरयोर्भेदोऽपि सर्वथा भ्रान्तिभूत।

(२) आत्मनि कर्तृत्वादिधर्माणां भ्रमनिवृत्तिः—रक्तस्फटिकदृष्टान्तेन विज्ञेया। अर्थाद् यथा रक्तपुष्पसम्पर्कमात्रात् स्फटिकोऽपि रक्त प्रतीयते। तत्र नास्ति स्फटिको रक्त पुष्पस्य रक्तत्वात्तस्यैव रक्तिमा स्फटिके भासमान भवति। तथैव प्रकृते निर्धर्मके ब्रह्मणि अन्तःकरणसन्निधानमात्रात् कर्तृत्वादिधर्मा भासमाना भवन्ति, कर्तृत्वादिधर्माणां वस्तुतोऽन्त.करणधर्मत्वान्न तु ब्रह्मणो धर्मत्व तेषां, ब्रह्मणो निर्धर्मकत्वात्।

(३) शरीरेन्द्रियादिनिष्ठाऽहन्ताया एव पुत्रपौत्रादिनिरूपितममताविषयिणी प्रतीतिरात्मनि जायते।

यस्य खल्वात्मनि जनन, मरणादिव्यवहारो भवति, अयमेव च संसर्गभ्रमो वा संगभ्रमो वा कथ्यते। घटाकाशदृष्टान्तविश्लेषणविधानेनाऽस्य भ्रम सर्वथा निराकृतो

१ संक्षेपशारीरकभूमिकायां स्वामिसर्वानन्द लिखितायां द्रष्टव्यम् पृ० ३४
२. तत्रैव द्रष्टव्यम्
३. महोपनिषद् ४/११३

भवति, यतो नहि घटनाशप्रयुक्त आकाशनाशः, नापि घटाऽऽकाशनाशप्रयुक्तो वाऽऽकाशनाशः किन्तु आरोपितश्चाऽयं सर्वथा। तथैव शरीरसंसर्गवशादेवाऽऽत्मनि अहन्तायाः, ममतायाः, जननमरणयोश्चाऽऽरोपो जायते, आत्मनोऽसङ्गत्वेन शरीरसम्बन्धरहितत्वात् अत एव जननमरणराहित्याच्च।

(४) यथाऽस्ति दुग्धविकारभूतं (परिणामभूतं) दधि, तथैव ब्रह्मणोऽपि विकारभूतं चराचरात्मकं जगदिदं प्रतिभाति। इयमस्ति सर्वथा भ्रान्तिः, विकारभ्रान्तिरिति। अस्या विकारभूताया भ्रान्तेः, भ्रान्तिभूतस्य वा विकारस्य निवृत्तिः —रज्जुसर्पदृष्टान्तेन स्वयमेव भवति। अर्थात् रज्जूपहितचेतनस्याऽऽच्छादिका तूलाविद्यास्वरूपाऽविद्याऽन्धकार-प्रभृतिदोषात्मककारणवशाद् विक्षुब्धा सती सर्परूपेण परिणमते। अतः सर्पादयः सर्वेऽपि विकाराः सन्ति अविद्याया एव न तु चेतनस्य। एवमेव चराचरात्मकं जगदिदं सर्वमेवास्ति विकारभूतं मूलाविद्यायाः न तु ब्रह्मणस्तस्य सर्वथा निर्विकारत्वात्।

(५) चराऽचररूपेण भासमानं जगदिदं सर्वथा ब्रह्माभिन्न सत्यं चास्तीति भ्रान्तिः कनककुण्डलदृष्टान्तविचारेण सर्वथा निराकृता भवति। अर्थात् सुवर्णात् आभूषणानां यथा नास्ति कोऽपि भेदस्तथैव प्रकृतेऽपि चराचरात्मकं सर्वमेव जगन्नास्ति ब्रह्मणोऽतिरिक्तं किमपि वस्तुभूतम्।

इदं च जीवब्रह्माध्यासभूतं निरूपितमज्ञानं नास्ति किमप्यननुभूतं वस्तुस्वरूपं पदार्थविशेषात्मकं विषयजातम्।

अस्याऽज्ञानस्याऽनुभवं स्फुटतरं गाढनिद्रायां सर्वेऽपि जना विद्वांसोऽविद्वांसो वा "सुखमहमस्वाप्सं न किंचिदवेदिषम्" इत्याविरूपेण प्रकुर्वन्तीत्यत्र नास्ति लेशतोऽपि संदेहानध्यवसायावसर इति नूनं विभाव्यताम्।

अयमेव चाऽनुभवः स्वस्वज्ञानमविद्यादिशब्दैर्निगद्यते व्यवह्रियते चापि सर्वत्र। इदं चाज्ञानं समष्टिव्यष्टिरूपेण वर्णितं वेदान्तशास्त्रे वेदान्तसारग्रन्थे विशेषतः।

चतुर्थोऽध्याय.

प्रथम. पादः

# मायायाः स्वभावस्तद्भेदाश्च

माया नाम मूलप्रकृतिरनादिरनिर्वाच्या चिन्मात्रसम्बन्धिनी। सा च माया ब्रह्म-चैतन्यान्न भिन्ना ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वेन वस्तुतो मायाया ब्रह्मणो भेदासम्भवात्। नापि माया ब्रह्मणोऽभिन्ना, चैतन्यजडयोरैक्याऽभावात्। नापि माया ब्रह्मणो भिन्ना-ऽभिन्ना, एकत्र भिन्नत्वाऽभिन्नत्वयोर्विरोधेनाऽसम्भवात्।

एवं माया न तावत् सती ? एकमेवाऽद्वितीयं ब्रह्मेति द्वैताभावबोधकोपनिषद्-विरोधात्। नापि माया असती, असत्याया मायाया मूलप्रकृतित्वानुपपत्तेः। नापि माया सदसद्रूपा सत्त्वासत्त्वयोरेकत्र विरोधात्।

एवं माया न तावदनवयवा, मायाया सावयवत्वे सावयववस्तुनः सादित्वात्तत्-प्रतिबिम्बितेश्वरस्यापि सादित्वप्रसङ्गात्। नापि माया निरवयवा, निरवयव-पदार्थाना लोके प्रकृतित्वाऽदर्शनेन मायाया निरवयवाया मूलप्रकृतित्वासम्भवात्। नापि निरवयवावयववती, सावयवनिरवयवत्वयोरेकत्रवस्तुनि विरोधात्। तस्मात् सर्वप्रकारेण मायाया निर्वक्तुमशक्यत्वात् मायाऽनिर्वाच्यैव स्वीकर्तव्येति[१]।

तस्याश्च मायाया शक्तिद्वयमस्ति। आवरणशक्ति, विक्षेपशक्तिश्चेति। यथा शुक्त्याद्यवच्छिन्नचैतन्याज्ञानमावरणशक्त्या शुक्त्याद्यवच्छिन्नचैतन्यमावृत्य विक्षेप-शक्त्या रजतादिकमुत्पादयति, तथा मायाप्यावरणशक्त्या शुद्धचैतन्यमावृत्य विक्षेप-शक्त्या जीवेश्वरादिभेदं कल्पयति।

---

१. सर्वोपनिषद ४

न सती वा नासती वा नोभयात्मिका विरोधत ।

[?]तद्विलक्षणा काचित् वस्तुभूतास्ति सर्वदा ॥

देवीभागवतपुराणम् ७/३२/४१ अत्र च सेत्यनेन पूर्वश्लोकान्मायायाः परामर्शः

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।

अनिर्वाच्या ततो ज्ञेया भेदबुद्धिप्रदायिनी ॥

+बृहन्नारदपुराणम् पूर्वखण्ड ३३/६६

शौरपुराणम् २१/२८, अध्यात्मरामायणम् १/७/३३, २/१/२२

अनिर्वाच्या सैव माया जगद्बीजम्, गणेशोत्तरतापनीयोपनिषद् ४

न च मायाया आवरणशक्तौ मानाभाव इति वाच्यम् ब्रह्मस्वरूपानवभासानुपपत्तेरेव तत्र मानत्वात् । न चाऽन्यथानुपपत्तिः, तत्र न तावदिदानीं प्रतीचो ब्रह्मभावाभावादनवभासः ब्रह्मैव सन् ब्रह्माप्येति इति श्रुत्या ब्रह्मभावस्य सत्वात् । नापि तद्विषयप्रमाणाऽभावादनवभासः स्वयम्प्रकाशस्य तस्यागन्तुकप्रमाणानपेक्षत्वात् । नापि विद्यमानस्यापि तस्य केनचिद् मूर्तद्रव्येणावृतत्वादनवभासः अत्यन्तमव्यवहितस्य तस्याऽऽवृतत्वानुपपत्ते. । तस्मान्मायैवावरणशक्त्या ब्रह्म चैतन्यमावृणोति ।

माया शुद्धसत्वगुणप्रधाना भवति, अविद्या मलिनसत्वगुणप्रधाना भवति । मायायां प्रतिबिम्बितं शुद्धचैतन्यमीश्वर इति व्यपदिश्यते । अविद्यायां प्रतिबिम्बितं चैतन्यं जीव इति व्यवह्रियते । तत्र च मायाया एकत्वादीश्वर एक एव । अविद्याया नानात्वाज्जीवो नाना । अज्ञानमेव शुद्धसत्वगुणमलिनसत्वगुणयोः प्राधान्यान्मायाऽविद्याभेदेन व्यवह्रियते ।

केचन तु आवरणशक्तिमदज्ञानं माया, विक्षेपशक्तिमदज्ञानमविद्येति कथयन्ति ।

मायाया ईश्वरेण सह सम्बन्धः

माया उपहितत्वसम्बन्धेनेश्वरे वर्तते । अतो मायेश्वरयोः उपाध्युपधेयभावसम्बन्धो वर्तते । सा च माया ईश्वरे न संलग्ना । यथा कर्णशष्कुल्यवच्छिन्नं नभ इत्यत्र नभो न कर्णशष्कुल्या संलग्नं भवति, तथैव मायावच्छिन्नं चैतन्यमित्यत्रापि चैतन्यं मायया संलग्नं न भवति । असंलग्नत्वादेवेश्वरो न मायाया वशगः । किन्त्वीश्वरो मायां नियमयति । उपाधिर्नाम कार्याऽनन्वयित्वे सति व्यावर्तकत्वे सति वर्तमानत्वम् । यथा कर्णशष्कुल्यवच्छिन्नं नभ इत्यत्र कर्णशष्कुलिरितरान्व्यावर्तयति स्वयं विद्यते च, कार्येण सह नान्वयश्च । एवमेव मायाऽपि तदानीं विद्यत इतरान् व्यावर्तयति, ईश्वरेण सह मायाया अन्वयोऽपि नास्ति ।

निर्गुणमेव ब्रह्म यदा मायाऽवच्छिन्नं भवति तदा ब्रह्म सगुण भवत् ईश्वरसंज्ञां लभते । यदा तु निर्गुणमेव ब्रह्म मायोपाधिक भवति तदा ईश्वरसाक्षी भवति । एक एव हि ईश्वरः मायानिष्ठसत्वप्राधान्यात्, मायानिष्ठरज. प्राधान्यात् मायानिष्ठतमःप्राधान्याच्च विष्णुसंज्ञा ब्रह्मसंज्ञा महेश्वरसंज्ञा च लभते । तस्मादीश्वरस्येश्वरत्वे मूलं कारणं मायव । मायी ईश्वरो विश्वं सृजति । माया विना परमेश्वरस्य स्रष्टृत्वं न संभवति । परमेश्वरस्य माया लौकिकस्य मायाविन इव परतन्त्रा विद्यते । ईश्वराश्रितत्वाच्चेश्वराधीनाऽस्ति । स्वस्य मायाशक्त्यैवेश्वरेण जगत् सृज्यते । ईश्वर एव जगतो निमित्तोपादानकारणद्वयम् । यथा रज्जुः सर्पाधिष्ठानम्, तथैवेश्वरो जगतोऽधिष्ठानम् ।

## द्वितीय पादः

### मायाजीवयो सम्बन्ध

मायाजीवयोरवच्छेद्यावच्छेदकभाव सम्बन्धो विद्यते । मायाऽवच्छेदिका, जीवोऽवच्छेद्यो वर्तते । माया विशेषणम्, चैतन्यं विशेष्यम् । विशेषण नाम कार्यान्वयित्वे सति व्यावर्तक भवति । यथा रूपविशिष्टो घट इत्यत्र रूप विशेषणम्, घटो विशेष्यः रूपस्य हि घटेन सहाऽन्वयो विद्यते । रूप चारूप व्यावर्तयति । तस्मात् रूप विशेषण भवति । एवमेव माया विशेषणम् चैतन्य विशेष्यम्, जीवेन सह मायाया अन्वयोऽस्ति । मायाया सम्बन्धादेव मायाया वशगो जीवो भवति ।

**मायाविषये दृष्टिकोणविचारः**

व्यवहारदृष्ट्या विचार्यमाणे सति माया नाम पदार्थान्तरमस्ति । यदि माया नाम न स्यात्, तदा मन्दान्धकारे रज्ज्वादिक सर्पादिभ्रमो न स्यात् । रज्ज्वादौ सर्पादिभ्रम सर्वजनानुभवसिद्धो विद्यते ।

तार्किकदृष्ट्या अपि माया स्वीकर्तव्या एव भवेत् यदि माया न स्यात् तर्हि रज्ज्वादौ सर्पादिभ्रमो न स्यादित्यादितर्को मायाविषयेऽनुसन्धेय ।

वस्तुतो विचार्यमाणे माया नाम न काप्यास्ति । किन्तु कल्पिता एव । यथा रज्ज्वादौ सर्पादिकल्पना, तथैव मायाया अपि कल्पनामात्रम्, यथा रज्ज्वादौ विचार्यमाणे परमार्थतो न सर्पादिः तथैव विचार्यमाणे परमार्थतो न माया अपि विद्यते । किन्तु कल्पितसर्पादिराधिष्ठानस्वरूपत्वमेव । यथा सर्पादि शुक्त्यवच्छिन्नचैतन्यस्वरूपम्, तथैव माया अपि शुक्त्यवच्छिन्नस्वरूपमेव । तस्मात् सिद्धान्ते सर्वमेव जगत् अधिष्ठानब्रह्मचैतन्यस्वरूपमेव । परमार्थतो जगत सत्ता नैव विद्यते ।

वस्तुत ईश्वरसंज्ञाया जीवसंज्ञायाश्च मूलकारण माया । परमेश्वरशक्ति सा च माया एव च । मायाया एव विक्षेपावरणशक्तिद्वयेन व्यावहारिकदृष्टिकोणेन मायाया एव मायाऽविद्येति भेदद्वयम् । आवरणशक्तिरविद्याया स्वरूपम् । अविद्याया सम्बन्धो जीवेन सह विद्यते । विक्षेपशक्तिर्मायाया स्वरूपम् । निर्गुण शुद्ध ब्रह्मचैतन्यमेवाविद्योपाधिद्वारा जीवरूपेण परिणमते । प्रतिजीवमन्त करणस्य भिन्नतया जीवः परिच्छिन्नोऽल्पज्ञश्च भवति । अन्त करणस्य भिन्नत्वादेवान्त करणावच्छिन्नो जीवो नानेति सिद्ध्यति ।

मायायाः पर्यायवाचिनः शब्दाः

माया,[1] अविद्या,[2] अज्ञानम्,[3] अजा,[4] तमः,[5] शक्तिः,[6] प्रधानम्,[7] अव्यक्तम्,[8] प्रकृतिरित्यादय.[9] शब्दाः मायाया वाच्यार्थं प्रयुज्यन्ते ।

---

१. मायान्तु प्रकृतिं विद्यात् ।
योगी मायाममेयाय ।
मायया ऽपहृतज्ञानाः ।
मायामेतां तरन्ति ते ।
इन्द्रो मायाभिः पुरुरूप ईयते ।
मम माया दुरत्यया ।
भूयश्चान्ते विश्वमाया निवृत्तिः ।

२. अविद्यायामन्तरे वर्तमाना ।
क्षरंत्वविद्या ह्यमृतं तु विद्या ॥

३. अज्ञानेनाऽऽवृतं ज्ञानम् ।
तस्मादज्ञानसम्भूतम् ॥

४. अजामेकां लोहितशुक्लकृष्णाम् ।
जय जय जह्यजाम् ।

५. अन्धेन तमसाऽऽवृताः ।
अन्धं तमः प्रविशन्ति ।
तमसो मा ज्योतिर्गमय ।

६. देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
परास्य शक्तिर्विविधैव श्रूयते ॥

७. क्षरं प्रधानममृताक्षरं हरः ।
प्रधानजं स्वभावतो देव एकः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः ।

८. महतोऽव्यक्तमुत्तमम् ।
अव्यक्तात्तु परः पुरुषः ।

९. प्रकृतेः क्रियमाणानि ।
प्रकृतेर्गुणसम्मूढाः ।
प्रकृतिं स्वामधिष्ठाय ।
मयाऽध्यक्षेण प्रकृतिः ।
प्रकृतिं पुरुषं चैव ।
पुरुषः प्रकृतिस्थो हि ।
प्रकृतिं च गुणैः सह ।
प्रकृत्यैव च कर्माणि ।
गुणाः प्रकृतिसम्भवाः ।

## मायाशब्देतिहासः

प्रथमतः मायाशब्दस्य प्रयोगः संहितायां दृश्यते। ऋग्वेदसंहितायां मायाः मायया, मायाभिः, माया, मायाम्, इत्यादिप्रकारेण मायाशब्दस्य बहुवारं प्रयोगो ऽस्ति।[1]

तत्रैव संहितायां तृतीयान्तमायाशब्दस्य प्रयोगश्चतुर्विंशतिवारमवलोक्यते।[2] तृतीयाबहुवचनान्तमायाशब्दस्य प्रयोग ऋग्वेदे त्रयोदशवारमायातो विद्यते।[3] प्रथमतो मायाशब्दस्य प्रयोगश्च तत्रैव वेदे त्रिवारमायात.।[4] माया शब्दस्यापि प्रयोगस्त्रि-वारमेवायात.।[5]

शुद्धं मायाशब्दं विहाय प्रत्ययान्ता मायी, मायावीत्यादयोऽपिशब्दा बहुवारं ऋग्वेदे प्रयुक्ता विद्यन्ते।[6] यजुर्वेदसंहितायामपि मायाशब्दस्य प्रयोगो विद्यते।[7]

---

१. ऋग्वेद संहिता-१ मण्डलम् ३२ सूक्तम्। ४ मन्त्रः। १-११७-३२-११-१०, २-२७-१६, ३-२०-३, ३-५३-८, ५-२-९, ५-३१-७, ५-४०-६, ५-४०.८, ६-१८-९, ६-२०-४, ६-२२-६, ६-४४-२२, ६-४५-९, ६-५८-१, ७-१-१०, ७-९८-५, ७-९९-४, ८-४१-८, १०-५३-९, १०-७३-५, १०-९९-२, १०-१११-६

२. ऋग्वेद संहिता—१-८०-७, १-४४-१, १-१६०-३, २-१७-५, ३-२७-७, ४-३०-१२, ४ ३०-२१, ५-६३-३, ५-६३-६. ५-६३-७, ६-२२-६, ७-१०४-२४, ८-२३-१५, ८-४१-३, ९-७३-५, ९ ७३-९, ९-८३-३, १०-७१-५, १०-८५-१८, १०-१७७-१

३. ऋग्वेद संहिता—१-११-७, १-३३-१०, १-५१-५, १-१५१-९, ३-३४-६, ३-६०-१, ५-३०-६, ५-४४-२, ५-७८-६, ६-४७-१८, ६-६३-५, ८-१४-१४, १०-१४८ २

४. ऋग्वेद संहिता – ३-६१-७, ५-६३-४, १०-५४-२

५. ऋग्वेद संहिता—५-८५-५, ५-८५-६, १०-८८-६

६. ऋग्वेद संहिता—७-२८-४, १०-९९-१०, १०-१४८-५, १-३९-२, १-५१-५, १-५४ ४, १-६४.६०, १-५९ ७, २-११-१०, ३-३८-७, ३-३८-९, ३-५६-१, ५-४४-११, ६-६१-३, ७-८२-३, ८-३-१९, ८-२३-१४, १०-१३८-३, १-११-७, १-५३-७, १-५६-३, १-८०-७, २-११-५, ५-३०-६, ५-२८-२, ६-४८-१४, ८-७६-१, १०-१४८-२, १-३२-४, ३-२०-३, ३-३४-३, ५-४८-१, १०-५-३, ५-४८-३, ६-६३-५, १०-२४-४, २-११-९, ९-८३-३, ४-१६-९।

७. यजुर्वेद संहिता—११-६९।

अथर्ववेदसंहितायां बहुवारं मायाशब्दस्य प्रयोगो वर्तते ।[1] एवं ब्राह्मणग्रन्थे[2] उपनिषत्सु[3] गीतादौ[4] पुराणादौ च[5] मायाशब्दस्य प्रयोगा बहुवारतया दृश्यन्ते इति ।

---

१. अथर्ववेद संहिता—८ काण्डः, ९ सूक्तम्, ५ मन्त्र
अथर्ववेद संहिता—४-३८-३, ६-७२-१, ७-८६-१, ८-४-२४, १०-८-३४, १३-२-३, १३-२-११, १४-१-२३, १९-६८-१, २०-३६-६, १९-२७-५, १९-२७-६, १९-६६-१, २-२९-६, ८-१३-३, ८-१३-४, ४-२३-५, ८-३-२४, २०-२६-६, २०-८७-५, ८-१०/४-१, ८-९-५, २-१-८, २०-११-६, २०-२९-४, ५-११-४ २०-११-३, २०-२१-४, २-२९-६, २०-२९-४ ।
२. ऐतरेय ब्राह्मणम्—८-२३, ६-३६ । वाजसनेय संहिता । तैत्तिरीय ब्राह्मणम्—३-१०-८-२, २५-१३-६-९ । शतपथ ब्राह्मणम्, शुक्लयजुर्वेद संहिता, ३-२-४-१ १३-५-१२-४ ।
३. बृहदारण्यकोपनिषद्, २-१९ ।
प्रश्नोपनिषद् १-१६ ।
श्वेताश्वतरोपनिषद् १-१०, ४-१०, ४-९, ४-१०, १-१० ।
नृसिंहपूर्वतापन्युपनिषद् ३-१, ५-१, । १-१, ५ खण्ड ।
कैवल्योपनिषद्, १-१२, १-१३ ।
सर्वसारोपनिषद्, ४ । रामपूर्वतापन्युपनिषद् २-४ ।
गोपीचन्दोपनिषद् २, ४ । कठरुद्रोपनिषद् १० ।
गोपालोत्तरतापन्युपनिषद् १७ । कृष्णोपनिषद् ४, १० ।
४. श्रीमद्भगवद्गीता, ७-१४, १८-६१ ।
५. विष्णुपुराणम्, १-९-१०९, ५-३३-९, ५ ३०-१४, ५-२७-१४, ३-१८ ८, १-७-३३, ३-१७-४२, ३-१८-३१, ५-२०-१०४ ।
श्रीमद्भागवतपुराणम्, २-९-३३, १०-६३-४० । ब्रह्मपुराणम्, १७८-८१, वाराह पुराणम्, ८-२६ । अग्निपुराणम्, १३७-१८, २४१-६५ ।
शिवपुराणम् वायवीय संहिता, पूर्वभाग, ६-३ ।
स्कन्दपुराणम्, काशीखण्ड, ५६-३१ ।
ब्रह्मवैवर्तपुराणम्, प्रकृतिखण्ड ६६-२५ ।
भविष्यपुराणम्, प्रतिसर्गपर्व, २३-१०१, १११, ११२, ११३ ।
मार्कण्डेयपुराणम्, ८२-६ ।
महानारदीय पुराणम्, पूर्वखण्ड १०-३८ ।
शिवपुराणम्, वायवीयसंहिता, पूर्वभाग ६-५ ।
स्कन्दपुराणम् काशीखण्ड, ५६-३१ ।
ब्रह्मवैवर्तपुराणम्, प्रकृतिखण्ड: ६६-२५ ।

## तृतीय पादः

**मायायाः पौराणिका भेदाः**

विष्णुपुराणे मायाशब्दो बहुवार प्रयुक्तोऽस्ति[1] । तत्र च मायाया वर्णने विष्णोर्माया मायाशब्द प्रयुक्तः । मोहनीरूपधारी विष्णुर्हि स्वस्य मायया दानवान् मोहयित्वा धनादिकमादाय देवेभ्य प्रायच्छत्[2] इति वर्ण्यते । ततो ज्ञायते माया नाम विष्णोर्महती शक्तिरिति । विष्णुपुराण एव वर्जितमस्ति यत् विष्णोर्माया

---

वामनपुराणम् ३०-२४, २५, २६, २६ ।
गरुडपुराणम्, ८६-३४, ४६-६ ।
ब्रह्माण्डपुराणम् पूर्वभाग अनुपङ्गपादः १६-१०५ ।
पद्मपुराणम्, उत्तरखण्ड २४३-४१, २४३-४४ ।
तन्त्रालोक १-२१८, ४-३३ ४-३८, ४-१८, ४-२५४, ८-३२६, ३२२ ।
लक्ष्मीतन्त्रम् ६-३, ७-१६, ७-२६, ८-३२, ८-२७, ६-६, १५-२७, १५-२८, १५-३०, १६-१४, २०-२६, २०-३४, २०-३५, ३४-१७, ३५-१०, ३५-२६, ३५-५-१, ३८-३८, ५२-१२, ५५-७६, ५५-८०, ५५-८३, ५५-८४, ६-३, ३५-१० ।
नारदानिलकतन्त्रम् २-४३, २-७३, २-७७ ।
महानिर्वाणतन्त्रम् ४-३४, ५-१८७, ५-८३, ५-११६, ६-३५, ६-१०३ ।
प्रत्यभिज्ञाहृदयम् १, ३, ५, ७, १७ ।
ललितासहस्रनाम् १६० ।
कुलचूडामणितन्त्रम् ७ ७०, १-१८ ।
शिवसंहिता १-६६, १ ७२ ।
लङ्कावतारसूत्रम् १० ८८, १०-५६१, १०-४-४३, ४६८, ५८२, १०-६५, १०-४४३ ।
योगवाशिष्ठ ५-४८, ४४, ६-१०८-१, ५-४६-२२ ।
माण्डूक्यकारिका १-७, १६, १७, २ १२, १६, ३१, ३-१०, १६, २४, २७, २८, २६, ४-४४, ५८, ५६, ६१, ६६, २-१२, १६, ३ १० ।
ब्रह्मसूत्रशाङ्करभाष्यम्—२-१-१४, १-१-१७, १-३-१६, २-१-६, २-१-२१, २-१-२८ इत्यादय ।

---

१ विष्णुपुराणम् १-६ १०६, ५-३३-६, ५-३० १४, ३-१८-८, १-७-३३, ३-१७-४२, ३-१८-३१, ५-२०-१०४ ।

२. मायया मोहयित्वा तान् विष्णु स्त्रीरूपसंस्थित ।
दानवेभ्यस्तदादाय देवेभ्य प्रददौ प्रभु ॥ विष्णुपुराणम्

मोहमुत्पादयतीति[1]।

श्रीमद्भागवते च मायाया लक्षणं कृतमस्ति यत्[2]—

एवमात्मनि यस्य प्रतीतिर्नास्ति सा मायेति। सा च माया आत्मविषयिणीति भागवत एव दशमस्कन्धे[3] वर्णितमस्ति यत्—भगवतो मायया मोहिताः सन्तो नराः स्त्रीपुत्राद्यवासक्ताः अपारदुःखसागरे निमज्जन्तीति। एतेनेदं सिद्धं भवति यद्भगवतः शक्तिरेव मायेति।

ब्रह्मपुराणे मायाशब्दस्य प्रयोगो भगवतो मायामेव विहितोऽस्ति। कण्डुना मुनिना भगवता प्रत्युक्तम् यत् भो भगवन्! भवतो मायया मोहितोऽहं चिरकालपर्यन्तं भ्रान्तो विषयासक्तःस ञ्जातः भवतो मायायाः पारं कर्तुं न समर्थइति। एतेनावगम्यते-यद्-भगवतः शक्तिरेव मायेति।

वाराहपुराणे[4] तु[5] वर्णितं यत्—कपिलस्य जैगीषव्यस्य च मायायाः प्रभावेणानेकरूपधारणाशक्तिः संजातेति। ततश्च ज्ञायते—आश्चर्यात्मिकाया शक्तौ मायाशब्दस्य प्रयोग इति। एवमन्येष्वपि पुराणेषु मायाया[6] बहवो भेदाः प्रदर्शिताः। वेदान्ते पंचकोशा वर्णिताः सन्ति। ते च—अन्नमयकोशः प्राणमयकोशः मनोमयकोशः विज्ञानमयकोशः, आनन्दमयकोशश्चेति। यथा कृपाणस्याऽऽच्छादकत्वात् कोशव्यवहारः एवमेव आत्मन आच्छादकत्वादन्नमयादयः कोशपदेन व्यवह्रियन्ते। तत्रान्नरसमयः स्थूलदेहोऽन्नमयकोशः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यैर्ज्ञानेन्द्रियैः सहिता बुद्धिर्विज्ञानमयकोशो भवति। अयमेव विज्ञानकोशः कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभिमानी इहलोक परलोकगामी व्यावहारिको जीवो भवति। पूर्वोक्तैर्ज्ञानेन्द्रियैः सहितं मनो मनोमयकोशो भवति। वाक्-पाणि-पाद-पायूपस्थैः सहितं प्राणापानव्यानसमानोदानेतिवायुपंचकं प्राणमयः कोश इत्युच्यते। चिदाभाससहितमज्ञानमानन्दमयः कोश इत्युच्यते। अज्ञानमेव कारणशरीरं भवति। तत्राभिमानी जीवः प्राज्ञ इत्युच्यते। प्राणमयकोशमनोमयकोशविज्ञानमयकोशेति त्रितय सूक्ष्मशरीरं भवति, सूक्ष्मशरीराभिमानी जीवस्तैजस इत्युच्यते। अन्नमयः कोशः स्थूलशरीरम्। स्थूलशरीराभिमानी जीवो विश्वइत्युच्यते। एतेषु कोशेषु मध्ये विज्ञानमयकोशः कर्तृरूपो ज्ञानशक्तिमान्। मनोमयकोशः इच्छाशक्तिमान् करणरूपः। प्राणमयकोशः क्रियाशक्तिमान् कार्यरूपः।

---

१. विष्णुपुराणम् ३-१७-४१

२. ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथातमः। श्रीमद्भगवतम् २-९-३३

३. श्रीमद्भागवतपुराणम् १०-६३-४०

४. ब्रह्मपुराणम् १७८-१८१

५. वराहपुराणम् ४-२६

६. अग्निपुराणम् १३७-१५

चतुर्थः पादः

## अविद्याया (अज्ञानस्य) तामसप्रत्ययरूपत्वम्

इयं चाविद्या तामसप्रत्ययरूपा वर्तते । विपरीतप्रत्ययजनकत्वात्, भ्रमान्धकार-हेतुत्वाच्च । इयमेवाऽविद्या स्वीयावरणशक्तिद्वारा वस्तुभूतस्य ब्रह्मणः स्वरूपमावृणोति । अर्थाद् आवरणशक्तिसमन्वितेयं माया ब्रह्मणो वास्तविकं निराकारं, निष्कलं, निर्विशेषं, निःसङ्गञ्च यत् स्वरूपं तदावृणोति ।

विक्षेपशक्तिसाहित्यावच्छिन्ना चेयं माया पुनस्तस्य ब्रह्मणो वास्तविकं साकारं, सविकारं, सकलं सविशेषं, सम्बन्धयुतंच स्वरूपं दर्शयति अनुभावयति च लोकानाम् । एवं नित्यं, शुद्धं, बुद्धं, मुक्तं च ब्रह्मणो वास्तविकं स्वरूपमावृणोति आवरणशक्ति-समन्विता चेयं माया ।

विक्षेपशक्तितादात्म्यमापन्ना चेय माया तमेव नित्यं, शुद्धं, बुद्धं, मुक्तं, ब्रह्म-स्वरूपमात्मानमनित्यम्, अशुद्धम्, अबुद्धम्, बद्धं च कृत्वा दर्शयति, अनुभावयति च लोकानाम् ।

अर्थाद् आवरणशक्तिस्तदीय वास्तविक स्वरूपमावृणोति विक्षेपशक्तिश्च तत्र रूपान्तरम् अर्थात् अवास्तविकं भेदसामानाधिकरण्यावच्छिन्न द्वैतं समुद्भाव्य दर्शयति । तदेव भेदसमानाधिकरण्यावच्छिन्न द्वैतं जगत् । अर्थात् इयं विक्षेपशक्तिराहोस्वित् विक्षेप-शक्तिसमन्वितेयं मायाशक्तिरावरणशक्त्याऽऽवृतमद्वैतत्व प्रपचात्मकजगद्रूपेण, अर्थाद् भेदसमानाधिकरणद्वैतरूपेण दर्शयति ।

अविद्याया आहोस्वित् मायाया इयमेवाऽऽवरणशक्तिः स्वप्रकाशस्य चिदात्मनो ब्रह्मणः स्वरूपावबोधे बाधकीभूता भवतीति तत्र रूपत्रयमिदं धत्ते सहकारिकारणत्वेन, प्रयोजकत्वेन अर्थात् कारणतावच्छेदकत्वेन वा । तच्च रूपत्रयम्—

(१) अग्रहणम्, आवरणं वा,

(२) मिथ्याग्रहणम् विपरीतग्रहणम् वा,

(३) विक्षेपः संशयो वा,

परन्तूपर्युक्तं रूपत्रयं, तदवच्छिन्ना वा विशुद्धसत्वगुणप्रधानभूतेयं माया विशुद्धसत्वप्रधानोपाध्यवच्छिन्नस्य चैतन्यस्वरूपस्य तस्य ब्रह्मणः स्वरूपं नहि लेशतोऽपि विकृतं[1] विधातुं शक्नोति श्रुतयः स्मृतयश्च सर्वा एव समुद्घिरन्ति । उक्तं च—

१. गीताभाष्यमत्र द्रष्टव्यम् अ० १३, श्लो० २

अविद्यायाः कृते वस्तुतत्वभूतस्य तस्य ब्रह्मणोऽविकृतत्वसम्पादनं विकृतत्व-सम्पादनं वाऽस्ति तादृश एवाऽसंभवः, यादृशश्चाऽसंभवोऽस्ति मृगमरीचिकायै मरुभूमेः पङ्कत्वाऽऽपादनम् ।

द्रष्टृजीवरूपेण दृश्यभूतजगद्रूपेण च भासमानस्यास्य विश्वरूपस्य सर्वस्यापि चराचरात्मकस्य प्रपंचस्य महायानसिद्धान्ताऽवलम्बनकर्तृ-आचार्यवदेव श्रीशङ्कराचार्य-पादा एवं श्रीगौड़पादाचार्याश्चाप्यसत्वम् अर्थात् मिथ्यात्वं वदन्ति विवदन्ते चात्र बहव इति ।

अत एव शङ्कराचार्यग्रन्थेषु सर्वत्रैव खलु विश्वप्रपंचस्य निर्देशार्थम् अर्थात् जगतो वास्तविकं स्वरूपं बोधयितुं मृगमरीचिका, रज्जुसर्प, मायानिर्मितहस्ती, स्वप्न, जल-बुदबुद, आकाशतलमलिनता, कदलीगर्भ, द्विचन्द्रदर्शन, गन्धर्वनगर, तैमिरिकदृष्टि-सृष्टमशकमक्षिकादि, माया, फेन, अलातचक्र, शुक्तिरजत, केशोड्डुक, इन्द्रजालेत्यादीन्यु-दाहरणानि उदाहरणभूता वा शब्दाः समुपलभ्यन्ते, यतो महायानिन आचार्यास्तथा श्री गौड़पादाचार्यास्चेमान्युदाहरणानि प्रचुरतया[1] प्रयुञ्जते ।

तथापि तेषु तेषु ग्रन्थेषूदाहरणरूपेण प्रयुक्तानां प्रागुक्तानामेतेषां शब्दानां यत्र कुत्रापि प्रयोगो दृश्यते तत्र सर्वत्रैव तादृशशब्दात्मकः प्रयोगः सर्वथा संस्कृतभाषामय एव, अर्थात् संस्कृतभाषाया एव तद् दान(देन) मस्ति, न तु केवल बौद्धदर्शनस्यैव तत्राऽ-धिकारोऽस्ति, अर्थात् बौद्धदर्शनस्यैव तद् दान (देन) मस्तीत्यत्र नास्ति कश्चन नियम इति विज्ञेयम् ।

परन्त्वेतेषां शब्दानां प्रयोगविधानेनेदमवश्यं निश्चीयते यद् बौद्धदर्शनप्रभावा-न्वितोऽयं जनः श्रीशङ्कराचार्योऽवश्यमेवाऽस्त्ययं प्रतिभातीति मे सुदृढो विश्वासः ।

एवं श्री शङ्कराचार्यकृतिष्वेवंभूतान्यपि स्थलानि मिलन्ति येषां खलु महायान-ग्रन्थेष्वपि यदि समावेशः स्यात्तदा नास्ति कोऽपि विरोधः नापि च काप्यापत्तिरनुपपत्ति र्वा । उदाहरणार्थं यथा—

आवागमनचक्र जन्मदातृन्, अव्यक्तादिस्थावरान्तान्, व्याकृताऽव्याकृतरूप-

१. क्षुत्पिपासासान्ध्यबाधिर्यकामक्रोधादयोऽखिलाः
लिंगदेहगता ह्येते ह्यलिंगस्य न विद्यते
जडत्वप्रियमोदत्वधर्माः कारणदेहगाः
न सन्ति मम नित्यस्य निर्विकारा । —आत्मप्रबोधोपः

२. कठभाष्ये द्रष्टव्योऽयं विषयः १।३।१३ एवं २।२।११ एवं वृहदारण्यकेऽपि ४।४।६, प्रश्नभाष्येऽपि ६।४

स्वरूपात्, बीजाङ्कुरवत् परस्परं जीवानुबन्धबद्धान् अर्थाद् बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्तभूतान्, नानाविधाऽनर्थजड़भूतान्, कदलीगर्भवत् सर्वथाऽसारभूतान्, माया, मरीचिका, गन्धर्वनगराकारान्, स्वप्न, जलबुद्बुद्, फेनसमानत्वेन स्वास्तित्वविहीनान् प्रतिक्षणं ध्वंसशीलान्, स्वाऽव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगिनश्च, सर्वथाऽविद्याजन्यान्, रागद्वेषकामक्रोधादि दुष्टकर्मयुक्तान्, पापपुण्ययुक्तांश्च, क्वचिद् द्रष्टृरूपेण; क्वचिद् विषयिरूपेण, क्वचिद्दृश्यविषयरूपेण च प्रतीयमानाम् सर्वानपि व्यवहारान् जनयतीत्यत्र नास्ति लेशतोऽपि विचिकित्सावसरः ।

---

पञ्चमोऽध्यायः

# रामानुजदर्शने माया

**मायावादप्रक्रियया समुद्भूतानां दर्शनपद्धतीनां आविष्कारविचार, तत्र च मायादेश-कालविचारश्च—**

अद्यत्वे खलु अविद्यापरपर्यायभूतयाऽनाद्यनिर्वचनीयया चिरकालनित्यनिरन्तर-सांसारिकविषयजालप्रत्ययानुवृत्या जन्मजन्मान्तरार्जितपुण्यपापपरिपाकवशात् तदभ्यासा-तिशयपटुत्ववशाच्च सांसारिकविषयाकारवृत्तिसम्पादिकया मायया सर्वं सम्पाद्यते, दर्शनपद्धतयश्च प्रचाल्यन्ते, दर्शनानि चाऽऽविष्क्रियन्ते इति ।

तत्र च विश्वदर्शनस्य मूलाधारभूतं भवति वैदिकं साहित्यम् । वैदिकसाहित्येऽपि उपनिषत्साहित्यदर्शनञ्चास्ति जगतः प्राणभूतम् ।

वेदान्तो नाम उपनिषत्प्रमाणम् इति प्राचीनाचार्यचरणोक्तिमनुसृत्य माया-वादप्रक्रियया विशेषतो वेदान्त एव सम्बद्धतया समुपतिष्ठते, इति तदर्थं शङ्कराचार्य, रामानुजाचार्य, माध्वाचार्य, निम्बार्काचार्य, वल्लभाचार्याणां वेदान्तविदुषां वेदान्त-पद्धतीनां, तत्रत्यमायास्वरूपनिरूपणं च नितान्तमावश्यकम् ।

किन्तु निःसन्दिग्धमिदमङ्गीकार्यं यद् रामानुजाचार्यस्य विशिष्टाद्वैतवादः, माध्वाचार्यस्य द्वैतवाद, निम्बार्काचार्यस्य द्वैताद्वैतवाद, वल्लभाचार्यस्य च शुद्धाद्वैत-वाद, शङ्कराचार्यस्य चाऽद्वैतवादो मायावादसिद्धान्तस्य प्रतिक्रियायाः सन्ति परिणाम भूताः ।

शङ्कराचार्यस्य मायावादप्रक्रियया जायमाना सुदर्शनपद्धतिषु रामानुज, निम्बार्क, माध्व, वल्लभप्रभृतीनां वेदान्तविदुषां दर्शनपद्धतयो नितान्तमावश्यकत्वेन प्रमुखाः सन्तीतिऽसार्वजनीनोऽयं विषयः । अत्र तेषां सर्वेषामेव पृथक् पृथक् विवेचनं वयं स्वयं करिष्यामः ।

**रामानुजदर्शने मायास्वरूपम् :**

इदन्तु प्रागेवोक्तमस्माभिर्यद् रामानुजदर्शनं शंकराचार्यस्य प्रतिक्रियाजन्य-मित्यस्ति एका दार्शनिकविचारधारा ।

रामानुजाचार्यो हि श्रीशङ्कराचार्यस्य मायासम्बन्धिविचारधारामनङ्गीकृत्य चिदचिद्विशिष्टं सगुणं ब्रह्म स्वीकृतवान् ।

श्री शङ्कराचार्यविपरीतोऽयं मायिकस्य जगतो मिथ्यात्वममन्यमानो रामानुजाचार्यः सत्यत्वमेव तस्य ब्रूते। रामानुजदर्शने मायावी ईश्वरो निर्गुणं च ब्रह्म तन्नास्ति पृथक् तत्त्वद्वयम्, अपि तु सगुणब्रह्मैवास्ति एकं मुख्यतत्त्वम्।

शङ्कराचार्यो माया "मिथ्याभूता सनातनी" त्युक्त्वा मायायाः सर्वथा मिथ्यात्वमेव ब्रूते। परन्तु रामानुजाचार्यमते मायाऽस्ति एका परमात्मनो विचित्रा शक्तिः।

अयच रामानुजो मायाशब्दस्य[1] आहोस्वित् मायाया आश्चर्यवाचित्वं ब्रूते। यथा स्वप्ने रथ, गज, तुरंगादिपदार्थानामसत्त्वेऽपि अर्थात् सत्ताया अभावेऽपि रथादीनामा॰ पचमंजसिका सृष्टि वय पश्यामः। तथैव परमात्मनोप्यस्ति सृष्टिरियमाश्चर्यरूपेति विभाव्यताम्। अतो विभोः परमेश्वरस्य परमात्मनः सृष्टिकर्त्रीयं शक्तिभूता माया सर्वथाऽविमर्श्यैवेति[2] निपुणं निरीक्ष्यताम्।

इतोऽतिरिक्तमिदमप्यस्ति यदाचार्यपादः श्री रामानुजाचार्यः क्वचित् क्वचित् मायाशब्दस्य "कूटयुक्ति"[3] रूपमर्थं कृतवान्।

एतेनैव सुस्पष्टं सिद्ध्यति यत् श्रीशङ्कराचार्यः मिथ्यात्वप्रतिपादिका मायाम्, एवमविद्याशक्तिमाश्रित्य अनुसृत्य वा स्वस्य मायावादसिद्धान्तस्य स्थापना कृतवान्, रामानुजाचार्यस्य मायासम्बन्धिन्यः सर्वा अपि अभिव्यक्तयस्ततो विभिन्ना एव सन्ति सर्वथा।

अपि च शाङ्करमायावादस्य प्रतिक्रियास्वरूपे श्री भाष्यकारः श्री रामानुजाचार्यो मायावादसम्बन्धे सप्तानामनुपपत्तीनां कल्पना विहितवान्, ताश्च यथावसर प्रदर्शयिष्यामो वयम्।

**ब्रह्मणो विवेचनम्—**

रामानुजाचार्येण शङ्कराचार्यवत् ब्रह्म, ईश्वरश्चेति भेदद्वयस्य पृथक् कल्पना नहि क्रियते। रामानुजाचार्याभिमतं ब्रह्म नास्ति शङ्कराभिमतं केवलाऽद्वैतम् अपितु चिदचिद्भ्यां विशिष्टो भूत्वा विशिष्टाद्वैतमेव तत्। विशिष्टाऽद्वैतवादिनो रामानुजा॰ चार्यस्यैव सगुणं ब्रह्म सकलस्यापि चराचरात्मकस्य द्वैतप्रपञ्चरूपस्यास्ति कारणम्।

इदं च श्रीरामानुजाचार्याभिमतं ब्रह्म सर्वं सर्वमूर्तसंयोगित्वेन सर्वत्र व्यापकं सर्वविषयकज्ञानाश्रयत्वेन सर्वज्ञं सर्वशक्तिमत् एवम् आनन्दघनं चास्तीति।

शाङ्करमतानुसारं ब्रह्म केवलमस्ति ज्ञानस्वरूपम्, परन्तु रामानुजमतानुसारं ज्ञानं ब्रह्मणोऽस्ति प्रमुखविशेषणम्। ब्रह्मणः सर्वज्ञत्वे सति सर्वव्यापित्वे च सत्यपि नास्ति

१. मायाशब्दो ह्याश्चर्यवाची। श्रीभाष्यम् ३/२/३
२. पश्यन्तु तत्रैव श्रीभाष्यम् ३।२।३
३. गीताया रामानुजभाष्ये अ० ७, श्लो० १४

तस्य पापकर्मभिः सह संसर्गः तैः सह तस्यास्ति स्वाभाविको विरोधः। अत एव तद् ब्रह्म उभयलक्षणं कथितम्। कदाचित् कुतश्चिद् विशिष्टम्, एवं कदाचित् क्वचिच्चाऽविशिष्टम् (निर्विशिष्टम्) इत्यर्थः।

इत्थं च तद् ब्रह्म सकलदोषैः सर्वथा विशिष्टं कल्याणगुणाकारविशिष्टंच तच्च रामानुजीयं ब्रह्म सर्वदा सर्वथास्ति अपहतपाप्मा, विजरः विमृत्युः विशोकी, अविजिघत्सः तृष्णारहितः सत्यकामः, सत्यसंकल्पश्चेति। तथा चोक्तम्—

"अपहतपाप्मा विजरो विमृत्युर्विशोकीविजिघत्सोऽपिपासस्सत्यकामस्सत्य संकल्पः[1]।"

रामानुजाचार्यमतानुसारं चेतनो जीवः, अचेतनश्चाऽयं संसारः एतद्द्वयमेवास्ति ब्रह्मणः शरीरम्।

शरीरस्य तथात्मनश्च सम्बन्धानुरूपमेव ब्रह्म, एवं चिदचितोरपि शरीरशरीरीभाव एव विज्ञेयः।

तत्रापि ब्रह्म शरीरी, तथा चिदचित्स्वरूपो जीवः तथा जगद् ब्रह्मणः शरीरम्। यथाऽऽत्मा शरीराश्रितो भूत्वा शरीरस्योपरि नियमनं करोति, तच्च कार्ये प्रवर्तयति। तथैव ब्रह्मापि चिदचितोराश्रितमेवावतिष्ठते तच्च कार्ये प्रवर्तयति[2]।

अथ च ब्रह्म स्वीयजीवशरीराभ्यां सहैव प्रकृतौ प्रवेशं विधत्ते, तथा नामरूपात्मकस्य प्रपंचस्य च निर्माणं करोति। एवञ्चैवमेव ब्रह्म स्रष्टापीति भावः। प्रलयकाले यदा जगज्जीवौ सूक्ष्मरूपतां गतौ भवतस्तदा सूक्ष्म चिदचिद् विशिष्टं ब्रह्म 'कारणावस्थं' कथ्यते। सृष्टिकाले च स्थूलरूपधारणाच्च स्थूल चिदचिद्विशिष्ट ब्रह्म कार्यावस्थं' निगद्यते[3]।

अपि च ब्रह्म निर्विशिष्टं नहि कस्यामप्यवस्थायां भवति। परन्तु हेयगुणैः सर्वथा शून्यत्वादेव ब्रह्म निर्गुणं व्याहर्तुं व्यवहर्तुंच शक्यते इति तेषां हार्दिकोऽभिप्रायः।

श्रीरामानुजाचार्यस्य सगुणनिर्गुणब्रह्मकल्पना श्रीशङ्कराचार्यस्याद्वैतकल्पनातः सर्वथा भिन्नैव वर्तते। रामानुजाचार्येण यस्य सगुणब्रह्मणः प्रस्थापना कृता तत् सगुणं ब्रह्म श्रीशङ्कराचार्यस्य मायावी ईश्वरोऽस्तीति भावः।

---

१. श्रीभाष्यम् ३/२/११
२. तत्रैव २/१/६
३. यतिपतिमतदीपिका ६/ पृ० ३६

ईश्वर.—

विशिष्टाद्वैतमतानुसारम् ईश्वरस्यान्तर्यामित्वाद् ईश्वर समस्ताया सृष्टेर्नियन्ता शासकश्च वर्तते ।

यथा भौतिकशरीरस्याऽऽत्मा जीवस्तथैव जीवस्याऽऽत्मा ईश्वरः। ईश्वरश्च भोक्तरि जीवे भोग्ये च जगति उभयत्रैवान्तर्यामित्वेन रूपेण अवतिष्ठते इति । तथा चोक्तम्—

"परस्येश्वरस्य भोक्तृभोग्ययोरुभयोरन्तर्यामित्वरूपेणावस्थानम्"[1]

यथा कारागाराधिकारी (जेलर महोदय) बन्दी गृहस्य निरीक्षणकाले बन्दीगृहस्याभ्यन्तर गत्वापि बन्धन नानुभवति, प्रत्युत् शासको भूत्वा स्वच्छन्द विहरति । तथैव रामानुजीय ईश्वरोऽपि अन्तर्यामी सन् सकलजीवै साधंमन्तर्यामित्वेन सन्तिष्ठमानो नियामकत्व शासकत्व चानुभवति । जगन्निरूपित जीवनिरूपितञ्च । परन्तु स चेश्वरो निष्पापत्वेन अर्थात् स्वय पापात्यन्ताभावसत्वप्रयुक्तत्वेन जीवस्यऽनाद्यविद्यया कर्मरूपया कदापि लिप्तो न भवति ।

स एव चेश्वरो लोकनिर्माणकर्ता जगन्नियन्ता जीवाना कृते कर्मजन्यऽफलदाता स्तीति ते नैयायिकाभिमत स्वीकुर्वन्ति । स च स्वस्वकर्मानुसार प्राणिनो दण्डयति ।

यद्यपि सोऽस्त्यत्यन्तमेव दयालुस्तथापि पापात्मभूतेभ्य प्राणिभ्योऽवश्यमेव दण्ड प्रयच्छति, नहि तत्र कदाचित् कुतश्चित् सकोचं विद्यते एतदेवास्ति तेषा नये शासकाना शासकत्वम् ।

अवतारवादस्य सिद्धान्तोऽपि ईश्वरनिष्ठस्य लोकरक्षकत्वस्य तन्निरूपितजगन्नियन्त्रितत्वस्य तथा ईश्वरस्य पूर्णत्वपादृष्टेश्चाप्यमस्ति ज्वलन्तोदाहरणभूत ।

एवम् अनन्तस्यानन्तगुणगणयुतस्य तथाऽनन्तशक्तिशालिनस्तस्य दामोदरस्य दुष्टसदसि दुष्टदुःशासनदुःशासिताया द्रौपद्या कृतेऽनेकानेकाऽलौकिकवस्त्ररूपेण प्रादुर्भूतत्व परिस्मिहृति । कण्ठश्च गद्‌गदया वाण्याऽवरुद्ध्यते, नयनान्यश्रुभि परिपूर्यन्ते भक्तकामकल्पद्रुमस्य तस्य माधवस्य कारुण्य-दयार्द्रभाव च स्मार स्मार महान् हर्षप्रकर्षोऽनुभूयतेऽस्माभि । एतद्रूपावच्छिन्न एतद्‌गुणगणयुतश्च खलु परमात्मा नारायण, वासुदेव, परब्रह्मादिशब्दैर्व्यवह्रियते व्याह्रियते च ।

रामानुजीय ईश्वरः स्वीयव्यूहरूपेण जगत. सृष्ट्यादिकार्यकरणार्थं वासुदेव, सकर्षण, प्रद्युम्न, अनिरुद्ध, एतानि चत्वारि रूपाणि धारयन् सन्तिष्ठते ।

तत्र वासुदेव षड्‌गुणयुक्त सर्वदा कालावच्छेदेन स्वस्थितिमापन्नो भवति सकर्षणो

---

१. सर्वद० स० ४-३१

२. "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन"—गीता २/४७

ज्ञान— बलयुक्तः प्रद्युम्न ऐश्वर्यवीर्ययुक्तः, अनिरुद्धः शक्तितेजोगुणैर्युक्तः सन्नवतिष्ठते इति रामानुजाचार्या वदन्ति। विभवरूपमेवेश्वरस्यास्ति अवताररूपम्[1]।

धर्मस्य हानिरधर्मस्य वृद्धिर्यदा जायते तदा लोकरक्षक ईश्वरः सदावतरतीति तेषां सिद्धान्तः। भगवतो मत्स्यप्रभृतयोऽप्यवतारा: सर्वे एव खलु लोकरक्षार्थमेव संवृत्ता इति सर्वेऽपि शास्त्रवेत्तारो विदन्ति ।

स चेश्वरः स्वर्गनरकाद्यनुभवदशायामपि सुहृद्रूपेण जीवात्मनो हृदयप्रदेशे सन्तिष्ठते, अत एव स अन्तर्यामीति निगद्यते । तावतापीश्वरो जीवस्य दोषैः सदाऽसंस्पृष्ट एवाऽवतिष्ठते ।

प्रागुक्तोऽयमीश्वरस्य स्वरूपो देशकालबाधात: सर्वथा विनिर्मुक्त एवाऽनुभूयते शास्त्रेषु विशेषतो दर्शनेषु च। अत एव स सर्वसहिष्णुः परिपूर्णश्चास्तीति।

मीमांसादृष्ट्या विचार्यमाणे खल्वीश्वरः शेषीति व्याह्रियते जीवश्च शेष इति। शेषभूतो जीवोऽस्तीश्वरस्योपकारक इति। यस्मात् कारणाज्जीवस्य सर्वा अपि क्रियास्तस्यैवेश्वरस्याऽऽदेशानुसारं भवन्ति। सर्वाण्यप्याऽऽस्तिकशास्त्राणि दर्शनानि च सन्ति तस्यैव परब्रह्मणो नारायणस्य व॰ऽऽदेशभूतानि ।

अत एवाऽनयोर्द्वयोरेव खलु सम्बन्धः स्वामिसेवकभावरूप इवाऽङ्गीकृतो वर्तते ।

विशिष्टाद्वैतमतानुसारमीश्वरस्य सम्बन्धे सम्पादिता. शरीरशरीरिभाव, नियम्यनियामकभाव, आधाराऽऽधेयभाव, शेषशेषिभावभाविता: सर्वा अपि विचारणा मायावादस्य प्रतिक्रियानुरूपमेव समुत्पन्ना भवन्ति ।

अद्वैतमतानुसारंच जीवस्य सत्ताऽविद्योपाधिजन्या एवेति ब्रह्मजीवयोर्विषये प्रागुक्ताः खलु सम्बन्धा नहि निर्णेतुं शक्यन्ते ।

यदा जीवः स्वस्य ईश्वरस्य च सम्बन्धं सम्यग् विजानाति तदा जीवः यत्किमपि कर्म करोति तत् सर्वं कर्म भगवदर्पितबुद्ध्यैव करोति, तदा जीवः स्वीयामहन्ता भगवदर्पिता विधत्ते ।

**जीवः**

शाङ्करदर्शने जीवोऽपि ब्रह्मैवास्तीति जीवस्यास्तित्व ब्रह्माऽस्तित्वतो नाऽतिरिक्तम्। उक्तं च—

"जीवो ब्रह्मैव नापरः"

"जीव एव सदा ब्रह्म"[2]

"स जीवः केवलः शिव."[3]

---

१. एवं प्रकार ईश्वरः परव्यूहविभवाऽन्तर्याम्यर्चावताररूपेण पंचप्रकारः
—यतिपतिमत-दीपिका नवमअवतार पृ० ४०

२. तेजबिन्दु प० ६/१८

३. मैत्रेयी प० २/१

अपि च—

"समाधिः समतावस्था जीवात्मपरमात्मनो"[1]

"जीवात्मपरमात्मैक्यात् त्रिपुटीरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका समाधि[2]।"

इत्यादिश्रुतिभिर्जीवब्रह्मणोरेकता प्रतिपादिता भवतीति-ब्रह्मसत्तातो जीवसत्ता नाऽतिरिक्ता।

परन्तु विशिष्टाऽद्वैतवाऽदिनो रामानुजाचार्यस्य मते शङ्कराचार्यप्रतिपादिताया मायाया अस्वीकाररूपकारणवशादेव जीवस्य भिन्नरूपेण कल्पना क्रियते।

रामानुजाचार्यमतानुसार जीवोऽस्ति ब्रह्मणोऽश, स्वयं ब्रह्म अशी। परन्तु श्री शङ्कराचार्यं खल्वित्थं ब्रूते "जीव ईश्वरस्यांशो भवितुमर्हति, यथाऽग्नेर्विस्फुलिङ्ग। अश इवाश, नहि निरवयवस्य ब्रह्मणो मुख्योऽश सभवति"।[3]

श्रीभाष्यकाररामानुजमते जीवब्रह्मणोरंशांशिभावस्य सत्वेऽपि विशेषणविशेष्यरूप-कारणवशादेव तयो स्वभाववैलक्षण्य स्वयमेवाऽनुभूत भवति।[4]

यत्राऽद्वैतवादिन श्री शङ्कराचार्यपादा जीवस्य मायिकसत्ता स्वीकृत्य जीवब्रह्म-णोरभेद दर्शयन्ति ते, तत्रैव श्रीरामानुजाचार्या अपि ब्रह्मणो विशेष्यता प्रतिपाद्य अर्थात् ब्रह्मनिष्ठविशेष्यतानिरूपितप्रकारतावज्जगदित्यर्थं विधाय चिदचिद्रूपस्य जगत प्रकारताऽऽश्रयत्व निरुध्य ब्रह्मणो विशेष्यताश्रयत्व दर्शितम्। इत्थ च ब्रह्म विशेष्य चिद-चिद्रूपच जगत्तस्य विशेषणम्। अत एव चिदचिद्रूपजगतो विशेष्यीभूतस्य ब्रह्मणो-ऽविशेषणत्वेन विशेष्यीभूतस्य ब्रह्मणस्तादृशविशेषणविशिष्टत्वेन श्रीरामानुजाचार्यो विशिष्टाऽद्वैतसंज्ञा लभते।

विशिष्टाऽद्वैतवादाभिप्रायेणैव च रामानुजाचार्यः चिदचिद्वस्तुरूप जीव जगच्च विशेष्योभूतस्य ब्रह्मण शरीर वदति। प्रकारीभूत चिदचिदात्मक च शरीर ब्रह्मणो नास्ति भिन्नमिति ब्रह्मणोऽभिन्नता सम्पद्यते तादृशशरीरस्येत्येवास्ति विशिष्टाऽद्वैतवादिनो रामा-नुजाचार्यस्य प्रमुखता गत सिद्धान्त[5]।

प्रागुक्ताया अस्या विशेषणविशेष्यभावभूतायाः कल्पनाया आधारभूत मूलकार-णमस्ति केवल विशिष्टाऽद्वैतवादिनो रामानुजाचार्यस्य सत्कार्यवाद-सिद्धान्त परिणामवाद सिद्धान्तो वा। रामानुजाचार्यस्य सत्कार्यवादसिद्धान्तानुसार परिणामसिद्धान्तानुसार या जीवस्य एव जगत सत्ताश्च सन्ति ब्रह्मण परिणामभूता। यतः कार्यरूपस्य जीवस्य एव जगत सत्ता कारणरूपे ब्रह्मणि सन्ति सन्तिष्ठमाना[6]।

१ योगतत्वोपनि० १०७
२. शाण्डिल्योप० १/७२
३. ब्रह्मसूत्रशा० भा० २/३/४३
४. श्रीभाष्यम् २/३/४५
५. रामानुजदर्शन प्रकरणे "सर्वद० स० ४/३०
६. ब्र० सू० शा० भा०२/३-१८

श्रीशङ्कराचार्यमतानुसारं सकलोऽपि प्रपंचोऽस्ति ब्रह्मणो विवर्तभूतः मायायाः चास्ति परिणामभूतो वेति ।

रामानुजाचार्यमतानुसारं जीवो ज्ञाताऽणुश्च वर्तते । जीवस्याऽणुत्वसाधकानि सन्ति उत्क्रान्ति, गति, आगति स्वरूपाणि त्रीणि प्रमाणानि । उत्क्रान्ति "प्रमाणद्वाराजीवात्मानं चक्षुषा, मूर्च्ना, एवं शरीरस्याऽन्यान्यप्रदेशैर्निष्क्रमणं कुर्वाणं पश्यन्ति महावीरप्रभृतयः यतयः । "गति" रूपप्रमाणद्वारा जीवोऽस्माल्लोकात् चन्द्रलोकं प्रविशति । "आगति" प्रमाणानुसारंच जीवश्च चन्द्रलोकात् पुनः कर्मभूमिभूतं मर्त्यलोकं समागच्छति ।

शाङ्करदर्शनानुसारं जीवस्य स्वरूपं नास्ति ब्रह्मभिन्नम् अपि तु ब्रह्मैवास्ति जीवस्य स्वरूपम् । तथा चोक्तम्—

"जीव एव सदा ब्रह्म"[1]

"स जीवः केवलः शिवः"[2]

रामानुजाचार्यस्येदमस्ति तात्पर्यं यथा एकदेशवर्तिमणिप्रभृतिप्रकाशकानां प्रकाशोऽनेकदेशव्यापित्वेनाऽनुभूयते, तथैवाऽणुरपि जीवः स्वकीयज्ञानद्वारा सर्वमास्ति देशे व्याप्तभूतः[3] ।

अस्मिन् मते जीवे एव कर्तृत्व, सुख, दुःखादीना अभिमानोऽपि जायते सन्तिष्ठते च ।

**जगद्विचार :—**

श्रीशङ्कराचार्यो जगतो मिथ्यात्वं प्रतिपादितवान्, अत एव च अनिर्वचनीयत्वमभ्युपगतवान् । श्रीशङ्कराचार्यमते समस्तमपि प्रपंचजातं जगत् नामरूपात्मकं मिथ्याभूतम् ।

एतद्विपरीतमेव वक्तुं प्रभवस्य श्रीरामानुजाचार्यस्य विशिष्टाऽद्वैतवादानुसारं जगतो ब्रह्मणः शरीरत्वेन ब्रह्मशरीरभूतस्य जगतो मिथ्यात्वं वक्तुं सर्वथाऽशक्यत्वेनाऽनन्यगतिकत्वात्तस्य सत्यत्वमेव वाच्यम् ।

रामानुजाचार्यमते जगद्ब्रह्मणोः स एव सम्बन्धः योऽस्ति सम्बन्धः पुष्पगन्धयोः, एवं स्वर्णतद्गतपीतिम्नोः ।

अपि च जगद्विशेष्यीभूतं ब्रह्म जगदात्मकविशेषणतः कदापि कुतोऽपि पृथक् कर्तुं नहि पारयितुं शक्यते, अतः समस्तं नामरूपात्मकं चराचरात्मकं प्रपंचभूतं जगद् ब्रह्मण्येवास्ति अन्तर्भूतम् इति तेषां हार्दिकोऽभिप्रायः ।

प्रलयकाले कारणावस्थायां वर्तमाने ब्रह्मणि प्रकृतिरव्यक्तरूपेण सन्तिष्ठते । कारणावस्थां प्राप्तं सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्वेच्छयैव विचित्रशक्तियोगेन नामरूपात्मकस्य सर्वस्यापि जगतोऽनन्तानाच जीवाना सृष्टिं करोति ।

जीवः स्वीयजीवनस्य कारणीभूतयोः पापपुण्ययोराधारेणैव शरीरं प्राप्नोति धारयति वा । इत्थं च प्रलयः सृष्टिश्च ब्रह्मण एव कारणकार्यरूपे द्वेऽवस्थे स्वीक्रियेते । तत्र चावस्थाद्वये ब्रह्मैव कार्यावस्थकारणावस्थरूपेण च सन्तिष्ठमानं भवति ।

---

१. तेजोबिन्दूपनि० ६/३८
२. मैत्रेयोप० ३/१
३. श्रीभाष्यम् २/३/२६

**मुक्तिविचारः**

शाङ्करवेदान्तानुसारं खलु अविद्यानिवृत्तौ जायमानायां जीवस्य ब्रह्मणा सह य एकीभावः, तादृशैकीभावस्य प्राप्तिरेव खलु शाङ्करी मुक्तिः। ब्रह्मणा सहैकीभावं प्राप्तस्य जीवस्य पुनर्ब्रह्मणोऽतिरिक्ता तत्सत्ता नावशिष्यते।

परन्तु रामानुजाचार्यदर्शने जीवब्रह्मणोरैक्यमेव न संभवति। मुक्ते जीवेऽस्मिन्नये ब्रह्मसदृशाः सर्वज्ञत्व, सत्यसंकल्पत्वादयो गुणास्तु अवश्यमेवायान्ति परन्तु ये सन्ति ब्रह्मणः परमवैशिष्ट्यसाहचर्यावच्छिन्नाः सर्वव्यापकत्वजगत्कर्तृत्वादयो गुणास्ते मुक्ते जीवे नहि समायान्ति, जीवस्याऽणुत्वाद् ब्रह्मणः सर्वत्र व्यापकत्वाच्च, एवं ब्रह्मणो जगत्कर्तृत्वात् जीवस्य तदभाववत्वाच्च।

श्रीभाष्यकारस्य श्रीरामानुजाचार्यस्येदमेवास्ति वक्तव्यं यन्मुक्तो जीवोऽनेकेषु शरीरेषु प्रवेश कर्तुमर्हति। एवमीश्वरेण सृष्टेषु लोकेषु पितृलोकप्रभृतिषु जायमानाया ईश्वरीयलीलाया आनन्दस्यानुभवमपि विधातुं प्रभवति।[1]

परन्तु मुक्ते जीवे चिदचिद्विशिष्टस्य ब्रह्मणो यानि सन्ति जगत्कर्तृत्वादीनि तटस्थलक्षणानि तानि सर्वाणि तत्र कथमपि नहि स्यातुं शक्नुवन्ति। यतो जागतिकेषु सृष्टि, स्थिति, लयात्मकव्यापारेषु मुक्तजीवस्य सर्वथाऽनधिकारत्वात्।[2]

मुक्तजीवस्य सकलमपि कल्पनाजालं शान्तिं समाप्तिं च गच्छति। शान्ते समाप्ते च कल्पनाजाले मुक्तजीवस्य कऽऽावश्यकता पुनरावृत्याऽनागमनस्याऽतः स पुनः सत्यात्मके जगति नहि समागच्छति। अत एव श्रीरामानुजाचार्यो जीवन्मुक्तिं नाङ्गीकृतवान्।

वैष्णवदर्शनानुसारं वैष्णवसम्प्रदायानुसारं सांसारिकसमस्तबन्धनशून्यात्मिका मुक्तिं जीवितदशायां नहि कोऽप्यनुभवति। अत एव रामानुजदर्शने 'मुक्ति' शब्दजन्यबोधविषयतावती मुक्तिर्विदेहमुक्तिरेव गृह्यते।

सा च मुक्तिर्ज्ञानं विना नोपलभ्यते। "ज्ञानादेव हि कैवल्यम्" इत्यादि श्रुतयो ज्ञानस्यैव कैवल्यकारणत्वं ब्रुवते। प्रकृते ज्ञानशब्दार्थो यथार्थज्ञानम्, ईश्वरस्य ध्रुवा स्मृतिः। इयमेव स्मृतिः उपासनाशब्देन वा कथ्यते रामानुजमते।

भगवत् प्राप्तौ भक्तिरेव मुख्यसाधनभूत उपायो वेदितव्यः। तादृशसाधनभूतोपायभूता भक्तिं भावयितुं वैदिककर्मणा सम्यगनुष्ठानमेव तत्साधक सहायकं भवितुमर्हति नान्या गतिस्तत्र।

---

१. श्रीभाष्यम् २/१/२४।
२. तत्रैव, ४/४/१७।

अतो यत्र श्रीशङ्कराचार्यस्य ज्ञानमार्गं उपादीयते उपादेयत्वेन वा प्रशस्यते। तत्रैव श्रीरामानुजाचार्यस्य ज्ञानकर्मसमुच्चयवादोऽपि समाद्रियते। अर्थात् कर्मसाहाय्येनोपलब्धा ज्ञानरूपा भक्तिर्जीवस्य निस्तारार्थमतीव श्रेष्ठ उपायः।

भक्त्या प्रसन्नतां गतो भगवान् जीवस्य समस्तान्यपि बन्धनानि, क्लेशांश्च विनाशयति। तदा तस्य ब्रह्मज्ञान जायते। भक्तेरपि वास्तविकं तात्पर्यं प्रपत्तिरो वर्तते। ईश्वरीयानुकम्पाप्रापक एकमात्रसाधनभूत उपायः प्रपत्तिरेवेति रामानुजो वदति।

शरणागतिरप्यस्ति—एका भक्तिः। अनन्तगुणगणयुतस्याऽनन्तशक्तिशालिनस्तस्य भगवतः शरणसमागमनमेव शरणागतिशब्दार्थो बोध्यः। तच्चापि शरणसमागमन भगवतो विशेषकृपात एव जायते। सा च विशेषकृपा भगवच्चरणारविन्दविषयकोदात्तभावनाभावितान्तःकरणस्य भक्तस्यैव हृदये जायते। अनयैव शरणागतिरूपया भक्त्या जीवो भगवतः परमात्मनः प्रियपात्रतां गच्छतीत्ययमेवास्ति भक्तिशास्त्रस्य निष्कर्षः।

मायया भूरादिचतुर्दशभुवनानामुत्पत्तिक्रमविवेचनं तथा तदुत्पत्तिनिरूपणं च—

ब्रह्मलोकमार्गभूते सूर्ये सूर्यमण्डलान्तश्छिद्ररूपे द्वारे च संयमात् यत्र तत्र शास्त्रेषु कथितप्रकारात् मायालक्षणलक्षितात् प्रत्यक्षीकृते सति, आहोस्वित् प्रत्यक्षमूलकेनाऽनुमानप्रमाणेनाऽमिते सति क्रमशः उपर्युपरि सन्तिष्ठमानाना भूर्भुवः स्वर्महर्जनस्तप सत्यमित्येतेषा लोकानाम् एवमधोऽधः स्थलभूतानाम् अतलं, वितलं, सुतलं, तलातलं, महातलं, रसातलं, पातालं चेत्येतन्नामकाना चतुर्दशभुवनाना समुत्पत्तिर्जायते। तदनन्तरं चैतेषामपि चक्षुर्जन्यज्ञानाऽपरपर्यायभूतः प्रत्यक्षात्मकः साक्षात्कारोऽपि जायते तदधिकारिणा योगिना यतीना यतचेतसाम् इति नाऽविदितमस्ति केषामपि विदुषाम्।

तत्रापि भूलोकमारभ्य सत्यलोकपर्यन्तानि यानि सन्ति उपर्युपरि सन्तिष्ठमानानि भुवनानि, एवमतललोकमारभ्य पाताललोकपर्यन्तानि सन्ति अधोऽधो वर्तमानानि भुवनानि तानि सर्वाण्येव जगत्कारणीभूताया मूलाऽविद्यापरपर्यायभूताया मायातो जायन्ते, इत्यत्र नास्ति लेशतोऽपि विवादः। यतः "कारणगुणाः कार्यगुणानारभन्ते" इति नियमात् त्रिगुणात्मिकेव मायैव सुखदुःखमोहात्मकं त्रैगुण्यावच्छिन्नं जगज्जनयितुं सर्वथा प्रभवतीत्यनुभूतोऽस्माकं सिद्धान्तः। तथाचोक्तम्—

"अज्ञानजन्यमिव सर्वं यत्किंचिज्जगतीतले।
मिथ्याभूतं च तच्चापि यतो ब्रह्मत्वमाप्नुयात्॥"[1]

---

१. ज्ञानयोगः पृ० ३२

ज्ञानादेव हि कैवल्य नान्यथा श्रुतिशासनम् ।
अज्ञानादेव हि बन्ध स्यादिति वेदान्तडिण्डिम ॥[1]

एतेषा चतुर्दशभुवनाना तथाविधलोकाना च तज्जन्यबन्धस्य च सर्वेषामेवाऽब्रह्मस्वकुक्षिनिक्षिप्तत्वात्—अविद्यापरपर्यायभूतमायाजन्यत्वेन मिथ्यात्वाच्च तन्निराकरण नितान्तमपेक्षित भवति, तच्चापि विद्ययैव जायते इत्यस्ति वेदान्तडिण्डिम । अतो विद्यापरपर्यायभूतज्ञानलक्षणलक्षितस्याऽद्वैतस्य ब्रह्मण एव परमार्थत सत्यत्वात्तद्ब्रह्म मायापि न स्प्रष्टु शक्नोतीति । तथा चोक्तम्—

अब्रह्मत्वमविद्योत्थ विद्यया तन्निवर्तते ।[2]

अपि च—

'ब्रह्मादिस्तम्बपर्यन्त मृषामात्रा उपाधय" ।[3]
"जगत्सर्वमिद माया वदत्यत्यन्तनिर्मला" ।[4]

अन्यच्च—

"मायामात्रमिद द्वैतमद्वैत परमार्थत" ।[5]
"नात्मान माया स्पृशति' ।[6]

अतस्मिस्तद्बुद्धिरथात् भ्रमात्मक ज्ञान सर्वथा ज्ञानजन्यमत तज्ज्ञान विमूढपुरुषाणा कृते एव जायते न तु ज्ञानशालिनाम् । भ्रमान्धकारपतिताना तमसाच्छन्नविमूढपुरुषाणामेव प्रागुक्ता भ्रमात्मिका बुद्धिर्भुजगे रज्जुधिषणेव स्फुरति । तथा चोक्तम्—

अतस्मिंस्तद्बुद्धि प्रभवति विमूढस्य तमसा—
विवेकाभावाद वै स्फुरति भुजगे रज्जुधिषणा ।
ततोऽनर्थव्रातो निपतति समादातुरधिक—
स्ततो योऽसद्ग्राह स हि भवति बन्ध शृणु सखे ॥[7]

---

१ ज्ञानयोग पृ० ३२
२ तत्रैव पृ० ५८
३. अध्यात्मोपनि० १८
४. सूतसहिता
५ माण्डूक्यका० १/१७
६ नृसिहपूर्वोत्तरोप० १/५/१
७. विवेकचूडामणि १४

ज्ञानमार्गस्वरूपम् —

इदमत्रावधेयम् अस्माकं प्राचीनाचार्यचरणाः खल्वस्माकं कृते मार्गद्वयं दर्शितवन्तः । प्रवृत्तिलक्षणो मार्ग एको निवृत्तिलक्षणो मार्गो द्वितीय इति ।

इदमेव मार्गद्वयं ज्ञानयोग,[1] कर्मयोगशब्देनापि व्यपदिश्यते, आहोस्वित् ज्ञानमार्ग-कर्ममार्गशब्दावल्यापि व्यपदेष्टुं शक्यते । तथा चोक्तम्—

द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।

प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभावितः ॥[2]

अर्थात् निर्विशेष निर्विकारं निराकारं च परब्रह्म परमात्मानमात्मत्वेन ये जानन्ति त एव ज्ञानवन्तो ब्रह्मज्ञानिनो यतयः सांख्यशब्देन प्रकृते कथ्यन्ते । तेषां ब्रह्मज्ञानिनां सांख्याना ज्ञानयोगेन अर्थात् ज्ञानमार्गेणैव निष्ठाकथनेन तेषामेव "सर्वमिदमहंच ब्रह्मैव" तिब्रह्माऽऽकारवृत्त्या निष्ठा अर्थात् निश्चलरूपा स्थितिः कथिता । तथा चोक्तम्—

"तमेवैकं विजानीथ आत्मानमन्या वाचो विमुंचथ" ।[3]

अर्थात्तमेव एकं परब्रह्म परमात्मानं विजानीथ, अन्यत् सर्वमेव वाग्जालं विमुंचथ । सर्वस्यापि वाग्जालस्य बाह्यविषयरूपत्वात् । अतः—

"ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्"[4]

अर्थात् आत्मानम् 'ओम्' इत्येवं रूपेण ध्यायथ, वः सर्वथा एवं सति स्वस्त्यस्तु, यतः परमाऽज्ञानतः परमाऽज्ञानस्वरूपसंसारतो वा पारं गन्तुमयमेवास्ति केवलमेको मार्गः ।

तेन चाऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दाऽनन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिताचित्तवृत्तेः समुदयो जायते । सा च तथाविधाऽखण्डाकाराकारिता चित्तवृत्तिः चित्प्रतिबिम्बेन संहिता सती, अर्थात् तत्र प्रतिबिम्बितचैतन्यविशिष्टा सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य ब्रह्मविषयकमज्ञानमेव बाधते ।

तथा च चैतन्यप्रतिबिम्बसंवलितया तादृशचित्तवृत्त्या चैतन्यगतमज्ञानं निवर्तते, यतस्तस्याश्चित्तवृत्तेश्चैतन्याऽऽवरकाऽज्ञाननिवृत्तिरेव परमं प्रयोजनम्, तादृशाज्ञाननिवृत्तिरेव च तस्याः साफल्यम् ।

---

१. "ज्ञानयोगः कर्मयोग इति योगो द्विधा मतः"

२. महाभारते शां० २४१/६।

३. गीतायाः मधुसूदनानन्दटीका श्लो० ३, अ० ३

४. तत्रैव,

तदा पटकारणीभूतो यस्तन्तुस्तादृशतन्तुदाहे सति यथा पटः स्वयमेव दाघो भवति, तथैव सकलस्य चराऽचरात्मकस्य जगतः कारणीभूते ज्ञाने बाधिते सति तादृशाऽज्ञानकार्यस्य सर्वस्यापि जगतः प्रपंचस्य वा बाधितत्वात्तदन्तर्भूताऽखण्डाकाराकारिताचित्तवृत्तेरपि बाधो जायते ।

इत्थं च जगत्कारणीभूताऽज्ञाननाशे तादृशाऽज्ञानकार्यभूतस्य सकलस्यापि प्रपंचस्य नाशाद्द्वैतं ब्रह्म सिद्ध्यतीत्ययमेवास्ति ज्ञानमार्गः, ज्ञानमार्गप्रकारो वा, ज्ञानयोगो वेति विचार्यताम् । तद् यथा—

"ज्ञानयोग, कर्मयोग इति योगो द्विधा मत." [१]

अत्र प्रकृते योगशब्दो मार्गरूपार्थकः, तथाच ज्ञानमार्गः कर्ममार्गश्चेत्येवं रूपेण मार्गो द्विविधः साधारणतयैव विज्ञेयम् ।

अस्मिन् विषये इदमपि कथनं नितान्तमावश्यकम्

विरक्त. प्रव्रजेद्धीमान् संरक्तस्तु गृहे वसेत् ।
सरागो नरकं याति प्रव्रजन् हि द्विजाधमः ॥

यदा मनसि सजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छेत् पतितः स्याद्विपर्यये ॥

प्रवृत्तिलक्षणं कर्म ज्ञानं सन्यासलक्षणम् ।
तस्माज्ज्ञान पुरस्कृत्य सन्यसेदिह बुद्धिमान् ॥

यदा तु विदितं तत्त्व परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत् ॥

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति योगो दृढो यस्य तदा भवति भैक्ष्यभुक् ॥

प्राणे गते यथा देहः सुखं दुःखं न विन्दति ।
तथा चेत् प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ॥

अनधीत्याऽखिलान् वेदानिष्ट्वैवाऽखिलान् सुरान् ।
अनुत्पाद्य सुतान् विप्रो न सन्यसितुमर्हति ॥

अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥ [२]

---

१. त्रिशिखब्राह्मणो प० १४
२. गीताया शांकर[illegible]

एतावता प्रबन्धेन खलु ब्रह्मविदो ज्ञानिनः संन्यासलक्षणं ज्ञानं समुपदिष्टं भवति। ये च सन्ति रागिणः कामकामिनस्तेषां कृते प्रवृत्तिलक्षणं कर्म कथितं भवति इत्ययमेवास्ति शास्त्राणां शास्त्रिणां च समुद्घोषः ।

"अपि च—"ज्ञात्वा नैष्कर्म्यमाचरेत्"[1]

संन्यासलक्षणलक्षितानां ज्ञानमार्गानुयायिनां कृतेऽयमप्यस्ति समुल्लेखनीयो विषयः—

"सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद् बुधः ।[2]

अन्यच्चापि तत्रैव—

"परं ब्रह्म परिज्ञाय प्रव्रजेद् ब्राह्मणोत्तमः ।
अन्यथा कर्म कुर्वीत न प्रमाद्येत कर्हिचित् ॥

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
विपरीतस्तु दोषः स्यादुभयोरेव निश्चयः ॥[3]

तथा चेदमेवास्ति ज्ञानमार्गस्वरूपं तत्प्रकारस्वरूपं चेति विशेषम्—

कर्ममार्गस्वरूपम्—

ईशावास्योपनिषदपि "ईशावास्यमिदम्"[4] इत्यादिमन्त्रेण यतीनां यतचेतसाम् योगिनां संन्यासिनां वा ज्ञाननिष्ठा प्रोक्ता। तत्रैवोपनिषदि च "कुर्वन्नेवेह[5] कर्माणि" इत्यादिद्वितीयमन्त्रेण ज्ञाननिष्ठायामशक्तानां गृहस्थाश्रमवासिनां मानवानां कृते कर्मनिष्ठा निरूपिताऽस्माकं वेदादिशास्त्रैस्तत्कोविदैः प्राचीनाचार्यचरणैश्च। यतस्ते गृहस्थाश्रमवासिनो गृहिणो नितान्तं नितरामहर्निशमनिशं स्वीयामभ्युन्नतिं समभ्युदयं च कामयमानाः तत्र खलु दृष्टिगोचरतां गताः समनुभूयन्ते। स चायमभ्युदयः शास्त्रविहितशास्त्रोचितकर्मयोगेनैव युज्यते कर्मयोगिनां गृहिणामिति हेतोः यत्कर्मनिष्ठा कर्मस्थितिः नितान्तमावश्यकीति ध्येयम् ।

---

1. गीतायां भावरानन्दी टीका अ० ३ श्लो० १
2. तत्रैव,
3. तत्रैव,
4. ईशा वास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत् ।
   तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥
5. कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
   एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

अत एव प्रवृत्तिरेव कर्मणो लक्षणं व्याहरन्त्यस्माकं प्राचीनाचार्यचरणाः ।

एवं च कैवल्याश्रमं, मन्त्राश्रमं, ज्ञानमार्गं चाङ्गीकर्तुं सर्वथाऽस्ति शक्तिविहीनः, यश्चास्ति भिक्षाचर्यं नैष्कर्म्यं भिक्षाटनव्रतनियमं च परिपालयितुं नितान्तमक्षमः, यश्चास्ति शास्त्रविहितं कर्म अकुर्वन् निन्दितं च समाचरन् इन्द्रियार्थेषु चरन् विचरन् हि मानवः नूनं पतनोन्मुखीभूतो भवति भविष्यति चेत्यत्र नास्ति लेशतोऽपि विवादः। अत शास्त्रविधिनैव कर्मणा कर्त्तव्यतानिर्धारणं समुचितं प्रतिभातीति हेतोरशास्त्रीयाणां केवलं कामैकनिबन्धनानां कर्मणां नास्ति किमपि फलमिति कृत्वा तथाविधकर्मणां फलाभावो निश्चितो वर्तते मुमुक्षूणां कार्याकार्यव्यवस्थितौ ।

यत शास्त्रविप्रयुक्तस्यैव कर्मणः फलावश्यंभावित्वनियमात् कर्तव्याऽकर्तव्यार्थयोर्व्यवस्थापने अर्थादनुष्ठेयाऽननुष्ठेयार्थनिर्णये श्रुतिस्मृतिलक्षणं शास्त्रमेव प्रमाणं तत्तदर्थप्रमापकं भवतीति शास्त्रीयः सिद्धान्तः । तथा चोक्तं गीतायाम्—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्[1] ॥

अपि च—"तच्छास्त्रमनर्थाय"[2]

अर्थात् शास्त्रविरुद्धमाचरणं सदाऽनर्थाय भवतीति सुनिश्चितमेतत् ।

अन्यच्चाप्युक्तम्—

"श्रुत्या विरोधे न भवेत् प्रमाणं भवेदनर्थाय विना प्रमाणम्"[3]

अर्थात् शास्त्रविरुद्धं नहि किमपि प्रमाणं प्रमाणं (प्रामाण्याश्रितं) भवितुमर्हति । प्रमाणमन्तरा च शास्त्रनियमोल्लङ्घनकारी स्वेच्छानुरूपं भक्तिविहीनं श्रद्धाविधुरं कर्मानुष्ठानं योऽपि विदधाति स कामकामी कामासक्तप्रवृत्तिमान् पुरुषोऽविधिना कृतत्वान्न हि तथाविधकर्मभिश्चित्तशुद्धिमवाप्नोति ।

आत्मनि रतिं विदधान एव यतिरस्मिन् जन्मनि जन्मान्तरेषु वा वेदोक्तं वेदोक्तं वा कर्म कृत्वैव चित्तशुद्धिं प्राप्यात्मज्ञानेन संसारबन्धनतो रावणदर्शितदिशा निवृत्तिं (मोक्षं) समवाप ।

एवमन्येऽपि कर्मभूमिस्था योगिनो वेदोक्तं कर्म विदधाना एवाऽऽत्मज्ञानं समवाप्य मुक्तिं लेभिरे नान्यथा । तथा चोक्तम्—

---

१. गीता अ० १६, श्लो० २३
२. मुक्तिकोपनि० २/१

वेदोक्तमेव कुर्वाणो निःसङ्गोऽपि समीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥[1]

अर्थात् सकलकर्मजन्यफलाभिलाषं परित्यज्य जगन्नियन्तरि विश्वात्मनि भगवति च समस्तक्रियाकलापमूतं नित्यं चाऽनित्यं कृत्यं (कर्मजातं समर्प्य योऽस्ति वेदोक्तकर्मानुष्ठानकर्ता सोऽवश्यमेव कर्मनिवृत्तिजन्या ज्ञानात्मिकां सिद्धिं प्राप्नोतीत्यस्ति सकलशास्त्रसमुद्घोष । वेदेषु यच्चास्ति यागजन्यस्वर्गरूपफलप्राप्तिवर्णनं तत् केवलमर्थवादमात्रं नित्यनैमित्तिकोभयविधकर्मस्वभिरुचे· समुत्पादनार्थं वेति विभाव्यताम् ।

अपि च फलासक्तिं फलकामना वा विहाय ईश्वरार्पणबुद्ध्यैव सर्वमपि नित्यनैमित्तिकं कर्म कार्यं येन स परमां गतिं प्राप्नुयात् ।

यतो मुमुक्षुः तितिक्षुर्यतिर्वा पुरुषः फलाभिसन्धिरहितो भूत्वा वैदिकं (वेदोक्तं) कर्म सम्यगनुतिष्ठन् खलु परमपुरुषार्थं मोक्षमधिगच्छति । तथा चोक्तम्—

वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रित ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्[2] ॥

अपि च—

"धर्मेण पापमपनुदति"

"ज्ञानमुत्पद्यते पुंसा क्षयात् पापस्य कर्मणः "[3]

इत्यादिप्रामुख्य (उपर्युक्त) श्रुतिस्मृतिभिर्धर्मानुष्ठानादेव पापक्षयो जायते । तस्माच्च पापक्षयात् पुनर्ज्ञानम् (आत्मज्ञानं) प्राप्यते । ज्ञानादेव च कैवल्यं (मोक्षः) समवाप्यते । उक्तं च—

"ज्ञानादेव हि कैवल्यम्[4] "

"ज्ञानादृते न मुक्तिः[5] "

अपि च—

"यथाऽविरात् सर्वपापं व्यपोह्य परात्पर पुरुषं याति विद्वान्[6]"

---

१. श्रीमद्भाग० ११/३/४६
२. मनुस्मृति. ४/१४
३. गीता शङ्कारानन्दी टीका २/१६
४. श्रुति
५. श्रुति.
६. मैत्र्युपनि० १/१

जनकादयोऽपि पूर्वमनेनैव कर्ममार्गेण दुर्लभं मोक्षमाप्तवन्तः । अर्थात्—

(१) जनकः

(२) अश्वपतिः

(३) प्रवाहणः

(४) अजातशत्रुः

(५) भगीरथः

इत्यादयो विद्वांसः श्रुतिस्मृतिप्रसिद्धा महात्मानो राजर्षिगणा अपि अनेनैव निष्कामकर्मयोगेन पापकर्मसु क्षीयमाणेषु सत्वशुद्धाः सन्तो ज्ञानजन्यं दुर्लभं मोक्षं लभन्ते स्म । उक्तं च—

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः[१]"

अपि च—

"नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च वासयेत् ॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः[२] ।"

इत्थं च यथा जनकादयः कृतकृत्यतां गताः कृतार्थाः सन्तः श्रूयन्ते, तथैव जनकादिवत्सर्वैरेव ज्ञानवृद्धैर्यतिभिर्योगिभिर्वालोकहितार्थमप्यवश्यमेव कर्म कर्तव्यम् । येन सत्कर्ममार्गप्रदर्शनेन तेषां तारणम् उन्मार्गान्निवारणं भवेत् । यतस्तावन्महापुरुषाणां ज्ञानवृद्धानां प्रवृत्त्यैव खलु शास्त्रस्य प्रामाण्यं कर्मणां च प्रशस्तिः अनात्मज्ञानामज्ञानिजनानां च सन्तरणं पारम्पर्येणाऽऽत्मवृद्धिश्च सुतरामेव जायते । अयमेवास्ति ज्ञानवृद्धानां महापुरुषाणां प्रभावो महत्वं च यतोऽनात्मज्ञजनानां कृते मार्गदर्शका भवन्ति । समीचीनं विजातीयप्रत्ययतिरस्कारपूर्वकं विवेकवैराग्यपूर्णं निष्काममावनया परमेश्वरार्पणबुद्ध्या नित्यनिरन्तरनिर्विकल्पकसमाधिनिष्ठावन्त महान्त कर्मकर्तृत्वयुतं पन्थानं च दर्शयन्ति । तावतैव खलु इयं प्रचीनोक्तिरपि सत्यत्वेन सगच्छते ।

"महाजनो येन गतः स पन्था"[३]

अपि च—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥[४]

---

१. महाभा० शा० प० २०४/८
२. श्रुतिः
३. पंचतन्त्रे

एवं तस्य सुमेरोर्दिशि दक्षिणस्यां सन्ति त्रयः पर्वताः, ते च निषधहेमकूट-हिमशैलनाम्ना व्यवह्रियन्ते व्याह्रियन्ते च। ते च पर्वताः प्रत्येकं द्विसहस्रयोजनविस्ताराः सन्ति। तत्र च निषधे पर्वते सर्प, नाग, गन्धर्वप्रभृतयो जीवविशेषा निवसन्ति, अन्योन्यं मिलित्वा व्यवहरन्ति, स्वेच्छं यथा स्यात्तथा विहरन्ति च।

- हेमकूटनामके च पर्वते गुह्यका रचितगृहाः सन्तो निवसन्ति, हिमवति च शैले खलु रक्षोगणा असुरललनाभिः सह स्वयमेव निवसन्ति विहरन्ति च।

तेषां त्रयाणामेव पर्वतानामवकाशेषु हरिवर्ष, किम्पुरुष भारतवर्षं चेत्येतानि त्रीणि वर्षाणि सन्ति, तानि च प्रत्येकं नवयोजनसहस्रविस्ताराणि भवन्ति। तत्र हरिवर्षे प्रह्लादानुयायिनो दैत्यदानवाः खलु नृसिंहादिना विविधानमन्दाऽऽनन्दसन्दोहानहर्निशमनुभवन्तो दिवसान् यापयन्तो निवसन्ति।

किम्पुरुषे च वर्षे किम्पुरुषगन्धर्वादिभिः सह चिरजीविहनुमत्प्रभृतयो जीवा निर्वाणशान्तिप्रदं ब्रह्मादिभिः सर्वदा सेव्यं श्रीरामं गायन्तो विशेषगुणगणयोगप्रभावेण तदीयगुणगणावच्छिन्नं च तं ध्यायन्तः प्रभोश्चरणाम्बुजयोश्च सन्निधाने दिव्यमानन्दं समनुभवन्तो दिव्योद्याननद्यादिषु विहरन्ति।

भारतवर्षे च कर्मकारिणः कर्माधिकारिणश्च स्वर्गनरकमोक्षाधिकारिणो मानवा नानाविधवर्णभेदभिन्ना गङ्गायमुनासरस्वतीनर्मदाकर्मनाशाकावेरीगोदावरीसरयूकालीनदीमहानदीगण्डकीपयोष्णादिनीजलपानस्नानादिनाऽऽत्मनः कृतकृत्यतां मन्वाना विन्ध्यचित्रकूटकालञ्जरकामगिरिगोवर्द्धनरैवतकमलयश्रीशैलसह्याद्रिषु भगवद्भवत्याऽऽनन्दानुभवेन कैवल्यपदमपि तुच्छतां नीतवन्तस्तृणीकुर्वन्तश्चरन्ति विचरन्ति च ते महापुरुषाः।

एवं सुमेरोरधोभागेषु वर्तते खलु नवममष्टादशयोजनविस्तृतमिलावृतं वर्षम्। तत्र चास्ति सुखदुःखसाक्षात्कारस्वरूपो भोगः सर्वथा पूर्णः। एतावांस्तु विशेषस्तत्रेलावृतवर्षे पूर्णभोगान्तर्गतसुखविषयक एव केवलं साक्षात्कारो जायते न तु दुःखविषयकोऽपि, तत्र दुःखस्याऽस्तित्वमेव नास्ति।

तदेवं सुमेरुमादाय जम्बूद्वीपाख्यं स्थानं शतसहस्रमितं वर्तते। ततः सुमेरोश्चतुर्दिक्षु पञ्चाशद्योजनसहस्रेण परिसंख्यातम्।

तत्र जम्बूद्वीपः पार्श्वद्वयमादाय द्विगुणेन लवणोदधिना परिवेष्टितो वर्तते।

अस्य च भूर्लोकस्य सर्वतोऽधोभागे वर्तते पाताललोकः। तत्र च वासुकिप्रभृतयो नागाधिपतयः स्वीयपरिवारसहिताः खलु निवासं कुर्वन्ति।

तदुपर्यस्ति खलु रसातललोकः, तत्र दैतेयदानवनिवातकवचप्रभृतयो राक्षसविशेषाः सन्ति स्वस्थितिमापन्नाः।

तदुपरि चास्ति महातलम्, तत्र तक्षकप्रभृतयः सर्पकोटिसन्निविष्टा जीवविशेषाः प्राणिनो वसन्ति।

तदुपरि च वर्तते 'तलातलं' नामकः अधस्ताद् वर्तमानो लोकः। तत्र च सन्ति निवासपरायणा मयो, मायावी, एवं तदनुगाश्च राक्षसविशेषाः।

एवं तलातलोपरि चास्ति अधस्ताद् वर्तमानः सुतलनामको लोकः। तस्मिंश्च भगवता स्वीयत्वेनानुगृहीतो बलिरात्मनिवेदी परमभागवतः स्वीयगणसहितो निवासं करोति।

तदुपरि च वर्तते 'वितल' नामकोऽधोलोको यत्र हाटकेश्वरो भवान्या सह मिथुनीभूय भासते। तत एव हाटकी नाम नदी प्रवृत्तिशीलाऽभूत्। एवं तत्र तत्सम्बन्धिनो गणा यथा भूतप्रेतपिशाचापस्मारब्रह्मराक्षसकूष्माण्डभैरवविनायकप्रभृतयोऽपि वसन्ति। यथोक्तम्—

ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः।
ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः।[1]

एवमधोवर्तिनां सर्वेषामेव लोकानामुपरि चास्ति खलु 'अतल' नामको लोकः। तस्मिंश्च लोके 'मय' नामकराक्षसस्य पुत्रादयो निवसन्ति, संति च तेऽपि राक्षसा एव। ते च सप्तपाताललोकाः स्वर्गादप्यधिकाऽऽनन्दसन्दोहसमन्विताः सन्तीति श्रूयते। एतेषां सप्तलोकानामुपरि जलावरणो वर्तते इत्यपि प्रामाण्यकोटिमाटीकते।

तेषामुपरि भूमेश्चाऽधस्तात् सन्ति नानाविधदुःखमया नरकाः। ते चेत्थं वर्णिताः सन्ति—तामिस्राऽन्धतामिस्ररौरवकुम्भीपाककूलाऽसिपत्रवनसूकरमुखान्धकूपकृमिभोजन-सन्दंशतप्तभूमिवज्रकण्टकशाल्मलीवैतरणीपूयोदप्राणरोधविशसनलालाभक्षणसारमेयादन-अवीचिरयपानक्षारकर्दमरक्षोगणभोजनशूलप्रोतदन्दशूकावटनिरोधनपर्यावर्तनसूचीमुखप्र-भृतयो नरकास्तत्र सन्ति।

तेषु च परधनापहारक, कलत्रापहारक, परवंचक, भूतद्रोहकारक, स्वकुटुम्बादि-पोषक, देहम्भर, पशु-पक्षिप्राणपीडक, पितृगुर्वादिविद्वेषक, पाषण्डधर्मपोषक, वृथादण्ड-प्रद, विवेकीमत्कुणाभिघातक, स्वयमेव मिष्टान्नभुजो, बलात्परस्वापहारक, परवधूरत, धर्मनाशक, वृषलीपति, मृगयासक्त, दाम्भिक, याजक, सवर्णभार्यागामि, गरद, अग्निद, मिथ्यावादि, सुरापायि, विद्यादिमदद्वेषि, भूतोद्वेजक, अतिथिविद्वेषक, कृपण, पिशुन, गणिकागामि, विपरीतधर्माचारि, धर्मानभिरुचिप्रभृतयो विविधयातनाभिर्यात्यमाना हाहेति रुदन्तस्तत्रैव निवसन्ति।

---

१. दुर्गासप्तशतीप्रारम्भे

एवं तस्य सुमेरोर्दिशि दक्षिणस्यां सन्ति त्रयः पर्वताः, ते च निषधहेमकूट-हिमशैलनाम्ना व्यवह्रियन्ते व्याह्रियन्ते च । ते च पर्वता. प्रत्येकं द्विसहस्रयोजनविस्ताराः सन्ति । तत्र च निषधे पर्वते सर्प, नाग, गन्धर्वप्रभृतयो जीवविशेषा निवसन्ति, अन्योन्यं मिलित्वा व्यवहरन्ति, स्वेच्छं यथा स्यात्तथा विहरन्ति च ।

हेमकूटनामके च पर्वते गुह्यका रचितगृहाः सन्तो निवसन्ति, हिमवति च शैले खलु रक्षोगणा असुरललनाभिः सह स्वयमेव निवसन्ति विहरन्ति च ।

तेषां त्रयाणामेव पर्वतानामवकाशेषु हरिवर्षं, किम्पुरुषं भारतवर्षं चेत्येतानि त्रीणि वर्षाणि सन्ति, तानि च प्रत्येकं नवयोजनसहस्रविस्ताराणि भवन्ति । तत्र हरिवर्षे प्रह्लादानुयायिनो दैत्यदानवाः खलु नृसिंहादिना विविधानमन्दाऽऽनन्दसंदोहानहर्निशमनुभवन्तो दिवसान् यापयन्तो निवसन्ति ।

किम्पुरुषे च वर्षे किम्पुरुषगन्धर्वादिभिः सह चिरजीविहनुमत्प्रभृतयो जीवा निर्वाणशान्तिप्रद ब्रह्मादिभिः सर्वदा सेव्यं श्रीरामं गायन्तो विशेषगुणगणयोगप्रभावेण तदीयगुणगणावच्छिन्नं च तं ध्यायन्त. प्रभोश्चरणाम्बुजयोश्च सन्निधाने दिव्यमानन्दं समनुभवन्तो दिव्योद्यानन्द्यादिषु विहरन्ति ।

भारतवर्षे च कर्मकारिण कर्माधिकारिणश्च स्वर्गनरकमोक्षाधिकारिणो मानवा नानाविधवर्णभेदभिन्ना गङ्गायमुनासरस्वतीनर्मदाकर्मनाशाकावेरीगोदावरीसरयूकालीनदीमहानदीगण्डकीपयोह्लादिनीजलपानस्नानादिनात्मनः कृतकृत्यतां मन्वाना विंध्यचित्रकूटकालजरकामगिरिगोवर्धनरैवतकमलयश्रीशैलसह्याद्रिषु भगवद्भक्त्याऽऽनन्दानुभवेन कैवल्यपदमपि तुच्छतां नीतवन्तस्तृणीकुर्वन्तश्चरन्ति विचरन्ति च ते महापुरुषाः ।

एवं सुमेरोरधोभागेषु वर्तते खलु नवममष्टादशयोजनविस्तृतमिलावृतं वर्षम् । तत्र चास्ति सुखदुःखसाक्षात्कारस्वरूपो भोगः सर्वथा पूर्णः । एतावांस्तु विशेषस्तत्रेलावृतवर्षे पूर्णभोगान्तर्गतसुखविषयक एव केवल साक्षात्कारो जायते न तु दुःखविषयकोऽपि, तत्र दुःखस्याऽस्तित्वमेव नास्ति ।

तदेव सुमेरुमादाय जम्बुद्वीपाख्य स्थान शतसहस्रमितं वर्तते । ततः सुमेरोश्चतुर्दिक्षु पंचाशद्योजनसहस्रेण परिसङ्ख्यातम् ।

तत्र जम्बूद्वीप. पार्श्वद्वयमादाय द्विगुणेन लवणोदधिना परिवेष्टितो वर्तते ।

अस्य च भूर्लोकस्य सर्वतोऽधोभागे वर्तते पाताललोकः । तत्र च वासुकिप्रभृतयो नागाधिपतयः स्वीयपरिवारसहिता खलु निवासं कुर्वन्ति ।

तदुपर्यस्ति खलु रसातललोकः, तत्र दैतेयदानवनिवातकवचप्रभृतयो राक्षसविशेषाः सन्ति स्वस्थितिमापन्नाः ।

तदुपरि चास्ति महातलम्, तत्र तक्षकप्रभृतयः सर्पकोटिसन्निविष्टा जीवविशेषाः प्राणिनो वसन्ति ।

तदुपरि च वर्तते 'तलातलं' नामकः अधस्ताद् वर्तमानो लोकः । तत्र च सन्ति निवासपरायणा मयो, मायावी, एवं तदनुगाश्च राक्षसविशेषाः ।

एवं तलातलोपरि चास्ति अधस्ताद् वर्तमानः सुतलनामको लोकः । तस्मिंश्च भगवता स्वीयत्वेनानुगृहीतो बलिरात्मनिवेदी परमभागवतः स्वीयगणसहितो निवासं करोति ।

तदुपरि च वर्तते 'वितल' नामकोऽधोलोको यत्र हाटकेश्वरो भवान्या सह मिथुनीभूय भासते । तत एव हाटकी नाम नदी प्रवृत्तिशीलाऽभूत् । एवं तत्र तत्सम्बन्धिनो गणा यथा भूतप्रेतपिशाचापस्मारब्रह्मराक्षसकूष्माण्डभैरवविनायकप्रभृतयोऽपि वसन्ति । यथोक्तम्—

ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ।
ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ।[१]

एवमधोवर्तिनां सर्वेषामेव लोकानामुपरि चास्ति खलु 'अतल' नामको लोकः । तस्मिंश्च लोके 'मय' नामकराक्षसस्य पुत्रादयो निवसन्ति, संति च तेऽपि राक्षसा एव । ते च सप्तपाताललोकाः स्वर्गादप्यधिकाऽऽनन्दसन्दोहसमन्विताः सन्तीति श्रूयते । एतेषां सप्तलोकानामुपरि जलावरणो वर्तते इत्यपि प्रामाण्यकोटिमाटीकते ।

तेषामुपरि भूमेश्चाऽधस्तात् सन्ति नानाविधदुःखमया नरकाः । ते चेत्थं वर्णिताः सन्ति—तामिस्राऽन्धतामिस्ररौरवकुम्भीपाकमूलाऽसिपत्रवनसूकरमुखान्धकूपकृमिभोजन-मवशतप्तभूमिवज्रकण्टकशाल्मलीवैतरणीपूयोदप्राणरोधविशसनलालाभक्षणसारमेयादन-मवीचिरयपानक्षारकर्दमरक्षोगणभोजनशूलप्रोतदन्दशूकावटनिरोधनपर्यावर्तनसूचीमुखप्र-भृतयो नरकास्तत्र सन्ति ।

तेषु च परधनापहारक, कलत्रापहारक, परवंचक, भूतद्रोहकारक, स्वकुटुम्बादि-पोषक, देहम्भर, पशु-पक्षिप्राणपीडक, पितृगुर्वादिविद्वेषक, पाषण्डधर्मपोषक, नृपादण्ड-प्रद, विवेकोमत्कुणाभिघातक, स्वयमेव मिष्टान्नभुजो, बलात्परस्वापहारक, परवधूरत, धर्मनाशक, वृषलीपति, मृगयासक्त, दाम्भिक, याजक, सवर्णभार्यागामि, गरद, अग्निद, मिथ्यावादि, सुरापायि, विप्रादिमद्द्वेषि, भूतोद्वेजक, अतिथिविद्वेषक, कृपण, पिशुन, गणिकागामि, विपरीतधर्माचारि, धर्मानभिरुचिप्रभृतयो विविधपातकाभिर्यातयमाना दाहेति रुदन्तस्तत्रैव निवसन्ति ।

---

१. दुर्गासप्तशतीप्रारम्भे

एतेषामुपरि चेयं प्राग् वर्णिता वर्तते भूमिः। अस्याश्च भूमेरुपर्यन्तरिक्षाऽपरपर्यायो ह्यस्ति भुवर्लोकः। तत्र च भुवर्लोके ग्रहनक्षत्रतारका खलु ज्योतिश्चक्रे निबद्धाः सन्तः सञ्चरन्तीति सर्वेऽपि शास्त्रकोविदा विदन्ति।

अस्य भुवर्लोकस्य चोपरि माहेन्द्रापरपर्यायभूतोऽस्ति स्वर्लोकः। तत्र च सकल्पसिद्धा अणिमाद्यैश्वर्योपपन्ना स्वेच्छोपात्तविग्रहा कल्पायुषो जीवा निवसन्ति।

स्वर्गलोकस्योपरि चास्ति "महर्लोकः"। तत्र च प्राजापत्याः अमिताभा अजनाभा अणिमाद्यैश्वर्योपपन्ना, स्वेच्छोपात्तविग्रहा ध्यानाहाराः कल्पसहस्रायुषो देवसमूहा निवसन्ति।

तदुपरि चास्ति जनलोकः। तस्मिन् लोके ब्रह्मकायिका ब्रह्ममहाकायिका ब्रह्मपुरोहिताः भूतेन्द्रियवशिनो द्विगुणद्विगुणोत्तरोत्तरायुषोऽमरा निवसन्ति।

एवं जनलोकस्योपरि वर्तते वर्तमानस्तपोलोकः। तत्राऽहङ्कारवशिनः खलु त्रिविधा देवनिकाया अभास्वरा महाभास्वराः सत्यमहाभास्वराश्चैते द्विगुणद्विगुणोत्तरायुषः स्वेच्छया स्वपरान्यपरस्योपात्तचित्ता ऊर्ध्वरेतसो देवसमूहा निवसन्ति गच्छन्ति च।

तथाऽस्य तपोलोकस्योपरि चास्ति सत्यलोकः। अयं च सत्यलोकः सर्वेषामेवोपर्युपरि वर्तमानानां लोकानामुपरि वर्तते। अस्य सत्यलोकस्योपरि नास्ति कोऽपि लोकः। यथा सर्वेषामेवाऽधोलोकानामधस्ताद् वर्तते 'पाताललोकः' तथैव सर्वेषामेवोपरि वर्तते सत्यलोकः इत्यत्र नास्ति लेशतोऽपि सन्देहानध्यवसायावसरः।

तस्मिन् सत्यलोके कृतगृहनिर्माणा आत्मारामाः यावत्सर्गायुषः शुद्धनिवासाः सद्धामाः सञ्ज्ञासञ्ज्ञिनश्च क्रमेण सवितर्कसविचारानन्दस्मितायोगिन उपर्युपरि निवसन्ति गच्छन्ति च परमहंसाः खलु तल्लोकवासिनः परोक्षविद्वांसः प्रणवाद्युपासकाश्च।

ते च तत्र गत्वा ततः पुनर्नाऽऽवर्तन्ते, किन्तु तेनैव सहाधिकाराः सन्तस्ते मुच्यन्ते, परमां मुक्तिं लभन्ते। "न स पुनरावर्तते न स पुनरावर्तते" इत्यादिश्रुतेः।

इदमत्र विचार्यते यथा सप्त सन्ति अधोलोकाः, सप्तैव च सन्ति उपरिलोकास्तथैव सिन्धवोऽपि सप्तैव वर्तन्ते। ते च यथा—क्षारसिन्धुः (क्षारोदधिः) (लवणसिन्धुः), दुग्धसिन्धुः, दधिसिन्धुः, घृतसिन्धुः, इक्षुरससिन्धुः, मेघसिन्धुः स्वादूदकसिन्धुः, इत्यादयः सन्ति।

तथा सर्द्वीपद्वयनिरूपणं च—

पञ्चीकरणप्रकारश्च प्रसिद्ध इति सर्वे एव जानन्ति पञ्चीकरणप्रकारम्। तावतापि स्पष्टीकरणार्थं पुनरुच्यते। तथाहि—आकाशादिस्थूलभूतानि पञ्च पञ्चीकृतानि भवन्ति।

तत्र प्रत्येकं भूतं सर्वत· प्राक् समानरूपेण भागद्वये विभज्य तेषां पंचानां स्थूलभूतानां दश भागाः जायन्ते। ततश्चैकैकं भागमादाय चतुर्धा विभजेत् तदनन्तरं चतुरो भागान् स्वस्वेतरद्वितीयांशेयोजनात्ते पंच पंच अर्थात् पंचीकृतानि तानि भूतानि जायन्ते। तथाचोक्तम्—

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशैर्योजनात् पंच पंच ते[1]॥

अपि च सुरेश्वराचार्यवार्तिकेऽपि पंचीकरणप्रकार इत्थं मिलति। तथाहि—

पृथिव्यादीनि भूतानि प्रत्येकं विभजेद् द्विधा।
एकैकं भागमादाय चतुर्धा विभजेत् पुनः॥
एकैकं भागमेकस्मिन् भूते संवेशयेत् क्रमात्।
ततश्चाऽऽकाशभूतस्य भागाः पंच भवन्ति हि॥
वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत्।
पंचीकरणमेतत् स्यादित्याहुस्तत्ववेदिनः॥

पुनश्चैतेभ्यः पंचीकृतेभ्यो भूतेभ्यो भूर्भुवःस्वर्महर्जनस्तपः सत्यमित्येतन्नामकानामुपर्युपरि विद्यमानानामतलवितलरसातलमहातलपातालनामकानामधोऽधो विद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्वर्तिचतुर्विधस्थूलशरीराणां जरायुजाण्डजोद्भिज्जस्वेदजाख्यानां चोत्पत्तिर्जायते।

एवं क्रमेण खलु पंचीकृतपंचभूतेभ्यः स्थूलप्रपंचोत्पत्तिर्जायते।

एतेभ्य एव पंचीकृतेभ्यो भूतेभ्यो प्रागुक्तानां चतुर्दशभुवनानां चोत्पत्तिर्भवति।

एतावांस्तु विशेषः—"एत एव स्वावरणभूतलोकपर्वततद्बाह्यपृथिवीतद्बाह्यसमुद्रैः सहिता ब्रह्माण्डमित्युच्यते"।

अर्थाच्चतुर्दशभुवनानि लोकालोकगिरितः सन्ति समावृतानि, स च लोकालोकस्तद्बाह्यपृथिवीतोऽस्ति समावृतः, सा च पृथिवी तद्बाह्यसमुद्रेरावृता वर्तते।

इत्थं च प्रागुक्तचतुर्दशभुवनान्यारभ्य बाह्यसमुद्रपर्यन्तं ब्रह्माण्डमित्युच्यते।

अस्य ब्रह्माण्डस्य च विस्तारवर्णनं श्रुतावित्थं वर्तते—

"द्वात्रिंशतं वै देवरथाह्न्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत् पर्येति तां समन्तं पृथिवी द्विस्तावत् समुद्रः पर्येति"[2]।

बृहदारण्यकश्रुत्यनुसारं द्वात्रिंशतं वै देवरथाह्न्यानि लोकालोकपर्वतसमावृतोऽयं

१. पंचदशी १/२७
२. बृहदार० उ० ३/३/२

भूर्लोकोऽस्तीति सुनिश्चितम् ।

इदानीं प्रसङ्गनिवशाद् भगवतो भास्करस्य रथ एकस्मिन् मुहूर्ते कियता क्रमेण प्रचलति श्रीमद्भागवतादेशानुसारं निरूपयामः । तथाहि—

"एवं मुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रीमयोऽसौ चतसृषु परिवर्तते पुरीषु"[1] ।

एतावता प्रबलप्रमाणेन यद् भगवतो भास्करस्य वेदमयो रथ एकस्मिन् मुहूर्ते चतुस्त्रिंशल्लक्षयोजनानि अष्टशताधिकानि च प्रचलति इत्यपि तत्र वैशिष्ट्यमूहनीयम् ।

**मायाऽविद्ययोराश्रयकार्यविवेचनम्**

**(क) जीवः**

परमात्मनो व्यापकस्याऽनन्तशक्तिशालिनो जगन्नाथस्य बाबाविश्वनाथस्य विशेषतो मन्नाथस्य महादेवस्य गुणगणपरिगणनपरायणपरैः शास्त्रानुशीलनैकस्वभावैः शास्त्रकारैः संक्षेपेण चेतनाऽचेतनभेदेन पदार्थानां द्वैविध्येन विभाजनं व्यधायीति सर्वेऽपि विदाङ्कुर्वन्ति वेत्तारः ।

तत्र चेतनतत्त्वभूत आत्मा जीवोऽपीति स एव भोक्ता कर्त्ता चेति । तदतिरिक्तश्चाऽचेतनो जडभूतो भोग्यपदार्थः स च संघातपदाभिधेयः ।

संघातभूतस्य सर्वस्यैव जडवर्गस्य परप्रयोजनकत्वं दृष्टमनुभूयते चापि । अर्थात् सुखदुःखाद्यनेकधर्मात्मकतया स्थावरादिब्रह्माण्डान्ता ये केचन अपि सन्ति संघातभूतास्ते सर्वेऽपि पदार्थत्वेनैवाऽनुभूता भवन्ति, चेतनस्य च भोक्तुः प्रयोजनकाश्च सन्तीति ।

तत्र योऽस्ति सघातातिरिक्तोऽसंघातभूतश्चेतन स एव खल्वस्ति आत्मा जीवः । यमपेक्ष्य सर्वभोगप्रयोजनक शरीरेन्द्रियादिक स्थावरादिब्रह्माण्डपर्यन्तं भोग्यभूत भवति संहृत शयनासनादिवत् ।

तच्च संहृतं स्वस्मिन् भोगजनकत्वेन विरोधात् परोपभोगजनकत्वमेव तस्य निर्णीयते इत्यतो भवति परस्तद्व्यतिरिक्तः स्वतन्त्रो जीवः, स एवाऽऽत्मा चेतनः ।

यदि शय्याऽऽसनादय सघातभूता पदार्था. संहृतशरीरप्रयोजनकत्वेनानुभूयन्ते इत्युच्यते, न तु जडवर्गभिन्नो यः कश्चित् परश्चेतनभूत जीवस्वरूप आत्मा (जीवात्मा) तदर्थत्वेनापीति संघातत्व सघातान्तरमेव पर विधेयमनुमापयेत् । अनुमानं च— शरीरेन्द्रियादयः सघातपदार्था. संघातत्वात्, न तु परमात्मन् इत्युच्यते चेत्तदाप्याह— शयनासनादीनां सघातान्तरात्मकप्रयोजनकत्वे सघातत्वाविशेषात् तस्याऽपि तादृशपरार्थत्वमेव मन्तव्यम् । एव तस्यापि तथैत्येवंक्रमेणाविश्रान्त्यापत्तेर्दर्शनात् अनवस्थादोषः

1. श्रीमद्भागवते ५/२१/१२

प्रसज्येतेति संघातातिरिक्त एवैक आत्मस्वरूपः चेतनपदार्थः स्वीकार्य इति ।

किंच भोक्तृत्वहेतुनापि शरीरेन्द्रियाद्यतिरिक्त एव कश्चित् जीवात्मभूतश्चेतनः सिद्ध्यति । यत्र हि भोक्तृत्वं तत्र भोग्यत्वं नास्ति ।

भोग्ये हि खलु सुख-दुःखेऽनुकूलप्रतिकूले प्रत्यात्ममनुभूयेतेऽतोऽनयोः सुख-दुःखयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदवश्यं भवितव्यम् । तत्र च शरीरेन्द्रियादयो नहि कदापि खलु अनुकूलवेदितारः प्रतिकूलवेदितारो वा भवितुमर्हन्ति, यतो भोक्तृभूतेषु स्वेष्वेव सुखदुःखाद्यात्मकतयाऽनुकूलवेदिता चैकः शरीराद्यतिरिक्तो जीवात्मापरपर्यायभूतश्चेतनतत्त्वस्वरूपः आत्मा अवश्यमेव स्वीकार्योऽनन्यगतिकत्वात् अनुभवविषयत्वाच्च । उक्तं चात्मविषये—

यद्यत् पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ।
यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ॥
लभते नासया यद्यत्तत्तदात्मेति भावयेत् ।
जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥
त्वचा यद्यत् स्पृशेद् योगी तत्तदात्मेति भावयेत् ।[1]

इत्थं च तेषां तेषां घटादिविषयाणां दर्शनकर्ता, शब्दश्रवणकर्ता, गन्धानुभवकर्ता रसविषयकज्ञानसम्पादयिता, स्पर्शानुभवकर्ता, इत्यादिरूपेण सर्व एव खलु कर्तृत्वभोक्तृत्वरूपेण यावत्कार्यसम्पादनपरोऽयमेव चेतनतत्त्वभूतो जीव आत्मा ।

एवं "चेष्टावत् शरीरं सात्मकं प्राणादिमत्त्वात् यन्नैवम् तन्नैवम्" इत्याकारकं चेष्टावच्छरीरपक्षकेण्याप्यनुमानेन जीवात्मनः सिद्धिरप्रत्यूहैवेति मन्तव्यम् ।

उपाधिभेदभेदावच्छिन्नो जीवः—

'अनाद्यनिर्वचनीयाऽविद्योपधानभेदोपाधिकल्पितो जीवः न तु वस्तुतः परमात्मनो भिद्यते । तत्तदुपाध्युद्भवाभिभवाभ्यां च उद्भव इव अभिभूत इव प्रतीयते ।'[2]

इत्यनेन श्रीमिश्रपादा उपाधिभेदभेदावच्छिन्नं जीवं जीवस्वरूपं वा व्याख्यातवन्तः । तात्त्विकदृष्ट्या विचार्यमाणे नहि जीवो परमात्मनो भिद्यते ।

अविद्योपाधिकं ब्रह्मैव जीवः । अन्तःकरणावच्छिन्नं ब्रह्म जीवः इत्यपि व्याहर्तुं शक्यते । यथा भामत्याम्—

"जीवो हि अविद्यावेशवशात् देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन

१. योगतत्त्वोप० ६९-७१
२. ब्रह्मसू० ३/२/६ भामत्याम्

दु:ख्यहमित्यविद्यया कृत दु:खभोगमभिमन्यते" ।[1]

अपि च तत्रैव—

"तस्मादविद्याप्रत्युपस्थापितमपारमार्थिक जैवं रूप कर्तृ भोक्तृ रागद्वेषादि-दोषकलुषितमनेकानर्थयोगि[2] ।

इत्यनेनाऽज्ञानोपाध्यवच्छिन्नस्य जीवस्याऽऽत्मनो दु:खोपभोगक्षमत्वं सर्वानर्थयोगित्व सर्वानर्थहेतुत्वञ्च प्रतिपादितं भवति ।

अपि "चाऽन्त:करणावच्छिन्न चैतन्यं जीव: ।"[3]

इति च श्रीधर्मराजाध्वरीन्द्रेण स्वीयं मतं दर्शितं तत्रैव वेदान्तपरिभाषायाम् । श्री शङ्कराचार्यमतानुसार शरीरेन्द्रियादिधर्मसंघाध्यक्षभूत एव कर्मकर्ता तज्जन्यफल-भोक्ताऽप्यय चेतनतत्त्वभूत आत्मा जीव एव ।[4]

शरीरेन्द्रियाद्युपाधीना स्वय समुत्पत्तिमत्त्वेनोपाधिनिष्ठा सा समुत्पत्ति-रेवोपधेयेऽपि चेतनतत्त्वभूते नित्ये तस्मिन्नात्मनि जीवे व्यवह्रियते आह्रियते च ।

स चाऽयं जीवो विभुर्नित्यशुद्धबुद्धमुक्तस्वभाव: । कर्मणा सम्पादनकर्तृत्वं सुखदु:खयोश्च भोक्तृत्वमप्यस्मिन्नेव जीवे भवितु प्रभवति ।

जाग्रत, स्वप्न, सुषुप्तिषु तिसृष्वेवाऽवस्थासु जीव. सन्तिष्ठमानत्वेनाऽनुभूयते ।

अयं च जीव: स्थूलसूक्ष्मकारणशरीराभिमानी । अत एव क्रमशो विश्व, तैजस, प्राज्ञसंज्ञासञ्ज्ञितो भवति ।

एवमन्नमय, मनोमय, प्राणमय, विज्ञानमय, आनन्दमयेष्वपि पञ्चविधकोशेष्व-स्योपलब्धिर्भवति । स्वीयाऽज्ञानरूपोपाधिवशादेव चाय जीव: शरीरेन्द्रियादिना-भेदभावनाभावित' सन्नेव खलु शारीरिक, मानसिकप्रभृतिसुखदु:खादीना समुपभोक्तापि भवति।

अहं नित्यशुद्धबुद्धमुक्तस्वभाव परमानन्दाऽनन्ताऽद्वयं ब्रह्मास्मि "इत्याकार-काऽखण्डाकाराकारिता चित्तवृत्तिरुदेति, तदानी तादृशवृत्त्युदयेनाऽज्ञानरूपोपाधिविगमे ब्रह्मसाक्षात्कारे सति स्वस्वरूप ब्रह्मत्वमधिगच्छति ।

इत्य चोपाधिभेदभेदावच्छिन्नोऽय जीव. खलु समयभेदेन हिरण्यगर्भ, देवता-प्रभृतिपदजन्यबोधविषयतावान् भवतीति सर्वथा शास्त्रसम्मतो विषय. । स चायं जीवो

१. ब्र०सू०शा०भा० २/३/४६
२. तत्रैव, १/२/२०
३. वेदान्तपरि० पृ० ६८
४. ब्र०सू० ३/२/१ तथा तैत्तिरीयो०शा०भा० २/१

नाणुपरिणामः नापि मध्यमपरिणामः किन्तु विभुर्व्यापकः सर्वमूर्तसंयोगीति विभुत्वातिरिक्तं सर्वमप्यणुत्वादिकमौपचारिकमेवेति सर्वं सुस्पष्टीकृतं ब्रह्मसूत्रशांकर-भाष्ये—

"ब्रह्मणः प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम् । परस्य च ब्रह्मणो विभुत्वमाम्नातम् । तस्माद् विभुर्जीवः[1] ।

अस्य भाष्यस्येदं सूत्रमस्ति—

"तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत्" ।[2]

अर्थात् 'तद्गुणसारत्वात्-जीवब्रह्मणोस्तादात्म्यात् । तद्व्यपदेशः अणुत्व, उत्क्रमण, गमन, आगमन, इच्छा, द्वेष, सुख, दुःखप्रभृतयो ये सन्ति बुद्धेः प्रधानभूता गुणास्ते जीवे व्यपदिश्यन्ते । स च व्यपदेशो नास्ति प्रामाणिकः प्राज्ञवत् यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशस्तद्वत् ।

आश्रय :—

(क) शुद्धचित्—

उपनिषदां महातात्पर्यविषयीभूतं "शुद्धचित्" ब्रह्म अदृश्यम्, अग्राह्यम् अलक्षणम्, अचिन्त्यम्, अव्यपदेश्यम्, निर्गुणं, निर्विकारं, परात्परं, विशुद्धं वर्तते इति सर्वा अपि श्रुतयः सञ्जिरन्ते । तथाहि—

"अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमर-सनगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमवाह्यम्"[3] ।

पारमार्थिकदृष्ट्या तदेव "शुद्धचित्" पदाभिधेयं केवलं निर्गुणब्रह्मैवास्तीति तदतिरिक्तस्य सर्वस्यैव मिथ्यात्वेन कस्यापि सत्ताऽवरपर्यविभूतम् अस्तित्वमेव नास्ति । यतः सत्याविलक्षणात् परमेश्वरात् अन्यत् किमपि नास्त्येव ।

मिथ्याभूतस्य चराचरात्मकस्याऽस्याऽव्याकृतादिस्थूलान्तस्य जगतः सर्वस्याप्य-धिष्ठानभूतं तदेव शुद्धचिद्ब्रह्मैवास्ति । तस्मिन्नेव शुद्धचित्स्वरूपे ब्रह्मणीदं सर्वं दृश्यमानं जगत् प्रोतमस्ति, तन्तुषु पटवत्, सूत्रे मणिगणवत् ।

यथा तन्तुभ्योऽतिरिक्तं पटाऽस्तित्वं (पटसत्त्वम्) नानुभूयते । तथैव विशुद्धचिद् ब्रह्मणोऽतिरिक्तं किमपि नास्त्येवेति तदीयसत्तामनुवृत्यैव सर्वं भासमानं भवति न ततः पृथक् किमप्यस्ति । सर्वा अपि श्रुतयः सर्वा अपि स्मृतयश्च एकमात्रं तस्यैव विशुद्ध-चिदात्मकस्य परब्रह्मण एवाऽस्तित्वं गायन्ति, साधयन्ति समर्थयन्ति च । तथाहि—

---

१. ब्र०सू०शां०भा० २/३/२६

२. तत्रैव,

३. बृहदारण्यकोप० ३/८/८

"आत्मैवेदं सर्वम्[1]"

ब्रह्मैवेद सर्वम्[2]

"सच्चिदानन्दरूपमिदं सर्वम्"[3]

अपि चोपनिषत्स्वेव तस्य शुद्धचित्स्वरूपस्य परब्रह्मणोऽन्येऽपि समुल्लेखा सम्मिलन्ति । तथाहि—

"अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरंजनो विभुरद्वयानन्दः परः प्रत्यगेकरसः"[4] ।

"अहमेवाक्षरं ब्रह्म वासुदेवाख्यमव्ययम्[5] ।"

अत्रापि ब्रह्मपदेन "शुद्धचिद्रूपं" निर्गुणब्रह्मैव विवक्षितं वर्तते । तस्यैव सन्मात्ररूपत्वात्, शुद्धबुद्धसत्यस्वरूपत्वात्, अद्वैतानन्दरूपत्वाच्च ।

अपि च बृहदारण्यके—

"ब्रह्म वा इदमग्रे आसीत्तदात्मानमेवावेत् । अहं ब्रह्मास्मीति । तस्मात्तत् सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् । तथर्षीणां तथा मनुष्याणां तद्धैतत्-पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवम् सूर्यश्चेति । तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते ।

"आत्मा ह्येषां स भवति"[6]

अत्रापि सर्वत्र शुद्धचिद् ब्रह्मैव ब्रह्मपदेन गीयते । तस्य स्वरूपमपि सर्वत्र श्रुतिषु गीयमानमनुभूयते ।

परमात्मनो निर्गुणस्यैव शुद्धचित्त्वम्—

श्रीद्रविडाचार्यमतेऽपि परब्रह्मणो निर्गुणत्वं शुद्धचित्त्वं च सर्वथाऽभीष्टमस्ति इदच सर्वज्ञात्ममुनिना सक्षेपशारीरके भाष्यकारवचनमाश्रित्य परब्रह्मण एव निर्गुणत्वं शुद्धचित्त्वं च समर्थितम् । तथाहि—

"अन्तर्गुणा भगवती परदेवतेति —

प्रत्यग्गुणेति भगवान् भाष्यकारः ।

१. छा०उ० ७/२५/२
२. बृ०उ० २/५/१
३. नृसिंहोत्तरतापनीयोप०-७
४. तत्रैव, ८
५. नारदपरिव्राजकोप० ३/२०
६. [illegible]

प्राह स्म यत्त्विह निर्गुणवस्तुवादे—
संगच्छते न तु पुनः सगुणप्रवादे ।।[1]

अत्र श्रीद्रविडाचार्यः "सेयं देवतैक्षत" इमां श्रुतिमाश्रित्य अन्तर्गुणाः एतद्वाक्य घटकीभूतस्य गुणपदस्य "स्वरूपम्" इत्यर्थं कृतवान्, देवतापदस्य च ब्रह्मरूपमर्थम्। तथा च 'अन्तर्गुणा' इत्यस्य प्रत्यग्गुणा प्रत्यग्रूपा इत्यर्थं विहितवान्। अर्थात् प्रत्यगात्मरूपा परा देवता परं ब्रह्मेति तु परमार्थः। इयं चोक्तिर्निर्गुणवस्तुवादे प्रत्यग्ब्रह्मणोरत्यन्ताऽद्वैतवादे एव संगच्छते न तु सगुणप्रवादे विकारवादे इत्यर्थः। अपि च—

"पूर्णमेव स्वक रूपमपूर्णं भाति मायया।
पूर्णरूपतया मायां पश्यन् पूर्णो भवेत् स्वयम्[2]।।

(ग) सगुणब्रह्म :—

एकस्मिन् दिने शशाङ्कशेखरो भगवान् बाबाविश्वनाथो जगन्नाथः सुशीतभवटच्छायायामेकदा व्याघ्रचर्मासनासीनो ह्यासीत्। तदानीमेवैकान्ते प्रागुक्त-तादृशासनासीनं सानन्दमानन्दवने सन्तिष्ठमानं स्वीयविश्रामस्थलभूतस्य विशालवट-वृक्षस्याधस्तादेकान्ते विराजमानं भगवन्तमीशानं महादेवं देवाधिदेवं विलोक्य गिरिराजनन्दिनी भवानी अनिमन्त्रिता अत्यपि तेषां पादयोः प्रणता बभूव।

भक्तानां भक्तिवर्धनाय आर्तानामार्त्तिनाशनाय च सौकर्यसाधनान्वेषणपरो दिक्पटधरो भगवान् भूतभावनस्तदीयं मानरहितं प्रेमातिशयं वशं दर्शं तां गिरिराज-नन्दिनी सम्यक् सत्कुर्वन् स्वार्धासनं प्रदत्तवान्।

शैलजाया अन्तःकरणे (हृदये) पूर्वजन्मत एवैको महान् संशयो हृदयग्रन्थि रूपेण आसीत्। तादृशसंशयनिवृत्तिस्तेषां दृष्टादृष्टसर्वविषयविदुषा जगन्नियन्तृणा सर्व-शक्तिमता प्रभुणा लेखकनाथानां बाबाविश्वनाथपादानां सन्निधौ पूर्णरूपेण नितान्तमा-वश्यकीति तस्या सर्वथा औचित्यमङ्गीकृतम्।

तदनन्तर प्रभोरादेशं समवाप्य तयाऽत्र प्रश्नो व्यधायि। प्रभो? स्वयं वेद-वक्तृत्वकलानद्भिर्मुनिभिस्तेषां मुखेन वा ब्रह्मणो यद् वर्णनं यद्बहुमथोप तत्रास्ति मदीयोऽप्येकः प्रश्नः।

प्रभुवर! यद्यपि जटिलोऽयं विषयोऽनेकजन्मभूमिस्तथाप्यस्यैकमंशमङ्गीकृत्य तत्रैवाय प्रश्नो विधीयते।

यद् व्यापक, विरज, अज, अकल, अनीह, अभेदादिनामधेयैः सम्बोध्यते, यद् ब्रह्म, अनन्तशक्तिशालिनस्तस्य ब्रह्मणोऽवतरणं कथं संभवोऽस्ति? लेखकोऽत्र विषये

१. संक्षेपशा० अ० ३, श्लो० २२१
२. माधवाचार्यकृतसूतसंहितायाष्टीकायां अ० १३, श्लो० ४४

गोस्वामिनोऽपि सम्मतिं प्रयच्छति—

ब्रह्म जो व्यापक बिरज अज अकल अनीह अभेद।
सो कि देह धरि होइ नर जाहि न जानत बेद॥[1]

उपनिषत्सु स्मृतिग्रन्थेष्वपि विशेषरूपेण निर्गुण, निर्विशेषब्रह्मणो वर्णनं मया सम्यक् श्रुतमवगतञ्च, किं तत्रोल्लिखितनिर्गुणनिर्विशेषब्रह्मणः कौशल्यानन्दवर्धनस्य अयोध्याचन्द्रस्य भगवतो रामचन्द्रस्य च अस्ति कश्चिद् भेदात्मको विशेषः ?

यदेदमेव समाहितं भगवता शङ्करेण, हे गिरिराजनन्दिनि ? भगवतो विषये सर्वेऽपि प्रश्नाः कल्याणकारिणो भवन्ति। परन्तु हे उमे ? इदन्ते कथनं नहि समीचीनं प्रतिभाति यत् किं वेदप्रतिपादितं ब्रह्मैव राम ? एवंविधः संशयो वेदार्थानभिज्ञानां कृते एव केवलं जायते।

त्वया यदुक्तं किं राम एव ब्रह्म वर्तते इति ? किं भवता स्वतन्त्र मतमिदमस्ति तन्न समीचीनं यतस्तावत् श्रुतियुक्तिविरुद्धमर्थं यदि साक्षाद् भगवानपि ब्रूते सोऽप्यर्थो नास्ति आस्तिकानां मान्य।

अत एव सर्वथा श्रद्धास्पदीभूतोऽपि भगवान् बुद्धः श्रुतिस्मृतिविरुद्धार्थकथनमात्रेणैव खलु आस्तिकानां कृते मान्यो जातः। तदीयकथनमपि बौद्धदर्शनदर्शितं तेषां कृते सर्वथा मान्यमेव। अत्र गोस्वामिश्रीतुलसीदासस्यापि सम्मतिमाह—

"अतुलितमहिमा वेद की तुलसी कीन्ह बिचार।
जे निन्दत निन्दितभयो विदित बुद्ध अवतार॥[2]

अतोऽहं यत् किमपि वदिष्यामि तत् सर्वं श्रुतिसम्मतमेव। यथाऽहमितः पूर्वं प्रोक्तवान् यद् वेदा अपि तस्य ब्रह्मणो यथार्थस्वरूपस्य यथावन्निर्देशविधाने मौनभूता एव भवन्तितिष्ठन्ते। हे उमे ? त्वदीयमिदं कथनमपि साधु सगच्छते यदुपनिषत्सु खलु निर्गुणब्रह्मणोऽचिन्त्यरूपमेव सर्वथा विशदतो निर्दिष्टं समुपदिष्टं वर्तते।

परन्तु तत्रापि सगुणब्रह्मणो रूपं परप्रतिपत्त्यर्थं महदेव दुष्करं प्रतिभाति। यतस्तस्य सगुणब्रह्मणः चिन्मयचिदानन्दमयसौन्दर्यमाधुर्यसुधासमुद्रसगुणसाकारमङ्गलविग्रहस्यास्यमोघोऽचिन्त्योऽनन्तकल्याणगुणगणमहत्वम्, एवं तस्य महर्षीणां महामुनीनां मनोहारिणी कमनीयरूपमाधुरी तत्त्वतो यथार्थदृष्ट्या नैव वर्णितुं शक्यते, नाप्यवबोधयितुं वा पार्यते। गोस्वामिनाप्ययमेव भावः दर्शितः। तथाहि—

"निर्गुन रूप सुलभ अति सगुन न जाने कोई।
सुगम अगम नाना चरित सुनि मुनि भ्रम होई॥[3]

१. तुलसीकृतरामचरितमानसे
२. तत्रैव,

इत्थं च कथंचित् निर्गुणब्रह्मणो रूपस्य विचारगम्यत्वस्वीकारेऽपि सगुणब्रह्मणो रूपस्य विचारगम्यत्वं नाङ्गीकर्तुं शक्यते, यतस्तस्य सगुणब्रह्मणो रूपस्य विचारगम्यत्वं प्रेमभावनां विना तदीयभक्तिं विना वा नहि सम्पादयितुं पार्यते। तस्मिंश्च सगुणे ब्रह्मणि प्रेमभावना केनापि साधनेन नोत्पादयितुं शक्यते। अपि तु सा प्रेमभावना प्रभुवरबाबाविश्वनाथस्य कृपयैव संभवाऽस्ति, तत्र साधनान्तरं नापेक्ष्यते।

अतो यावत्पर्यन्तमस्ति साधनबलसत्वं तावत्पर्यन्तमेव ब्रह्मणः स्वरूपं गायन्त्यो निर्दिशन्त्यस्तावदुपनिषदो मौनं धारयन्ति। अर्थात् ततः परं किमस्ति सगुणब्रह्मणः स्वरूपविषये इति न वक्तुं पारयन्ति उपनिषदः।

वेदास्तु स्वयं श्रीभगवतो दर्शनस्य, तस्य च प्रेम्णः सदाऽऽकाङ्क्षां प्रकुर्वन्ति।

अत एव भूपालचूडामणेर्मर्यादापुरुषोत्तमस्याऽयोध्याचन्द्रस्य भगवतः श्रीराघवेन्द्रस्य राज्याभिषेकावसरे चत्वारो वेदा 'वन्दीवेषे' प्रभोः स्वरूपस्य विशदं विवेचनं विदधानाः सन्तोऽन्ते वदन्ति—

"जे ब्रह्म अजमद्वैतमनुभवगम्य मन पर ध्यावहिं।
ते कहहुं जानहुं नाथ हम तव सगुन जस नित गावहिं॥
करुनायतन प्रभु सद्गुनाकर देव यह वर मांगहिं।
मन वचन कर्म विकार तजि तव चरन हम अनुरागहिं॥"[1]

एतच्च त्वदीयप्रश्नसम्बन्धिविषयजातं निरूप्येदानीं पुनर्मया त्वदीयाः प्रश्नाः समाधीयन्ते।

हे उमे! तवास्ति अयमेव प्रश्नः—यत् निर्गुणं ब्रह्म सगुणं ब्रह्म भवितुमर्हति न वा। अर्हति चेत् कथमिति?

अस्य त्वदीयप्रश्नस्य समाधानाय केवलं जलोदाहरणमेव पर्याप्तमस्ति। अर्थात् यथा जलं हिमरूपेण परिणतं भूत्वापि जलमेवास्ति जलमेवाऽवतिष्ठते अर्थात् जलत्वावच्छिन्नत्वावच्छिन्नां स्वस्वरूपतां न जहाति। तत्र जले नहि कापि विकृतिः समायाति।

तथैव निर्गुणं ब्रह्म अपि सगुणरूपेण परिणतं भवति। तत्र निर्गुणं ब्रह्म सर्वथाऽविकृतमेव सत् सन्तिष्ठते। उक्तं च—

"जो गुन रहित सगुन सोई कैसे।
जल हिम उपल बिलग नहिं जैसे॥"[2]

अतो हे शिवे! योऽस्ति अयोध्याचन्द्रभूषणभूतः सगुणब्रह्मरामः, स एव सच्चिदानन्दैकरसस्वरूपं परं ब्रह्म वर्तते। तुल्यवित्तिवेद्यतया इदमपि व्याहर्तुं शक्यते

१. तुलसीरामा०
२. तत्रैव,

यच्चास्ति निर्विशेष, निष्कल, निष्क्रिय निरजन, निराकार, निर्विकारं, शान्तम्, अनन्तम्, अबाह्यम्, अपूर्वम्, अनपरम्, आनन्दघनस्वरूप निर्गुण परब्रह्म तदेवास्ति सच्चिदानन्दविग्रहवान् अयोध्याचन्द्र कौशल्यानन्दवर्धनो भगवान् रामचन्द्रः ।

हे गिरिराजनन्दिनि ? यदिदमस्ति ते कथनं यन्निर्गुणब्रह्मभूत. प्रभूतो रामः कथ शरीर धारयति धारयितु वा प्रभवतीत्यपि न साम्प्रत समीचीन समुचितं वा प्रतिभाति। यत इदमपि ते कथन रामस्य सगुणब्रह्मण. शरीरस्य यथावत् स्वरूपानभिज्ञत्वमेवाऽनुसरति । नो चेत्त्वामह पृच्छामि किं सगुणब्रह्मभूतस्य भगवतो रामस्य शरीर प्राणिमात्रवत् पचतत्वविनिर्मित पाचभौतिकम्अस्तीत्येव जानासि त्वम् ?

हे शैलसुते ! तात्विकदृष्ट्या विचार्यमाणे खलु प्रभोर्भगवतो देहदेहिनोर्नास्ति कोऽपि भेद । अत एव तदीयो देहोऽपि सच्चिदानन्दविग्रह एवोच्यते सर्वत्र दर्शनेषु । गोस्वामिनाप्ययमेव भाव समुद्भावित —

चिदानन्दमयदेह तुम्हारी—
विगत विकार जान अधिकारी ।।[1]

अयमेव सगुणब्रह्मभूतो वा ईश्वरो वा ईशो वा जगदीशो वा जगदीश्वरो वा जगन्नियन्ता वेदयादिशब्दैर्व्याह्रियते व्यवह्रियते च । अस्य च सगुणब्रह्मण. कल्पना केवलमुपासनानिमित्तमाश्रित्य व्यावहारिकदृष्ट्यैव क्रियते । ये च सन्ति श्रीकृष्णनृसिंहप्रभृतयोऽवतारास्तेषा विषयेऽपीयमेव ।

योगवासिष्ठे मायास्वरूपप्रतिपादनप्रकार —

यथा दोषयुक्तस्य दुर्दृष्टे पुरुषस्याज्ञानबलादेव द्विचन्द्रत्वप्रकारको भ्रमानुभवो भवति । यथा वा शुक्तौ तथाविधस्य पुरुषस्य रजतत्वप्रकारकभ्रमानुभवो भवति । यथा वा मन्दान्धकारे तथाविधस्य पुरुषस्य रज्ज्वा सर्पत्वप्रकारिकानुभूतिर्भवति ।

तथैव जीवोऽपि सत्यासत्यरूपेणात्मनि अनात्मरूपेण भ्रान्तिमनुभवति । चिच्छक्ते. स्पन्दशक्तेश्च सम्बन्ध एव मन. कथ्यते । मिथ्यैव तत् समुत्पन्नम् । तदेव मिथ्याज्ञान निगद्यते ।

वस्तुन स्वस्वरूपाऽपरित्यागेन वस्त्वतरमिथ्याप्रतीतिर्विवर्त । यथा रज्जावहे शुक्तौ रजतस्य वा प्रतीति ।[2]

'यथा रज्जु परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।
तद्वत्सत्यमविज्ञाय जगत् पश्यति मूढधीः ।।

१. तुलसी राम०

रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति।
अधिष्ठाने तथा ज्ञाते प्रपंचे शून्यतां गते॥[1]

एवैव च मायाप्युच्यते। इयमेव चाविद्या कथिता भवति। इदमेव चाऽज्ञानं संसारप्रपंचाद्यनुवर्तनं विधत्ते। संसारं जनयति, प्रापयति चेति। उक्तंच—

"एषा ह्यविद्या कथिता मायैषा सा निगद्यते।
परमेतत्तदज्ञानं संसाराविविषप्रदम्॥[2]

इयमेव मायापरपर्यायभूताऽविद्याऽसारस्यास्य संसारस्य बीजभूतापि कथ्यते। इयं चाऽविद्या विद्यमाना सती सतीव स्फारता गच्छति। प्रत्यक्षीकृतामपि ता सत्या नैव व्याहर्तुं शक्नुमः। आभ्यन्तरतः शून्यापि सा सर्वत्र सारवती सुन्दरी चोपलभ्यते। एषा च क्वचिदपि सत्वेनाऽसत्वेन वा नोपलभ्यते अपि तु सर्वत्रं वोपलक्ष्यते। क्वचिदपि निमेषमध्यसंतिष्ठमाना सा सर्वत्र स्वस्थितिमापन्नेव प्रतीयते, अर्थात् स्वीयस्थैर्याशंका प्रयच्छति।

सुमहान्ति त्रीणि जगन्ति एषा माया क्रमेणैव मुहूर्तमात्रेणोत्पाद्य धत्ते ग्रासीकरोति च। मनोराज्यमिवाकारभासुरा सत्यसंकल्पवर्जिता सहस्रशतशाखा सत्यपि पारमार्थिकदृष्ट्या नहि किंचिदस्तीति मे मतिर्भवति।

अस्य दृश्यभूतस्य जगतो भ्रान्तिभूतापीयमविद्या वेत्युच्यते।

वस्तु नैवरूपेण तस्याऽविद्यमानता परिज्ञायते यथा मृगतृष्णाभूतायां नद्यां जलाभावः। ब्रह्मणा स्वयं स्वसत्तया स्वीयाऽभावभूता महाशक्तिस्वरूपेयमविद्या धृता वर्तते। अत एवेयमविद्याऽसती सत्यपि सद्रूपावच्छिन्नेव परिलक्ष्यते।

असद्रूपावच्छिन्नाया अविद्याया अयमस्ति स्वभावो यत् तस्य नित्यनिष्कलनिर्गुणस्य परब्रह्मणः परमेश्वरस्य ज्ञानादेव सा तदानीमेव नश्यति, पुनर्नहि दृश्यते।

येषां च तस्य ब्रह्मणो ज्ञानं नास्ति ते नैकचित्तविश्रान्तिशीलाः कामभोगप्रसक्ता अशुचिव्रतास्ते स्वकीयदोषाधिक्यादेव भूयो भूयो जन्मनि जन्मनि प्रतिजन्माप्यासुरीमेव योनिमापन्नाः सन्तो दुःखमेवानुभवन्ति, नरकेषु पतन्ति च। उक्तं च—

संसारबीजकणिका यैषाऽविद्या रघूद्वह।
एषा ह्यविद्यमानैव सतीव स्फारतां गता॥[3]

"दृश्यते प्रकाराभास सदर्थे नोपयुज्यते"[4]

१. नादविन्दूपनि० ४०/२६-२७
२. योगवासिष्ठे ५/१३/८६
३. तत्रैव, ३/११३/११
४. तत्रैव, ३/११३/१५

"अतः शून्यापि सर्वत्र दृश्यते सारसुन्दरी"[1]
न क्वचित्संस्थितापीह सर्वत्रैवोपलक्ष्यते ।
निमेषमप्यतिष्ठन्ती स्थैर्याशङ्कां प्रयच्छति[2]

प्रतिभासवशादेषा त्रिजगन्ति महान्ति च ।
मुहूर्तमात्रेणोत्पाद्य धत्ते ग्रासीकरोति च ॥[3]

मनोराज्यविकारभासुरा सत्यवर्जिता ।
सहस्रशतशाखापि न किंचित्परमार्थतः ॥[4]

इयं दृश्यभ्रान्तिर्नन्वविद्येति चोच्यते ।
वस्तुतो विद्यते नैवा तापनद्या यथा पयः ॥[5]

अविद्येति धृता संविद्ब्रह्मणात्मनि सत्तया ।
सद्भ्रमेणासदप्यस्या सद्रूपमिव लक्ष्यते ॥[6]

असन्मयमविद्याया रूपमेव तदेव हि ।
यद्वीक्षितासती नूनं नश्यत्येव न दृश्यते ॥[7]

आवरणविक्षेपशक्ती—

सोपोद्घातं मायाया स्वरूपप्रदर्शनपूर्वकं शक्तिद्वयं निरूप्यते—

पुण्यमय्यामस्यां भारतभूमौ पापजन्मलोकभारं दूरीकरणार्थं लोकोपकारार्थं च समये समयेऽवसरेऽवसरे चाऽस्माकं कृते मार्गप्रदर्शका श्रीराम, कृष्ण, नृसिंहप्रभृतयः श्रीमच्छङ्करमध्वरामानुजवल्लभाचार्यप्रभृतयश्चाऽवतारभूता महापुरुषा अवतरन्ति ।

येषां कामदुघा शास्त्रोपदेशपद्धतीं परिशील्याऽद्यत्वेऽपि मुमुक्षवो जना यतयश्चाऽध्यात्मपिपासां निवृत्तिलाभपुरःसरं शमयन्ति ।

एवम्भूतेषु भगवदंशावतारभूतेषु सत्पुरुषेषु स्वाविर्भावे निगुणात्मिकेयं, मायैवास्ति केवलं कारणम् । अतो मायाकार्यत्वात् सर्वं मिथ्याकल्पितञ्च ।

श्रीशंकराचार्येणापि ब्रह्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वं कल्पितत्वं चाङ्गीकृतम् । अत्रेदमनुमानं निष्पन्नं भवति—

१. यो॰वा॰ ३/११३/१७
२ तत्रैव, ३/११३/१८
३. तत्रैव, ३/११३/२७
४. तत्रैव, ३/११३/३३
५ तत्रैव, ६/२/५२/५
६. तत्रैव, ६/२/१६०/११
७. तत्रैव ६/१/५१/१३

"ब्रह्मातिरिक्तं सर्वं मिथ्याकल्पितत्वात् मायाकार्यत्वात् दृश्यत्वाच्च शुक्तिरूप्यवत्" ।[1]

अद्वैतसिद्धावपि—

"विमतं मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् शुक्तिरूप्यवत्" ।[2]

तथा च यदपि दृश्यं, यच्च जडभूतं, यच्चापि परिच्छिन्नं चास्ति तत्सर्वं मायाकार्यम् । तथा चोक्तम्—

"सर्पत्वेन यथा रज्जू रजतत्वेन च शुक्तिका ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ।।
घटत्वेन यथा पृथ्वी जलत्वेन मरीचिका ।
गृहत्वेन हि काष्ठानि खड्गत्वेनैव लोहता ।।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ।।"[3]

अर्थात् यथा मायापरपर्यायभूतेनाऽज्ञानेनाऽपहृतज्ञाना विमूढा भ्रान्तपुरुषा रज्जौ सर्पत्वप्रकारकम् "अयं सर्पः" इति ज्ञानं सम्पादयन्ति । एवं कदाचित् शुक्तिकायां (शुक्तौ) रजतत्वप्रकारकम् "इदं रजतम्" इति ज्ञानन्ते सम्पादनपरा भवन्ति ।

एवं पृथिव्यां पृथिवीत्वप्रकारकं ज्ञानं चास्ति यथार्थज्ञानम्, किन्तु घटत्वप्रकारकं पृथिवीविशेष्यकं च ज्ञानं नास्ति यथार्थज्ञानम्, । एवमेव मरीचिकायां जलत्वप्रकारकं ज्ञानम्, काष्ठेषु चास्ति गृहत्वप्रकारकं ज्ञानम्, लोहेषु च वर्तते खड्गत्वप्रकारकं ज्ञानं यथार्थमेव ते वदन्ति समर्थयन्ति च ।

तथैवाऽऽत्मनि शरीरत्वप्रकारकमपि "गौरोऽहम्" "श्यामोऽहम्" "कृशोऽहम्" "स्थूलोऽहम्" इत्यादिरूपेण भ्रमात्मकं ज्ञानम् अहर्निशमनिशमविच्छिन्नतया सम्पादयन्तस्तेऽस्मिन् जन्मनि जन्मान्तरे वा नोद्धृतास्ते भवन्ति, भवितुमर्हन्ति चेत्यतस्ते भ्रमान्धकारे पतन्ति ।

तेषां विमूढपुरुषाणां भ्रमान्धकारपतितानां तादृशपतनकारणीभूताप्यस्ति चेयं माया ।

अस्याश्च मायाया विषये विशेषतो विवेचनमग्रे मायानिरूपणावसरे स्वयं वयं करिष्यामः ।

---

१. स्वयं स्वेन विनिर्मितम्
२. अद्वैतसिद्धिः प्रथमपरिच्छेदः पृ० २६
३. योगशिखोपनि० ४/२३-२४

**मायायाः स्वरूपविवेचनम्—**

तात्त्विकदृष्ट्या विचार्यमाणे श्रुतिं, युक्तिं, लोकव्यवहारं चाश्रित्याऽस्यास्त्रिगुणात्मिकाया मायायास्त्रीणि रूपाणि निर्धारितानि भवन्ति। तानि च स्वरूपाणि—

(१) तुच्छात्मिका साऽतः तुच्छ रूपमेकं तस्याः।

(२) अनिर्वचनीयं चास्ति द्वितीयं रूपम्। यतस्त्वा माया सत्त्वेन, असत्त्वेन, उभयात्मकत्वेन, अनुभयात्मकत्वेन वा केनापि रूपेण केऽपि नहि निर्वक्तुं शक्नुवन्तीति साऽनिर्वचनीया निगद्यते, अत. सर्वथाऽनिर्वाच्या सा।

(३) तृतीयं चास्ति तस्या स्वरूपं सत्यमिति। यतः सा माया व्यवहारतो लोके सत्यवद् भातीति सा सत्यापीत्यपि सुस्पष्टं वयं स्वयं व्याहर्तुं शक्नुमः। इदं चास्ति मायाया लौकिकं स्वरूपं, यतस्तावल्लोके तस्याः सत्यत्वेन प्रतीयमानत्वात्। उक्तं च—

> तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा।
> ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः॥[1]

अर्थात् श्रौतबोधेन सा माया तुच्छा कालत्रयेऽप्यसती सिद्ध्यति। यौक्तिकबोधेन च साऽनिर्वचनीया चास्तीत्युक्तं प्रागेव। लौकिकबोधेन च सा वास्तवी सत्या चास्तीति तस्या. प्रामाण्यं गण्यते लौकिकैर्लोके। उक्तञ्च—

"लौकिकं तद्वदेवेदं प्रमाणन्त्वात्मनिश्चयात्।[2]

अर्थाद् आत्मनिश्चयात् पूर्वम् अर्थाद् आत्मसाक्षात्कारपूर्वकालावच्छेदेन तस्या मायाया प्रामाण्यं सुदृढस्थितिकमिति सर्वैरेव मायावादिभिः प्रोच्यते स्वीक्रियते चाऽनुभवानुरोधात्।

इयमेव माया स्वतन्त्रा परतन्त्रा चेति विभागविधादुभयात्मिका इति चास्ति पूर्वतो विजातीयं रूपद्वयं तस्या मायाया।

चैतन्यात्मनितमद् ब्रह्म विना तस्या मायाया नहि किमप्यस्तित्वं कार्यं वा पश्याम। ब्रह्मसाहाय्यमाश्रित्यैव माया सर्वं सप्रपञ्चं चराचरात्मकं जगदुत्पादयति रचयति चेति मायावादिनाभाषाणकमिदम्। इत्येवास्ति तस्याः पारतन्त्र्यम् पराधीनत्वमिति।

एवं स्वाश्रितत्वेन स्वीयबलप्रयोगेण वा सा माया असङ्गमपि आत्मानं ब्रह्म ससङ्गं विधाय सम्बन्धसाहित्यावच्छिन्नं विधाय सप्रपञ्चस्य चराचरात्मकस्य जगत

१. पञ्चदशी चित्रदी० ६/१३०

२. वेदान्तपरिभाषा

समुत्पत्ति विदधातीत्यतः सा स्वतन्त्रापि निगद्यते । अनयैव स्वीययान्यथाकरणात्मिकया शक्त्या सा माया स्वतन्त्रा सत्येव सर्वमपि कार्यं सम्पादयति । तथा चोक्तम् —

अस्वतन्त्रा हि माया स्यादप्रतीतेर्विना चितिम् ।
स्वतन्त्रापि तथैव स्यादसङ्गस्यान्यथाकृतेः ॥[1]

इतः पूर्वमस्माभिर्मायायाः स्वातन्त्र्यास्वातन्त्र्ये पूर्णतया दर्शिते । इदानीं तत्रोभयत्रोपपत्तिरियमेवास्ति यत् स्वभासकचैतन्यं विहाय न प्रकाशमधिगच्छति माया, इत्येवास्ति तस्या अस्वातन्त्र्यम् (पारतन्त्र्यम्) इति ।

असङ्गस्य सर्वथा सम्बन्धरहितस्याऽऽत्मनो ब्रह्मणोऽन्यथाकरणात् सम्बन्धसम्पादनात् स्वतन्त्रापि सेति गीयते ।

आवरणविक्षेपशक्ती—

ब्रह्मणश्चास्ति केवलमेका शक्तिर्माया अज्ञानमित्यपि । तस्य च मायापरपर्यायभूतस्याऽज्ञानस्य द्वे शक्ती स्तः ।

१. आवरणशक्तिरेका,

२. विक्षेपशक्तिश्चापरा,

तत्राऽऽवरणशक्तिस्तावत् यथा स्वल्पोऽपि मेघो मेघखण्डो वा मेघावयवभूतस्तदंशो वाऽनेकयोजनेषु (६२००) षट्सहस्रपंचशतयोजनेषु विस्तृतं खल्वादित्यमण्डलमवलोकयितृनयनपथपिधायकतयाऽऽच्छादयतीव यथा प्रतीयते, तथैव मायापरपर्यायभूतं चराचरात्मकस्य जगतो हेतुभूतमिदं मूलाज्ञानं परिच्छिन्नमप्यपरिच्छिन्नमसंसारिणमात्मानमवलोकयितृणा चैतन्यपिधायकतयाऽऽच्छादयतीव प्रतीयमानं भवति तादृशमेव सामर्थ्यं प्रोद्‌घुष्यते आवरणशक्तिः । सा च कार्यानुकूलकारणनिष्ठसामर्थ्यशक्तिस्वरूपा । तत्र रजः सत्त्वाभ्यामनभिभूतं तम आवरणशक्तिः ।

तमसश्चाऽऽवरकत्वं स्वानुभवदृष्ट्यैव विचार्यताम् । आवृणोति आच्छादयति, स्वरूपं या शक्तिः साऽऽवरणशक्तिरिति यौगिकव्युत्पत्त्याऽधिष्ठानस्वरूपविशेषावरणमावरणशक्तिर्निगद्यते इति । इयमेव शक्तिः खलु ब्रह्मणः सच्चिदानन्दस्वरूपमावृणोतीत्यावरणशक्तिरिति नामाऽन्वर्थकं भवति ।

यद्यपि चाऽपरिच्छिन्नस्यात्मनः परिच्छिन्नेनाऽज्ञानेनाऽऽच्छादकत्वं नहि कदापि कुत्रापि भवितुमर्हतीति युक्तमुत्पश्यामः ।

तथापि प्रमातृबुद्धिमात्राऽऽच्छादकत्वेनाऽज्ञानस्याऽऽत्माऽऽच्छादकत्वमुपचारादेवोक्तं भवतीति विज्ञेयम् राहोः शिर इतिवत् । उक्तं च—

---

१. पंचदशी, चित्रदीपप्रकरणम् ६, श्लो० १३२

घनच्छन्नदृष्टिर्घनच्छन्नमर्कम्—

यथा मन्यते निष्प्रभं चातिमूढः ।

तथा बद्धवद्भाति यो मूढदृष्टेः

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥[1]

अर्थात् यथाऽऽत्मविषयकाऽज्ञानाच्छन्नदृष्टिरत्यन्तमूढपुरुषः खलु मेघाच्छन्नं भगवन्तं भास्करं सर्वथा प्रभाहीनं प्रभावहीनं वा मन्यते तथैवाऽज्ञानावृतप्रमातृचैतन्यस्य मूढदृष्टेर्य आत्मा बद्धवद् भाति अर्थात् संसारिवत् प्रतीयमानो भवति स नित्योपलब्धिः नित्यविज्ञानस्वरूप आत्माऽहमेवाऽस्मि ।

यथा रज्जुविषयकाऽज्ञानेनाऽऽवृतस्वरूपायामेव रज्ज्वा सर्पत्वप्रकारिका संभावना विपरीतभावना वा जायते, तथा च वास्तविकं खलु रज्जुस्वरूपमावृतं भवतीति सर्वैरेवाऽनुभूयते ।

अयमाशयः श्रीशंकराचार्येण मायाया आवरणविक्षेपनामकं शक्तिद्वयमङ्गीकृतम् । तथा च मायाया इदमेव शक्तिद्वयं स्वयंप्रकाशस्वरूपस्य चैतन्यात्मकस्याऽऽत्मनो ब्रह्मणः स्वरूपबोधबाधकं भवति, यत एका शक्तिस्तदीयं स्वरूपमाच्छादयति, द्वितीया च तत्र रूपान्तरमुद्भावयतीति—सर्वैरेव निर्विवादं स्वीक्रियतेऽङ्गीक्रियते च, यतो ब्रह्मणः स्वयं ज्ञानरूपत्वात् बोधस्यापि तदात्मकत्वात्, आवरणशक्तेश्चाऽज्ञानरूपत्वात्, विक्षेपशक्तिसाहाय्येन विक्षेपशक्तिविशिष्टत्वेन चाऽऽवरणशक्तिर्ब्रह्मस्वरूपं बोधं प्रतिबध्नात्येवेत्यत्र नास्ति लेशतोऽपि विवादो विवादावसरो वा ।

स च स्वयंप्रकाश आत्मा नित्योपलब्धिस्वरूपस्तथा सर्वथा बन्धनरहितश्चास्तीति श्रुतिस्मृतयः समुद्गिरन्ति ।

किन्तु मायाया आवरणशक्त्या शास्त्रवेत्तारोऽपि ऋषयो महर्षयश्च अनात्मसारमात्मानं बुद्धवत् मन्यन्ते । अर्थात् नित्य शुद्ध बुद्धं मुक्तमपि चाऽऽत्मानम् अनित्यमशुद्धमबुद्धं बद्धं च मन्यते लोकः । अर्थात् मायाया आवरणशक्तिरियं तदीयं वास्तविकं स्वरूपमावृणोति विक्षेपशक्तिश्च रूपान्तरमुद्भावयति इति तु परमार्थः ।

अस्या एव मायाया आवरणशक्त्याऽऽवृतो जीवः स्वयं स्वमात्मानं सांसारिकविषयाणां कर्त्तारं भोक्तारं चाऽभिमन्यते तस्यैव कर्त्तृत्वभोक्तृत्वविषयिणीस्वानुभूतिस्त्वयैवास्ति यथा रज्ज्वां सर्पद्रष्टुर्हृदये सर्पादिदर्शनजन्या भयानुभूतिस्तं भयेन बाधते ।

विक्षेपशक्तेर्विवेचनम्—

विक्षेपशक्तिसाहित्यावच्छिन्ना खलु सेयं माया समस्तमिमं चराचरात्मकं जागतिकं प्रपञ्चं समुत्पादयति समुद्भावयति सर्वतो भावेन परिपालयति च । उक्तं च—

---

१. वेदान्तसारः आवरणशक्तिप्रकरणे

शक्तिद्वयं हि मायाया विक्षेपावृतिरूपकम् ।
विक्षेपशक्तिर्लिंगादि ब्रह्माण्डान्तं जगत् सृजेत् ॥[1]

अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥[2]

एतदवान्तरशक्तिद्वयसाहित्यावच्छिन्नया माययैव नामरूपात्मकं जगदिदं प्रतिभाति। संक्षेपशारीरिकमतावलम्बिनः खलु ब्रह्मणो विवर्तभूतं जगदिदमिति ब्रह्मण उपादानकारणत्वं वदन्ति, मायायाश्च निमित्तकारणत्वम् ।

वाचस्पतिमिश्रास्तु शुक्तिरजतदृष्टान्तमाश्रित्य ब्रह्मैवोपादानकारणं जगतः, यतो ब्रह्मणो विवर्तभूतं जगदिति वदन्ति विवदन्ते चात्र बहवः । माया तु सहकारिकारणमात्रम् ।

वेदान्तसिद्धान्तमुक्तावलीकृतस्तु परिणामितया मायाया एवोपादानकारणत्वं वदन्ति समर्थयन्ति च । विवर्ततया तु नास्ति कस्यापि उपादानकारणत्वम् । सर्वेषामेव निष्कर्षोऽयं प्रदर्श्यते यत् ब्रह्मैवास्ति प्रपंचभूतस्य जगतो विवर्ततया कारणम्, माया तु परिणामित्वेनेति विशेषः ।

प्रमाणान्तरेणापि मायाकृतं सगुणरूपं निरूप्यते—

कुन्ती सच्चिदानन्दं परमेश्वरं श्रीकृष्णचन्द्रं स्तुतिरूपेण प्रार्थयति कथयति वा यद् भवान् अजः सन् कथं पुनर्जन्म गृह्णाति ? अस्य प्रश्नस्य केचन महापुरुषा इदमुत्तरं प्रयच्छन्ति यथा मलयाचलस्य यशो वर्धनार्थं तस्मिन् चन्दनं स्वयं प्रकटीभवति । तथैव स्वीयप्रियभक्तप्रवरस्य राज्ञः श्रीयदोर्यशो विस्तारयितुमेव भवास्तत्र यदुवंशे स्वयमवतरितवान् ।

अपरे चेदं भगवदवतरणकारणं वदन्ति यद् वसुदेवस्य देवक्या पूर्वजन्मनि सुतपा-पृश्निरूपेण वररूपेण याचितो भवांस्तत्राऽऽययात् । अत एव भवानजोऽपि सन् जगत्कल्याणाय दैत्यानां च विनाशाय तत्र पुत्ररूपेणाऽवतरितवान् ।

अन्ये च पुनर्भगवदवतरणे इदमेव कारणं दर्शयन्ति, यदविद्याकामकर्मभिर्ये सन्ति खलु जगति क्लेशं प्राप्नुवानास्तेषां भगवद्भक्तिभावनाभावितान्तःकरणानां कृते श्रवण, स्मरणसम्पादनयोग्यलीलाविधानविचारत एव तदा स्वयमेव नन्दकपाणिर्नन्दनन्दनोऽवतरति तान् भक्तिप्रवणान्तः करणान् परित्रातुं, तेषां क्लेशं दूरीकर्तुं धर्ममर्यादां च संस्थापयितुम् इति । तथा चोक्तम्—

---

१. पंचदशी

२. दृग् दृश्यविवेके १३/१५

केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ।
यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम् ॥[1]

अपरे च पुनः—

वसुदेवस्य देवक्यां पुत्रतां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥[2]

अपि च पुनस्तत्रैव—

भारावतारणायान्ये भुवो नाव इवोदधौ ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥
भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥[3]

अन्यच्चापि खलु तत्रैव—

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः—
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं—
भवप्रवाहोपरमं पदाम्बुजम् ॥[4]

इत्थं चेयमेवाविद्यापरभगिनीभूता माया स्वप्रभावबलेन वा स्वसंसर्गबलेन स्वीयावरणविक्षेपशक्तिद्वारा निर्गुणमपि ब्रह्म सगुणं विधत्ते ।

अन्ये तु भगवतो विसदृशेन क्रूरेण कर्मणा सन्तापमापन्नस्य भृग्वादेः शापादिवचनदानं भगवदवतरणे कारणम् इति कथयन्ति, समर्थयन्ति च ते तदेवाऽभिप्रायम्—

पतिव्रता धर्मपरा हृता येन मम प्रिया ।
स तु प्रियाविरहितश्चिरकालं भविष्यति ॥[5]

अपरे च खलु परमात्मन ईदृशं ज्ञानमेव भगवतोऽवतरणे प्रधानं कारणमस्तीति कथयन्ति, वदन्ति च—

---

१. श्रीमद्भाग० स्क० १/८/३२
२. तत्रैव १/८/३३
३. तत्रैव १/८/३४-३५
४. तत्रैव १/८/३६
५. पुराण

"सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्"
"तदैक्षत बहु स्यां प्रजायेयेति"
"आत्मा वा इदमेकमेवाग्र आसीन्नान्यत्
किंचनमिषत् स ऐक्षत लोकान्नु सृजा ।"

इत्यादिना स्वीयं भावमाविर्भावयन्ति।

एके च पुनस्तस्यैव भगवतः परमात्मनो रमणेच्छैव तस्यावतरणे हेतुरिति प्रोद्‌टङ्कयन्ति—

"स वै नैव रेमे स द्वितीयमैच्छत्"

"एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमते ।"

इत्यादिश्रुतिभिरपि रमणेच्छाया एवाऽवतारकारणत्वं प्रतिपाद्यते ।

अपि च भागवतेऽपि क्वचिदंशविशेषेऽस्यैव खल्वर्थस्य पुष्टिः क्रियते । तथाहि—

न ते भवस्येश भवस्य कारणम्—
बिना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्यया
कृता यतस्त्वय्यभयाश्रयात्मनि ।।[1]

हे ईश ! भवान् सर्वथाऽजन्मा वर्तते, यदि भवतो जन्मनः कारणसम्बन्धविषये किमपि वयं तर्कयामहे, तदेदमेव फलीभूतं भवति यत्तज्जन्म केवलं भवतामस्त्येकं लीलामात्रं विनोदमात्रम् । भवता स्वयं द्वैतलेशवर्जितत्वात् सर्वाधिष्ठानस्वरूपो भवान्, अतोऽस्य चराचरात्मकस्य जगत उत्पत्तिस्थितिप्रलया भवति आरोपिता भवन्ति निःसन्धिबन्धनात्मिकया चिज्जडग्रन्थिस्वरूपयाऽविद्यया ।

हे प्रभो ! यथा बहुवारं मत्स्य, हयग्रीव, कच्छप, नृसिंह, वराह, हंस, राम, परशुराम, वामनावतारान् धृत्वा अस्मान् त्रिभुवनं च भवान् रक्षति, तथैवेदानीमपि भवान् भुवो भारं दूरीकर्तुमनुगृह्णातु । इदन्तु केवलं भवतां लीलामात्रमेवास्तीति न परिश्रमः । तथा चोक्तम्—

मत्स्याश्वकच्छपनृसिंहवराहहंस—
राजन्यविप्रविबुधेषु कृतावतारः ।

१. श्रीमद्भाग० १०/२/३९

त्वं पासि नस्त्रिभुवनं च यथाधुनेश—
भारं भुवो हर यदूत्तम वन्दन ते ॥[१]

अपि च तत्रैव—

"यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि—
तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥[२]

अर्थात् हे प्रभो ? क्रीडनार्थं यानि यानि रूपाणि भवान् बिभर्ति तादृशरूपावच्छिन्नोऽवतरितो भवान् भक्तिभावनाभावितान्तःकरणाना शोकमोहादिरूपं सर्वमप्यावरण दूरीकरोति, येन ते मुदा भवता यशोगानं प्रकुर्वन्ति ।

विष्णुपुराणीयवचनैरपि भगवतोऽवतारः क्रीडनार्थमेव सिद्ध्यति । तथाहि—

मनुष्यधर्मशीलस्य लीला सा जगतः पतेः ।
मन्त्रैव जगत्सृष्टिं संहारं च करोति यः ॥
लीलाजगत्पतेस्तस्यच्छन्दतः सम्प्रवर्तते ।[३]

इत्यादिविष्णुपुराणीयवचनैरपि भगवतो विनोदमानमेवावतरणकारणं निश्चीयते । अपि च—

"लोकवत् लीलाकैवल्यम् ।"[४]

अनेन च बादरायणीयन्यायेन स्तोम प्रागुक्तमभिप्रेतमेव ते सुस्पष्टीकुर्वन्ति ।

केचित्तु तस्य सच्चिदानन्दस्वरूपस्याऽचिन्त्यशक्तिशालिनः स्वयस्वप्रकाशस्य प्रत्यक्चैतन्याभिन्नस्य परात्परपरब्रह्मरूपस्य भगवत. परमेश्वरस्यावतरणे तस्य मायाशक्तिरेव प्राधान्येन हेतुत्वेन निश्चीयते । यथोक्तम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥[५]

अत्रेदमाशङ्क्यते यत् "कर्मणा जायते जन्तु. कर्मणैव विलीयते" इति स्मरणाज्जन्मादिहेतुभूताना पुण्यपापादीनामीश्वरे भावात् कथमीश्वरस्य जन्मादिः स्यादित्यादिशङ्का जीवस्यार्जुनस्य भगवता श्रीकृष्णेन स्वय निराकृता, समाहितंचाऽनेन श्लोकेन । तथाहि—

---

१. श्रीमद्भाग० १०/२/४०
२. तत्रैव १०/४०/१६
३. वि० पु० ५/२२/१४/१८
४. वे० २/१/३३
५. गीता ४/६

भगवान् श्रीकृष्णोऽर्जुन प्रति ब्रूते—हे अर्जुन ? ब्रह्मादीनामन्येषाच भूतानाम-हमेवेश्वरो नियन्ताऽस्मि केवल स्वसन्निधिमात्रेण । अत्र श्रुते: प्रामाण्यमाह—

"एष सर्वेश्वर"[1]

अर्थाद् अयमेवास्ति सर्वेषामीश्वर न तु ममातिरिक्त कश्चिदस्ति नियन्ता नचाऽधिप । अतो नाहमस्मि कस्यापि नियोगविषय । तथाऽजोऽव्ययात्माऽपीश्वरोऽपि च सन्नहमस्मि सर्वथा विकारशून्य (निर्विकार) परमपिता परमेश्वर परमात्मेति। सृष्टिप्रभृतिभूता या काश्चन अपि क्रिया भवन्ति ता सर्वा अपि क्रिया यस्या (प्रकृते) सम्बन्धाज्जायन्ते सैव त्रिगुणात्मिका प्रकृतिर्मम दैवी माया कथ्यते। यथोक्तम्—

"माया तु प्रकृति विद्यान्मायिनन्तु महेश्वरम्"[2]

अपि चोक्तम्—

"ईश्वरस्य महामाया सर्वाज्ञावशवर्तिनी"[3]

इत्थ च स्वस्योपाधिभूतामव्यक्तसज्ञिका मूलप्रकृतिमधिष्ठाय तस्या तत्कार्ये चाऽह' ममे ति भावना विधाय योऽस्म्यहमजत्वादिलक्षण , सोऽहमात्ममायया जन्म धारयामि, अर्थाद् या चास्ति प्रकृत्यपरपर्यायभूता माया तयैवाहू जन्मवान्नतु तात्त्विकदृष्ट्याऽहमस्मि जन्मवान् ।

तथा सति "निष्कल निष्क्रियम्" एवम्, न जायते म्रियते वा कदाचित् इत्यादिश्रुतिविरोधापत्ते । तस्मादहू माययैव देवादिषु जन्म गृह्णामि । तथा चोक्तम—

एको देवो बहुधा सन्निविष्ट<br>अजायमानो बहुधा विजायते ॥[4]

एव तत्पदार्थस्येश्वरस्य जन्मादिक यदि मायिक तदा त्व पदार्थस्य जीवस्यापि जन्मकर्मादिक सर्वमेव मायिक, यतो जीवस्येश्वराभिन्नत्वात् इति सूचित भवतीति भाव ।

मायाशब्द क्वचिच्छास्त्रे हरिसामर्थ्यवाचक "[5]

हरिसामर्थ्यमित्यस्य परमात्मन शक्तिरित्यर्थ । इत्थच प्रागुक्तप्रकारैरापातत परस्पर सर्वथा प्रातिकूल्यमावहद्भि प्राचीनाचार्यचरणै प्रदर्शितनयैराकुलीभूतेऽत्र विषये भक्तिभावनाभावितान्त करणाभिप्रेतचिन्तामणेर्दयालोस्तस्य भगवत सच्चिदानदस्य

---

१. बृहदारण्यकोप, ४/४/२२
२ श्वेताश्वतरोप० ४/१०
३. त्रिपाद्विभूतिमहानारायणोप० ४/१
४. मुद्गलोपनि० ३/१

परमात्मनोऽवतरणे स्वीयाऽनिर्वचनीयशक्तिमत्त्वमेव मुख्यं कारणमित्येव स्वीकरणीयम्-

"पराऽस्य शक्तिर्विविधैव श्रूयते"

इति श्रुत्या नन्दकन्दस्य भगवतः श्रीकृष्णचन्द्रस्य शक्तिस्त्रिविधा ज्ञानशक्तिः इच्छाशक्तिः, क्रियाशक्तिश्च । तत्रेश्वरस्य भगवतः श्रीकृष्णचन्द्रस्यावतारकारणीभूता भवति केवलमिच्छाशक्तिः । इच्छायाः नियमतः सविषयकत्वात् तत्र भगवतः परमात्मनोऽवतरणे इच्छाशक्तिरेव एकमात्रं रमणविषयकतया हेतुभूता भवतीति शास्त्रेषु नितान्तमहर्निशमनुभूयते ।

तत्र रमणस्यापि शास्त्रेष्वेव नानाविधत्वं विलोक्यते । कदाचिज्जननरूपं कदाचित्तत्पालनरूपं, कदाचित्तद्विनाशरूपम् एवं कदाचिच्च योगनिद्रया तत्संहारस्वरूपं चेत्यादिना चतुर्विधत्वरूपं नानाविधत्वमेवानुभूयमानं भवतीति भावः ।

अत्र विषये श्रीमद्भागवते श्रीव्यासमहोदयाः स्वयं कथितवन्तः—

जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥[1]

अर्थात् सृष्ट्यादौ लोकसिसृक्षया भगवान् परमपिता परमेश्वरो महदादिभिः सम्भूतं पौरुषं दशेन्द्रिय, मनः, पंचभूत समन्वित षोडशकलं रूपं जगृहे । तस्य च भगवतः परमात्मनः प्रथमोऽवतारः—विराट् पुरुषः एतदतिरिक्तानि कालः, स्वभावः कार्यकारणे, मनः पंचभूतानि, अहङ्कारः त्रयो गुणाः इन्द्रियाणि, ब्रह्माण्डशरीरम्, एवम् स्थास्नु, चरिष्णु विराट्, स्वराट् प्रभृतीनि सर्वाण्येव रूपाणि तस्यैवाऽनन्तस्याऽनन्तगुणगणभूतस्य भगवतः सन्तीति श्रुतिस्मृतयो घोषयन्तीत्यत्र नास्ति लेशतोऽपि विचारविमर्शावकाशः । तथा चोक्तम्—

आद्योऽवतारः पुरुषः परस्य—
कालः स्वभावः सदसन्मनश्च ।
द्रव्यं विकारो गुण इन्द्रियाणि—
विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥[2]

इत्यादिना शब्दप्रमाणेन सर्वथा विनिश्चितस्य सर्वावतारकारणीभूतस्य सृष्टिसर्जनस्वरूपरमणेच्छाया कारणत्वं प्रतिपादितं भवति । इत्थं च भगवतः सच्चिदानन्दस्य परमेश्वरस्यावतारभूतस्य तस्यैषणं कारणमित्यस्यापि मतविशेषस्याऽत्रैवान्तर्भूतत्वात् पार्थक्येन तत् प्रदर्शनं सर्वथाऽनावश्यकमेव, यतो रमणविषयिण्या इच्छाया ईषणपूर्वकत्वात् ।

---

१. स्कंद १, अ० ३, श्लो० १

२. श्रीमद्भाग० २/६/४१

जगतः स्थितिकाले तत्संस्थापनरूपरमणस्य नानाविधत्वमवश्यमेवाऽनुभूयते शास्त्रेषु। कदाचित् दुष्टानां दुष्टकृतां च समूलोन्मूलनानन्तरं साधुजनानां परित्राणम्, कदाचिद् दुष्टदमनानन्तरं धर्मसंस्थापनम्, एवं कदाचित् स्वकीयया लौकिकया नानाविधलीलया भक्तानां सौकर्यसाधनमेव रमणम्।

इत्थं च तात्विकदृष्ट्या विचार्यमाणे सामान्यतो वर्णितानि प्रागुक्तानि सर्वाण्यपि भगवतोऽवतारकारणीभूतानि मतान्यत्रैवान्तिमे स्वरूपे पर्यवसितानि भवन्तीति वेदितव्यम्।

एवं कतिपयविद्वद्वर्गवर्णितं भृगुमहर्षिप्रभृतीनां शापाविदानमेव कारणं भवति भगवतोऽवतारस्य तदप्येवंविधेन प्रागुक्तप्रकारेण सर्वमपि रमणपर्णमेव भवति भगवत इत्येवाङ्गीकरणीयम्। तथा चोक्तं रामायणे—

तपसाऽऽराधितो देवो ह्यब्रवीद् भक्तवत्सलः।
लोकानां संप्रियार्थन्तु शापं तद्ग्राह्यमुक्तवान्॥[1]

अपि चोक्तमन्यत्र—

"समावर्तेषु वै विष्णोर्जननं स्वेच्छयैव तु।
जरकास्त्रच्छलेनैव स्वेच्छया गमनं हरेः॥
"द्विजशापच्छलेनैवमवतीर्णोऽपि लीलया।"[2]

इत्थं च लीलाकाले गृहनिर्माणानन्तरं क्रीडां कुर्वतो बालकादेः स्वेन स्वयं विरचितगृहादिविनाशनं यथा स्वयं लीलास्वरूपमेव। तथैव प्रलयकाले भक्तानां तदितरेषां च सर्वेषामेव जडचेतनानां स्वात्मनि संहरणमपि साक्षात् अस्ति तदपि लीलास्वरूपमेव। उक्तं च—

लीला जगत्पतेस्तस्य च्छन्दतः सम्प्रवर्तते।[3]

शैवदर्शने भोजराजोक्तिरियम्—

पंचविधं तत्कृत्यं सृष्टिस्थितिनिरोधतिरोभावाः।[4]

एवमेव प्रलयकालतः पश्चात् स्वस्वरूपे योगनिद्राद्वारा याऽवस्थितिर्भवति सा स्थितिरपि रमणस्वरूपत्वात्तदीया लीलैवास्तीति। इदन्त्वधेयं यदिद स्वात्मन्यवस्थानं तत् सर्वथा रमणमेव, नत्ववतरणं तत्।

तथा चेत्थं भगवतः सच्चिदानन्दस्य परमात्मनोऽवतरणे कारणत्वेनाङ्गीकृतानां सर्वेषामेव प्राग्दर्शितानां मतानां खलु यथायथमत्रैवाऽन्तर्भावात् तेषां सम्यक् समन्वयसम्भवेन विरोधाभावेनाऽनन्तगुणगणयुतस्य रसात्मकस्य भगवतः श्रीकृष्णचन्द्रस्याऽवतरणे स्वीयाऽचिन्त्येच्छाशक्तिमत्त्वमेव प्रधानं कारणमिति।

---

१. उत्तररामायणम्
२. लिङ्गपुराणेऽपि
३. विष्णु पु०
४. सर्वद० सं०

## वल्लभ दर्शनम्

श्री वल्लभाचार्यस्य दार्शनिकः सिद्धान्तः "शुद्धाद्वैत" नाम्ना प्रसिद्धोऽस्तीति सर्वेऽपि जानन्ति। त्रयोदश (१३वीं) शताब्द्या श्री विष्णुस्वामिना यस्य 'शुद्धाद्वैत' सिद्धान्तस्य स्थापना[1] कृता, तस्यैव सिद्धान्तस्य साङ्गो विकासः स्वीये दर्शने श्री वल्लभाचार्येणा कारीति सर्वेऽपि विदाङ्कुर्वन्ति तत् सिद्धान्तविद्वासः।

श्री शङ्कराचार्यवत् श्रीवल्लभाचार्योऽपि पूर्णतया द्वैतवादी आसीत्। परन्तु वल्लभाचार्यस्याद्वैत ब्रह्म मायावादिवत् मायाशक्त्यनवच्छिन्नत्वेन "शुद्धब्रह्म" गीयते। अतएवाऽस्य सिद्धान्तः "शुद्धाद्वैत" नाम्ना प्रसिद्धिं गतो वर्तते।

श्रीवल्लभाचार्यो मायाशक्तिमद्वैतसिद्धौ बाधकत्वेनोपन्यस्यति। श्रीवल्लभाचार्यस्येदमस्ति कथन यद् ब्रह्म मायाशक्तिसाहाय्यमन्तरैव जगदुत्पत्तिविधाने सर्वथा सामर्थ्यसम्पन्नमस्ति। श्रीवल्लभाचार्यो भगवतः परमेश्वरस्य मायिकत्वं नाङ्गीकरोति[2]।

एवमेव श्रीवल्लभाचार्य, श्रीशङ्कराचार्यप्रभृतीना दार्शनिकाना ब्रह्म, जीव, जगत्, मुक्तिसम्बन्धिधारणाः सर्वा अपि मतभेदमावहन्तीति।

### ब्रह्म

शुद्धाद्वैतवादसिद्धान्तानुसार ब्रह्म सर्वज्ञ, सर्वशक्तिमत्, सर्वगुणसम्पन्न सच्चिदानन्दस्वरूप चास्ति। ब्रह्मणो निर्गुणतासूचकश्रुतीना सम्बन्धेऽणुभाष्यकारस्येदमस्ति कथन यदेवविधाः खलु श्रुतयो ब्रह्मणो साधारणगुणाना निषेध कुर्वन्ति।

अथ खल्वाचार्या ब्रह्मणो त्रैविध्य वर्णयति।

१. आधिदैविक परब्रह्म,

२. आध्यात्मिकमक्षर ब्रह्म,

३. आधिभौतिक जगद्रूप ब्रह्म।

इत्यचास्मिन् मते चराचरात्मक सर्वमेव विश्वमस्यैव ब्रह्मणो रूप सिद्धयति। अहिकुण्डलवद् द्वयोर्जगद्ब्रह्मणोर्नास्ति कश्चन भेद इति तेषा सिद्धान्तः। आविर्भावकाले यच्चास्ति जगत्तिरोभावकाले तदेवास्ति ब्रह्मेति।

सर्वदाकालावच्छेदेन दुष्टदमनपूर्वकगोविप्रसाधुपरित्राणपरायणोऽनन्तगुणगणयुतो भक्तकामकल्पद्रुमो भगवान् किंचिन्निमित्तमवलम्ब्यैव प्रादुर्भवति। तच्च निमित्त स्वयमेव स्वोपतायामेव गीताया दर्शित भगवता भवता मथुराचन्द्रेण श्रीकृष्णचन्द्रेण—?

---

१. सकलाचार्यमत सग्रहे विष्णुस्वामिमतम्

२. नत भ [illegible] मा [illegible]

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे[1] ।

श्रीमद्भागवतेऽपि—

गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि[2] ॥

इत्यादि भागवतस्यो गीतास्थश्च वचननिचयो भगवदवतरणकारणं निरूप्यतेऽस्माकं प्राचीनाचार्यचरणैः ।

अन्ये च खलु सगुणलीलाप्रदर्शनेन भक्तानां भक्तिवर्धनाय सौकर्मसाधनमेवावतरणकारणमिति वर्णयन्ति, समर्थयन्ति, प्रवलयन्ति च स्वकीयं मतन्ते प्राचीनाचार्यचरणाः । यथा—

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्—
नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयो :—
राविष्टचित्तो न भवाय कल्पते ॥[3]

इतोऽतिरिक्तमिदपि ते वर्णयन्ति प्रमाणम्—

वसुदेवस्य देवक्यां पुत्रतां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥
भारावतारणायान्ये भुवो नाव इवोदधौ ।
सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥
भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥

अपि च तत्रैव पुनः—

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः—
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावक—
भवप्रवाहोपरमं पदाम्बुजम् ॥[4]

---

१. गीता
२. श्रीमद्भाग० ८/२४/५
३. श्रीमद्भाग० १०/२/३७
४. श्रीमद्भाग० १/८/३३-३६

तस्याऽनन्तशक्तिशालिनः परमात्मनोरवतरणे प्राचीनाचार्यचरणानाऽविभिन्नानि मतानि प्रदर्श्यन्ते । तत्र केचन इत्थं वदन्ति, यद् देवकीवसुदेवाभ्यां पूर्वजन्मनि सुतपा, पृश्निरूपेणेदमेव वरदानं प्राप्तं, यद्भवानजोऽपि सन् जगत् कल्याणाय सुरद्विषां च विनाशाय तन्निरूपितं पुत्रत्वं स्वीकरोतु (तथास्तु) इत्युक्त्याङ्गीकृतं भगवता भवता । उक्तमपि—

"पुत्रता याचितोऽभ्यगात्" ॥३३॥

अपरे पुनरित्थं प्रोद्‌टङ्कयन्ति यत् महासागरे समज्जनतां गतस्य पोतस्येव दैत्यानां जनानां भूरिभारेण सीदन्त्याः खल्वस्याः भुवो भारावतारणाय ब्रह्मणा समभ्यर्थितो भवान् अवतरितवान् ॥३४॥

केचन विद्वांस इत्थं समुद्गिरन्ति यत् अविद्याकामकर्मभिः क्लिश्यमानानां जगद्बन्धनग्रस्तानां साधारणजनानां कृते एव श्रवणस्मरणसम्पादनक्षमलीलाविधानविचारतः स्वयमेवावतरति भवान् ॥३५॥

अन्ये च महापुरुषा विद्वांसो गोवर्धनधारिणो भगवतो माधवस्यावतरणे इदमेव कारणं प्रवदन्ति यद् भक्तजनाः खलु भवतो विशुद्धस्य सर्वथा निर्मलस्याऽविगीतस्य च चरित्रस्य श्रवणं गानं कीर्तनं स्मरणं च कर्तुकामाः पूर्णतयाऽऽनन्दिता भवन्ति । अचिरेणैव च तावकं पदाम्बुजं दृष्ट्वा स्पृष्ट्वा च जन्ममृत्युजराव्याधिस्वरूपभवप्रवाहोपरमं समाप्नुवन्तीति भावः ॥३६॥

अपरे पुनर्महाभागा विद्वांसः परमात्मनो विरुद्धेन क्रूरेण च कर्मणा परमसन्तापमापन्नस्य ऋष्यादेरभिशापादिप्रदानमेवावतरणे कारणं प्रवदन्ति समर्थयन्ति च ते स्वीयमभिप्रायम् । तथाहि —

पतिव्रता धर्मपरा हृता येन मम प्रिया ।
स तु प्रियाविरहितश्चिरकालं भविष्यति ॥[1]

अपरे च खलु परमात्मन ईक्षणमेव, ज्ञानमेवावतरणे प्रधानं कारणमिति वदन्ति । निवेदयन्ति च तत्र—

"सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्" ।
तदैक्षत बहुस्यां प्रजायेय[2]

---

१ पुराणीयम् वचनम्
२. छान्दोग्योप० ६/२१

अपि च पुनः—

"आत्मा वा इदमेकमेवाग्रे आसीन्नान्यत् किंचनमिषत्स ऐक्षत
लोकान्नु सृजा इति"[1]

इत्यादिश्रुतिप्रतिपादितयथा स्वीयमभिप्रेतं दर्शितम्।

अन्ये पुनः केचन रमणेच्छैव भगवतोऽवतरणकारणं प्रतिपादयन्ति।

उक्तंच—

"स वै नैव रेमे तस्मादेकाकी न रमते
स द्वितीयमैच्छत्"।[2]

अत्रैव चान्यस्या अपि श्रुतेः प्रामाण्यमाह—

"एको ह वै नारायण आसीन्न ब्रह्मा ने—
शानो नेमे द्यावापृथिवी न नक्षत्राणि
नापो नाग्निर्न सोमो न सूर्यः स एकाकी
न रमते"

इत्यादि सर्वाभिः प्रमाणभूताभिः श्रुतिभिः खलु भगवतो रमणेच्छैवाऽवतरण-कारणं प्रौट्टङ्कितं भवतीति प्रमीयते।

तथा श्रीमद्भागवतेऽपि रमणेच्छाया एव सच्चिदानन्दस्याऽऽनन्दकन्दस्य परमात्मनोऽवतरणकारणत्वं निरूपितम्। तथाहि—

न तेऽभवस्येश ? भवस्य कारणं
विना विनोदं बत तर्कयामहे।
भवो निरोधः स्थितिरप्य विद्यया—
कृता यतस्त्वय्यभयाश्रयात्मनि[3]॥

अपि च तत्रैव—

"यानि यानीह रूपाणि क्रीडनार्थं विभर्षि हि।
तैरामृष्ट शुचो लोका मुदागायन्ति ते यशः[4]॥

१. एतरेयोपनि० १/१
२. श्रुतमात्रम्
३. श्रीमद्भाग० १०/२/३९
४. „ १०/४०/१६

इत्यादिभागवतवचननिचयैरपि भगवतो रमणेच्छाया एव तस्याऽवतरण-कारणत्व निगद्यते । एवमन्यदीय पुराणीयवचनैरपि—

"मनुष्यधर्मशीलस्य लीला सा जगतः पते. ।
मलसैव जगत् सृष्टि संहारच करोति य. ।।
लीलाजगत्पतेस्तस्य च्छन्दतः सम्प्रवर्तते[1] ।।

"लोकवत्तु लीलाकैवल्यम्"[2]

इत्यादिबादरायणीयवचनैरपि प्रागुक्तमेव स्थिरीकरोति । अपरे पुनस्तस्याऽचिन्त्यशक्तिशालिनो भगवत परमेश्वरस्याऽवतरणे तस्य शक्तिरेवास्ति मुख्य कारण-मितिप्रवदन्ति । तथा चोक्तम्—

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।।[3]

एव मायाशब्दोऽपि क्वचित् हरिसामर्थ्यवाचक । सामर्थ्यं चात्र प्रकृते शक्तिरेव ।

इत्थ च साधारणत. परस्परविरुद्धत्वेन प्रतीयमानै प्रागुक्तमतैरस्मिन् विषये भक्तवात्सल्याभिमतचिन्तामणे कृपालो करुणावरुणालयस्य तस्य परमात्मनोरवतरणे स्वीयाऽचिन्त्यशक्तिमत्वमेव प्रधान कारणमित्येव मन्तव्यम् । उक्त च—

"परास्य शक्तिर्विविधैव श्रूयते"

इति श्रुत्यनुसार तस्य भगवत परमात्मन त्रिविधा शक्ति खलु शास्त्रेऽनु-भूयते—

१. "ज्ञानशक्ति" रेका,
२. इच्छाशक्तिर्द्वितीया,
३. क्रियाशक्तिस्तृतीया,

एतासा त्रैविध्यमापन्नाना शक्तीनां मध्ये तस्य परमात्मनोऽवतरणे इच्छाशक्ति-रेवास्ति केवल कारणीभूता, तस्या कारणत्वाङ्गीकारेणैव सर्वपक्षसमन्वय साधु सम्पद्यते, यत इच्छाया नियमत सविषयकत्वेन तस्याश्चात्र रमणविषयकत्वेन कारणत्व सम्पद्यते इत्यह मन्ये ।

---

१. विष्णु० पु० ५-२२-१४-१८
२. ब्र० २/१/३३
३. गीता अ० ४ श्लो० ६

तत्र च खलु विचार्यमाणे रमणस्यापि नाना विधत्वं समायाति।

यथा—

१. "जगज्जनन" स्वरूपम् एकम्,
२. "जगत्पालन" विधानात्मकं द्वितीयम्
३. "सर्गविसर्ग" रूपम् अस्ति तृतीयम्,
४. "योगनिद्रया संहारस्वरूपं चेति" चतुर्थम्

एतेष्वन्यतमं रमणं सच्चिदानन्दस्याऽऽनन्दकन्दस्य परमात्मनो वर्तत एवेति नात्र विवादः। तत्र सृष्टेः प्राक्कालावच्छेदेन तत्रत्यावतारस्य विषये इत्थं वर्णितवान् सूतः—

जगृहे पौरुषं रूपं भगवान् महदादिभिः।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया[1]॥

अपि च पुनः—

आद्योऽवतारः पुरुषः परस्य—
कालः स्वभावः सदसन्मनश्च।
द्रव्यं विकारो गुण इन्द्रियाणि—
विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः[2]॥

इत्यादिना कथितस्य सर्वावतारकारणीभूतस्य सृष्टिसर्जनरूपरमणेच्छैव तत्रावतरणेऽहेतुः। इत्थं च रमणविषयिणीच्छाया ईक्षणपूर्वकत्वनियमेन सच्चिदानन्दस्य परमात्मनः श्रीकृष्णचन्द्रस्याऽवतारस्य तस्येक्षणं हेतुरस्तीति मतमत्राऽऽम्नातम्।

संसारस्य स्थितिकाले संसारसंस्थापनरूपरमणं नानाविधं सत् तत् सम्प्रवर्तते। कदाचित्—

१. दुष्टदमनपूर्वकं साधुपरित्राणमेकम्।
२. क्वचिद्धर्मसंस्थानरूपं द्वितीयम्।
३. कदाचित् स्वलीलया नानाविधया भक्तजनमोविध्यसम्पादनरूपं तृतीयम्।

तथा च प्रागुक्तानि सर्वाण्येव दुष्टदमनादीनि विभिन्नप्राचीनाचार्यचरणैरङ्गीकृतानि सन्ति विभिन्नानि मतानि तान्यत्राऽऽम्नातानि भवन्तीति भावः।

इत्थं च श्रीवल्लभाचार्यमतानुसारं नन्दकुमारिनन्दनन्दनो मथुराचन्द्रः श्रीकृष्णचन्द्र एवेश्वरपदजन्यबोधविषयतां धत्ते। स चायमीश्वरो भगवान् कृष्णः विशुद्धाक्षरब्रह्मरूपत्वेन ज्ञानैकगम्यः। परन्तु पुरुषोत्तमस्य तस्य प्राप्तिरेतन्मतेऽनन्यभक्त्यैव भवतीति।

---

१. श्रीमद्भा० १/३/१
२. तत्रैव २/६/४१

## जीव विचारः

ब्रह्मण. सच्चिदानन्दस्वरूपलक्षणलक्षितत्वेन तदेव तस्य ब्रह्मण. स्वरूपमपि निर्धारित भवतीति सच्चिदानन्दस्वरूप ब्रह्म।

तत्र च ब्रह्मणोऽविकृतसदशतो जडजगतो निर्गमन जायते। एवं तस्यैव चिदंशतो जीवस्यनिर्गमन भवतीति वल्लभदार्शनिका वदन्ति। इत्थ च जीवोऽस्ति अंशभूतो ब्रह्मणः। स्वय च ब्रह्म वर्तते अंशिभूतः। अशस्वरूपतामापन्नो जीवोऽशिस्वरूपाद् ब्रह्मण. सर्वथा साक्षादभिन्न एव।

भेदस्तु केवल परमेश्वरस्य लीलामात्रमादायैव सम्प्रवर्तते। वल्लभवेदान्तिना नये जीवब्रह्मणोरभेदावगाहिनीय विचारधारा रामानुज, निम्बार्कप्रभृतिदार्शनिकाना विचारधारातः सर्वथा वैपरीत्यमेव धत्ते।

अस्मिन् मते जीवो ज्ञाता ज्ञानस्वरूपोऽणुमात्र चास्तीत्यपि विज्ञेयो विषयः। शुद्ध, मुक्त, ससारीति त्रिविधभेदाद्भिन्नोऽय जीवस्त्रिविधकोटिको गण्यते।

## जगद् विचारः

वल्लभदर्शनानुसारं खलु विशुद्ध ब्रह्मैव कारण कार्यं चास्तीति वल्लभवेदान्तिनो वदन्ति। तच्च विशुद्ध ब्रह्म जगत समुत्पादनाथ नान्यद् वस्तुजात साधन वासमपेक्षते। यथा—

> मायासम्बन्धरहित शुद्धमित्युच्यते बुधै.।
> कार्यकारणरूप हि शुद्ध ब्रह्म न मायिकम्॥[1]

ब्रह्मैव खल्वेतस्मिन् मते आविर्भावकाले जगद्रूपता धत्त इति निर्विवादास्पदीभूतोऽय विषय.। अत एव जगदिदमस्माद विशुद्धब्रह्मणो नास्त्यतिरिक्त कथचित्।

प्राचीनाचार्यचरणोऽय श्रीवल्लभाचार्यो जगत्सम्बन्धविषयेऽविकृतपरिणामवादसिद्धान्तमेव सर्वथोररीकरोति मान्यता च प्रयच्छति तत्सिद्धान्तम्।

ईश्वरः खलु स्वेच्छयैव जगतः सर्जन वर्जन विधत्ते।

**वल्लभदर्शने मायास्वरूपविचारः**

शुद्धाद्वैतदर्शनानुसार मायिक जगदिद शाङ्करमायावादानुरूप नास्ति मिथ्याभूतमपि तु सत्यमेव तत्।

अय च श्रीवल्लभाचार्यः स्वतन्त्रमार्गदर्शनपरः खलु मायाया मिथ्यात्वप्रतिपादकदृष्टिकोणत. सर्वथा नास्ति पूर्णतया सहमत.।

---

१. शुद्धाद्वैतमार्तण्ड, २८

श्रीवल्लभाचार्यमते मायाऽस्ति खलु ब्रह्मणोऽपृथग्भूता शक्तिः। नामरूपात्मकं सकलं जगदिदं ब्रह्मणोऽस्ति कार्यरूपम्, एवं प्रकृतिश्चास्ति तदशंभूता।

अत एवैतत् सिद्धान्तानुसारं ब्रह्मणि एवं तच्छक्तिभूतायां मायायां च भेदम्-मन्यमानो वल्लभाचार्या सम्बन्ध नाङ्गीकरोति। यथा "मम माया" इत्यादिवाक्यैरिदमेव प्रतीयते नान्यथा।

श्रीवल्लभाचार्य दर्शनस्योपर्युक्तमाया सम्बन्धिविवेचनत इदं सुस्पष्टं भवति यत् शुद्धाद्वैतसम्मता माया श्रीशङ्कराचार्याऽभिमताऽविद्यार्थप्रतिपादकमायातो भिन्नैवा-स्तीति मन्तव्यम्।

## प्रथम पादः

# मध्वाचार्यमते मायास्वरूपम्

प्राचीनाचार्यचरण श्रीमध्वाचार्यस्य ब्रह्माभिन्नस्य सर्वस्यापि जगतः सत्यसत्ताङ्गीकरणं शांकरमायावादस्य प्रतिक्रियायाश्चरमसीमा वर्तते । अत एव मध्वाचार्यस्याऽद्वैतवाद विचारधाराया शङ्कराचार्यप्रतिपादितमायायाश्छायादर्शनमपि गगनारविन्ददेव परिकल्पित भविष्यति ।

तथापि स्वीयपूर्णप्रज्ञदर्शने (ब्रह्मसूत्रभाष्ये) श्रीमध्वाचार्यः
"मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्"

सूत्रस्यास्य भाष्य प्रकुर्वाणो मायाशब्दस्याभिप्राय. स्वप्नतुल्यत्वेन वर्णितः। महदाश्चर्यमिदमेवास्ति यद् द्वैतवादावलम्बी श्रीमध्वाचार्यः परमात्मनो व्यापकस्याऽनन्तशक्तिशालिनो यास्ति शक्ति सापि परमात्मनो भिन्नैवाऽस्तीत्यङ्गीकृतवान् ।

श्रीमध्वाचार्य. स्वयम् आनन्दतीर्थ, पूर्णप्रज्ञनाम्नाऽपि प्रसिद्धि गत आसीत् इति सर्वेऽपि तत् सिद्धान्तवेदिनो विदन्ति ।

श्रीशङ्कराचार्यो विशुद्ध द्वैत समूल निरस्य, निराकृत्य' निर्विशेषणम् अद्वैतम् अद्वैतसिद्धान्त वा प्रतिष्ठापितवान् ।

श्रीरामानुजाचार्यश्चाऽद्वैत प्रधान मन्यमानो द्वैतमद्वैत विशेषणीकृत्य सविशेषण विशिष्टाद्वैतसिद्धान्त संस्थापयामास ।

तत्र च निम्बार्काचार्यो द्वैतम् अद्वैत च समान मन्यमानो द्वैताऽद्वैतवाद, द्वैताऽद्वैतसिद्धान्त समुपस्थापितवान् इति के न जानन्ति तन्मतवेत्तार. ।

---

१. ब्र० सू० ३/२/३
२. पूर्णप्रज्ञदर्शने ३/२/३
३ "अथात्मव्यतिरेकेण द्वितीय यो न पश्यति ।
ब्रह्मभूत स एवेह वेदशास्त्र उदाहृत"
अपि च—
ब्रह्मैवाह न ससारी ब्रह्मैवाह न मे मन ।
ब्रह्मैवाह न मे बुद्धिर्ब्रह्मैवाह न चेन्द्रियम् ॥
ब्रह्मैवाह न देहो ह ब्रह्मैवाह न गोचर. ।
ब्रह्मैवा ह न जीवाहम् ॥ —तेजोबिन्दूपनि० ६/३३

परन्तु सकलैतत्सिद्धान्तविरुद्धं द्वैतवादसिद्धान्तमेवश्रीमध्वाचार्यो ह्युररीकृतवान् अयं च सिद्धान्तः परमात्मन ईश्वरात् पृथगेव जगतः सत्यतामुररीकुर्वाणो द्वैतवाद-सिद्धान्तमङ्गीकरोति ।

यथा नैयायिकवैशेषिकावपि ईश्वरात् पृथगेव जगतः सत्यतां मन्वाते इति सर्वदा कालावच्छेन प्रसिद्धि प्राप्तोऽयं विषयः ।

तयोर्नैयायिकवैशेषिकयोरिदमस्ति कथनम्—

"तस्माद् यन्नास्ति नास्त्येव यस्त्वस्ति परमार्थतः"

एतेषां मध्वाचार्याणां न्यायवैशेषिकशास्त्राचार्याणां च विदुषां क्वचिदेव स्थल-विशेषमादाय क्वाचित्को भेदः प्रवर्तते नहि सार्वत्रिकः ।

एतावांस्तु विशेषः श्री मध्वाचार्यनये 'अयं सर्पः' इत्याकारकस्य रज्जौ भास-मानसर्पत्वप्रकारकभ्रमस्य मिथ्यात्वं नाङ्गीक्रियतेऽपि तु सत्यत्वमेव निगद्यते तस्य प्रभाकरवत् ।

द्वितीय पादः

## मध्वदर्शने पंचविधो भेदः

१ ईश्वरजीवयोः परस्परं भेदः ।

२. ईश्वराद् जड़जगद्भेदः ।

३. जीवजगद्भेदः ।

४. जीवजीवभेदः ।

५. जड़जडभेदः ।

(१) ईश्वरजीवयोर्द्वयोरेव भिन्नसत्ताकत्वं स्वीक्रियते श्रीमध्वाचार्येण अर्थाद् द्वावेव भिन्नसत्तावन्तावितिति च सघोषं निगद्यते, तथात्वेनानुभूयमानत्वात् । ईश्वरः सर्वज्ञः, सर्वनियन्ता, सर्वशक्तिमांश्च वर्तते । जीवश्चास्ति सर्वथैतद्विपरीत एव, अर्था-दल्पज्ञः, नियन्त्रित स्वल्पशक्तिमांश्चेति द्वावेव परस्परं भिन्नौ ।

(२) यथा जीवेश्वरयोर्भेदः सर्वथा सुस्पष्ट एव; परस्परं विरुद्धधर्मवत्त्वात् तथैव जड़भूतं जगदपि प्रभोः परमेश्वरादस्ति सर्वथा भिन्न एव, वैधर्म्यात् । ईश्वरस्ते-च्चेतनस्तदा जगदचेतनम् । ईश्वरश्चेज्जगदुत्पादकस्तदा भवति जगदुत्पाद्यम् । एकोऽस्ति नियामकश्चेत्तदा भवत्यपरः सर्वथा नियम्यः, एतावांस्तु विशेषः ।

(३) अत्राप्यनयोर्जीवजगतोर्भेदः सुस्पष्ट एव। एको भोक्ता, अपरो भोग्यः, एकश्चेतनोऽपरश्चाऽचेतनः।

(४) जीवानामपि परस्परं भेदः स्पष्ट एव। एको जीवः सुखी द्वितीयश्चास्ति दुःखीति। एको विद्वान् अपरश्चास्ति मूर्खः। जीवानामसंख्यत्वादेको बद्धः बन्धनावस्थां गतोऽस्ति अपरश्च मुक्तः—मुक्तावस्थां गतो वर्तते। इत्येवं रूपेणाऽत्रापि भेदः सुस्पष्ट एव।

(५) जड़जडयोः परस्परं भेदः। यथा कश्चिज्जडपदार्थः स्वल्पकालीनः कश्चिच्च विलम्बकालीनः। कश्चिच्चापभोगकाले सुखं प्रयच्छति कश्चिच्च दुःखमिति भेदस्तयोरपि सुस्पष्ट एव।

प्राचीनाचार्यचरणश्रीमध्वाचार्याणामियं कल्पनाऽऽधिक्येन नैयायिकवद् वैशेषिकवच्च प्रतिभाति। यत्र भेदस्तत्र द्वैतं इति व्याप्तिमाश्रित्यैव आचार्यपादा मध्वमहोदया द्वैतवादं स्थापितवन्तः स्वीकृतवन्तो वा।

अस्मिन् मते पदार्थानां कल्पनापि नैयायिकवैशेषिकवदेव चास्ति। मध्वमते सन्ति दश पदार्थाः। ते च यथा—

१. द्रव्यम्
२. गुण इति
३. कर्म इति
४. सामान्यम् इति
५. विशेष इति
६. विशिष्ट इति
७. अंशी इति
८. शक्तिः इति
९. सादृश्यम् इति
१०. अभावः इति

एवं मध्वाचार्याः प्राचीनाचार्यचरणा यथा दशविधपदार्थान् प्रागुक्तान् परिगणितान् स्वीकरोति; तथैवाऽत्र महानुभावो विंशतिसंख्याकानि द्रव्याणि स्वीकरोति तानि च यथा—

१. परमात्मा इति
२. लक्ष्मीः इति
३. जीवः इति

४. अव्याकृतप्रकाशः इति
५. प्रकृतिः इति
६. गुणत्रयम् इति
७. महत्तत्वम् इति
८. अहङ्कारतत्वम् इति
९. बुद्धिः इति
१०. मन इति
११. इंद्रियम् इति
१२. मात्रा इति
१३. भूतानि इति
१४. ब्रह्माण्ड इति
१५. अविद्या इति
१६. वर्ण इति
१७. अन्धकार इति
१८. वासना इति
१९. काल इति
२०. प्रतिबिम्ब इति।

एतेषां दशविधपदार्थानां विंशतिसंख्याकानांच द्रव्याणां परिगणनमात्रमस्माभिर्व्यधायि न तु विशेषरूपेण खल्वेतेषां विवरणं विशेषतो व्याख्यानं वाऽत्र विधीयते लेखविस्तरभयात्।

तृतीयः पादः

एवमयमाचार्यमहोदयः एकोनविंशत् २९ गुणानङ्गीकरोति। तत्र च चतुर्विंशति-संख्याका. नलु गुणास्त एव सन्ति ये च वैशेषिकदर्शनाभिमताः कणादेन च शब्देन दर्शिताः। तदतिरिक्ताः पंच गुणा अन्येऽपि सन्ति। ते च यथा—

१. शम इति,
२. दम इति,
३. कृपा इति,
४. तितिक्षा इति,
५. सौन्दर्यम् चेति,

एवं मिलित्वा सर्वेऽपि गुणा मध्वाचार्यमते एकोनविंशति २९ संख्याका जायन्ते ।

१. 'विहितम्' इति,

२. निषिद्धमिति च,

तथोदासीनच्च तृतीयम्,

इत्येवं प्रकारेण त्रिविधं कर्म विवेचितमस्ति मध्वाचार्यमते ।

शक्तिस्तत्र चतुर्विधा । तथाहि—

१. एका अचिन्त्यशक्तिः

२. द्वितीया—आधेयशक्तिः,

३. तृतीया सहजशक्तिः,

४ अपरा च पदशक्तिः

(१) इयम् अचिन्त्यशक्तिः परमात्मनि निवासं कुर्वती सती तत्रैव सन्तिष्ठते । इयमेवाऽलौकिकसामर्थ्यरूपा ।

(२) विधिवत् सम्पादितयाऽप्रतिष्ठया प्रतिमाया देवताया यत् सान्निध्यं जायते सैव खल्वस्ति आधेयशक्तिः :

(३) कार्यमात्रानुकूला अर्थात् कार्योत्पादिका या स्वभावरूपा शक्तिः सा परमात्मनः सहजशक्तिः कथ्यते ।

(४) पदपदार्थयोः (शब्दार्थयोः) यास्ति वाच्यवाचकभावरूपा शक्तिः सा पद-शक्तिरभिधीयते ।

**ईश्वरः**

मध्वाचार्यमतानुसार विष्णुरस्ति परमात्मनो रूपम् । स एव खलु परमात्मभूतो भगवान् विष्णुः जगदुत्पत्तेः स्थितेः संहारस्य, नियमन, ज्ञानाऽऽवरणाना बन्धमोक्षयोश्चै-तेषामष्टानामेव विषयाणां वर्तते कर्ता ।

ईश्वरोऽस्ति अनन्तशक्तिशाली अनन्तगुणगणयुतश्च भक्तकामकल्पद्रुमः परमात्म-भूतः दुष्टदमनशीलविप्रसुरादिपरित्राणपरायणः । परन्तु स चेश्वरः संसारमहीरुहस्यास्ति न्यायवैशेषिकवत् निमित्तकारणीभूतः । स चेश्वर एकोऽपि नानारूपेणाभिव्यक्तो भवति । लक्ष्मीः परमात्मन सहचरी तथा शक्तिस्वरूपा च कथ्यते । सा च परमात्मनोऽत्यन्तं भिन्ना सत्यपि पूर्णतया परमात्मनो विष्णोश्चाश्रिता[1] ऽस्तीति निर्विवादमेतत् ।

---

[1] परमात्मभिन्ना तन्मात्राधीना लक्ष्मीः । मध्वसिद्धान्तसारः पृ० २९

जीवः—

जीवः खलु परमात्मनो भिन्नोऽनन्तश्च । सर्वेऽपि जीवा अज्ञान, मोह, दुःख आदिदोषैः सर्वथा युक्ता अपि सन्ति संसरणशीलाः । जीवानां सन्ति तिस्रः कोट्यः ।

यथा—

१. मुक्तियोग्याः

२. नित्यसंसारिणः,

३. तमोयोग्याश्चेति सन्तीत्थं त्रिविधा जीवाः ।

(१) तत्र मुक्तियोग्यतावन्तो जीवाः—देव, ऋषि, पितृ, चक्रवर्तिनस्तथोत्तम-मनुष्या इत्येवरूपेण पंचविधा भवन्ति ।

(२) नित्यसंसारिणो जीवाः सदैव स्वस्वकर्मानुसारं स्वर्ग, नरकादिलोकेषु चरन्ति विचरन्ति च । नहि ते जीवाः कदापि मुक्तिभाजो भवन्ति, नापि भवितुमर्हन्ति ।

(३) तमोयोग्यतावन्तश्च ते जीवाः तृतीयकोट्यन्तर्गता दैत्य, राक्षस, पिशाच, अधममनुष्याश्चेति चतुर्विधा जीवा भवन्ति ।

## चतुर्थः पादः
## निम्बार्कदर्शने मायास्वरूपम्

श्रीनिम्बार्काचार्यस्याऽयमस्ति दार्शनिकः सिद्धान्तो यश्च द्वैताऽद्वैत, भेदाभेद-नाम्ना प्रसिद्धि गतो वर्तते । स चाऽयं श्रीनिम्बार्काचार्यस्य दार्शनिकः सिद्धान्तः श्रीभास्करस्य (८-शताब्द्याः) एवं यादवस्य (११-शताब्द्याः) योऽस्ति भेदाभेदसिद्धान्त-स्तस्यैव विकासमात्रभूतोऽयं सिद्धांतो विज्ञेयः ।

प्रायः यादवस्य शतवर्षानन्तरं श्रीनिम्बार्काचार्यस्य जन्म जातमिति श्रूयते । पुनश्चाऽयमेव समुत्पन्नो महानुभावः खलु भेदाभेदसिद्धान्तस्य लुप्तं समस्तमपि गौरवं प्रतिष्ठितमकरोत ।

जीवजगदीश्वराणां सम्बन्धे श्रीनिम्बार्काचार्यस्य धारणा श्रीशङ्कराचार्यरामा-नुजाचार्याभ्यां भिन्नेवास्ति । इदानीमत्र श्रीनिम्बार्काचार्यसिद्धान्तानुसारमेवैतेषां त्रयाणां विवेचनं वयं प्रकुर्मः ।

---

१. पूर्णप्रज्ञदर्शने ३/२/३

जीवः—

श्रीनिम्बार्काचार्यो रामानुजाचार्यवत् चित्, अचित् ईश्वरः, एतान् त्रीन एव तत्रभूतान् पदार्थान् मनुते। इमानि त्रीणि तत्वानि क्रमशः कर्ता, भोक्ता, भोग्यम्, नियन्ता च भवन्तीति विज्ञेयम्।

तत्र चित् तत्व जीव स्वरूप, तच्च ज्ञानस्वरूपं, प्रज्ञानघनरूपं, स्वयंज्योतिः-स्वरुप, एव ज्ञानमयं चास्ति। इन्द्रियनिरपेक्षो जीव इन्द्रियाणा साहाय्यमन्तरा एव विषयाणा ज्ञानसम्पादने स सर्वथा समर्थ.। आचार्यः श्रीनिम्बार्कः जीवज्ञानयोर्धर्मधर्मि-भाव स्वीकरोति। तत्र जीवो धर्मी ज्ञानंच तद्धर्मः।[१] अत्र जीवस्य स्वरूपभूत ज्ञानम् एव गुणभूत ज्ञान ज्ञानरूपेणाऽभिन्नत्वेऽपि धर्मधर्मिभावदृष्ट्या च तयोर्भिन्नत्वात्। अत एवास्य सिद्धान्तो भेदाभेद, द्वैताद्वैत नाम्ना प्रसिद्धि प्राप्तो वर्तते। द्वैताद्वैतवादिमते जीवस्तथैव ज्ञानस्वरुपो ज्ञानाश्रयश्चास्ति यथा सूर्यस्तस्य प्रकाशश्च।

रामानुजाचार्यवदेव हि निम्बार्काचार्योऽपि जीवेश्वरयोरशाशिभाव स्वीकरोति। अणुपरिमाणवान् जीवोऽशः अशिरूपश्चेश्वरः। ईश्वरप्रसादादेवेश्वरस्य यच्चास्ति सत्यात्मक रूप तस्य ज्ञान जीवस्य भवितु शक्नोति[२] नान्यथा।

एतावास्तु विशेषो यत् जीवस्य मुक्तौ जायमानायामपि जीव. पूर्णतयेश्वरत्व नैव प्राप्तु प्रभवति। जीवश्च सदैवेश्वरस्य नियम्यः, ईश्वरश्च सदा नियन्तैव भवति।

"अह कर्ता" "अह भोक्ता" इत्याकारिका कर्तृत्वभोक्तृत्वप्रकारिका जीवस्य बुद्धिर्मुक्तावस्थापर्यन्तमेवाऽवतिष्ठतेऽतो मुक्तावस्थायामपि निम्बार्कमते जीवस्य कर्तृत्व नहि बाधित भवति।

जगत्—

अचित्स्वरूप जडपदार्थभूत जगत् इति कथ्यते। निम्बार्काचार्यः अचित्स्वरूपस्य जडजगतस्त्रीणि रूपाणि स्वीकरोति। यथा—

१. 'प्राकृत' रूपमेकम्
२. 'अप्राकृत' रूप द्वितीयम्
३. 'कालरूप' तृतीयम्

(१) तत्रमहत्तत्वमारभ्य महाभूतपर्यन्तं समस्तमपि जगत् 'प्राकृत' जगत्

१. द्रष्टव्य वेदान्तपारिजातसौरभम् २/३/२७
२. अत्र द्रष्टव्य —सि— — २

कथ्यते। इय प्रकृतिरपि साख्यवत् त्रिगुणात्मिका वर्तते। परन्तु सा प्रकृतिः न स्वतन्त्राऽपि तु ईश्वरनियन्त्रिता सा।

(२) भगवतो योऽस्ति लोक एवमलङ्कारादयाश्चाऽतदप्राकृत जगदुच्यते। इमे प्रकृत्या प्रकृतिगुणैर्वा न सन्ति खलु विनिर्मिताः।

(३) कालस्य[1] स्वरूपतो नित्यत्वेऽपि कार्यरूपेण तस्य कालस्याऽनित्यत्वमङ्गीक्रियते, इति कार्यत्वावच्छिन्नस्य जगतः कालरूपता सपद्यते सगच्छते च।

**ईश्वरः—**

रामानुजवदेव निम्बार्काचार्येणाऽपि ब्रह्मणः सगुणरूपतैवाऽभ्युपगम्यते। सगुणरूपावच्छिन्नस्य तस्य ब्रह्मण ईश्वरत्वमङ्गीक्रियते।

स चेश्वरः सकलज्ञान, बलप्रभृतिकल्याणगुणानामस्ति निधानभूतः, एवमविद्याविसकलदोषरहितश्चास्तीति तेषां सिद्धान्तः। निम्बार्काचार्यमते कमलनेत्रः सच्चिदानन्दस्वरूपः कल्याणैककन्दो भगवानेवेश्वरः।[2] स च प्रागुक्तलक्षणलक्षितो नारायणस्वरूप ईश्वर, समस्तेऽपि जगति व्याप्तः।[3] परन्तु जीवेश्वरयोर्भेदाभेदसम्बन्धः सर्वस्यामेव दशायां सर्वदा विद्यमानः सन्तिष्ठते।

रामानुजदर्शनानुसारमेवाऽस्मिन्निम्बार्कमतेपि व्यापकस्य परमात्मनोऽनन्तशक्तिशालिनो मत्स्य, कूर्मादिरूपेणाऽवतरण भवति। तच्चाऽवतरण स्वीय परिपूर्णरूप हित्वा किंचिदशे भवेत् सम्पूर्णतया वेत्यन्यदेतत्।

एतस्मिन् मते सृष्टिर्जगद् वा नास्ति कस्यापि विवर्तः, अपि तु 'सूक्ष्मचित्' पदार्थस्य एवमचित्पदार्थस्यास्ति। स्थूलरूपपरिणामविशेषः।

एतन्मतानुसारमीश्वर उपादानकारणमपि वर्तते निमित्तकारण चापीति। ईश्वरस्य चिदचित् शक्तीनां स्थूलरूपेऽभिव्यक्तिस्तदीयोपादानकारणतां सूचयति।

भक्तकामकल्पद्रुम, परमात्मा प्राणिना कर्मानुसार कर्मजन्यफलादीना योजनाया व्यवस्थापकत्वेन निमित्तकारणमपि भवति। यदिद चिदचिदिति पदार्थद्वय वर्तते तद्

---

१. अप्राकृत प्राकृतरूपकच कालस्वरूप तदचेतन मतम्।
मायाप्रधानादिपदप्रवाच्य शुक्लादिभेदाश्च समेऽपि तत्र॥
—सिद्धान्तबिन्दु, श्लो० ३।

२. तत्रैव, श्लोक ४

३. वेदान्तरत्नमंजूषा टीका, सिद्धान्तबिन्दु ६

रामानुजदर्शने यथा ब्रह्मणः शरीरमस्ति तथा निम्बार्कदर्शने तत् परमात्मनः शक्तिद्वयमस्ति ।

रामानुजमते जगतो ब्रह्मणोऽस्ति या विशेषणीभूता प्रकृतिस्तस्याः परिणामभूतमङ्गीकृतं परन्तु निम्बार्कमतानुसार तस्य जगतो ब्रह्मणः शक्तेः परिणामभूतमभ्युपगतम् ।

इत्थं च रामानुजनिम्बार्कौ द्वावेव परिणामवादस्य समर्थकौ स्तः शङ्कराचार्यस्तु एतद्विपरीत विवर्तवाद समर्थयति । इत्यल पल्लवितेन ।

### निम्बार्कदर्शने मायास्वरूपम्

निम्बार्काचार्यस्य मायास्वरूपविचारो रामानुजवदेवाङ्गीकृतो वर्तते, तन्निरूपित सादृश्यमत्र विज्ञेयम् । निम्बार्काचार्योऽपि मायाम् आश्चर्यरूपामङ्गीकृतवान्[1] ।

आचार्यनिम्बार्कस्येदमस्ति कथन यत् सत्यसकल्पः सर्वज्ञो भक्तकामकल्पद्रुम एव भगवान्परमेश्वरः स्वप्नदृष्टरथादिकार्याणामस्ति निर्माता । ईश्वरस्येयं मायिका सृष्टिरत्यन्तमेवाश्चर्यजनिका । अस्या मायिकसृष्टेराश्चर्यजनकत्वम्, आश्चर्यरूपत्व वा सर्वैरेवानुभूयते ।

अस्याः सृष्टेः स्रष्टा नास्ति बद्धो जीवः नापि च भवितुमर्हति । यतस्तावद् बन्धनावस्थाग्रस्तानां खलु जीवाना सत्यसकल्पत्व, सर्वज्ञत्वादिगुणा नहि प्रकाशिता भवन्तीति बन्धनग्रस्तत्वमेव तत्र बाधकत्वेन विज्ञेयम् ।

एतावास्तु विशेषो यत् प्रधानादिपदप्रवाच्या त्रिगुणात्मिका या प्रकृतिस्तादृशप्रकृतिरूपेऽर्थे एव खलु मायाशब्दो व्यवह्रियते[2] व्याह्रियते च निम्बार्कदर्शने इति ।

एवमन्यत्र क्वचित् स्थलविशेषे निम्बार्काचार्यमहोदया इदमपि व्याहृतवन्तः यत् त्रिगुणात्मिकया—प्रकृत्यपरपर्यायभूतया प्रकृतिस्वरूपिण्याऽनादिभूतया च माययाऽऽवृतत्वाज्जीवस्य धर्मात्मक ज्ञान सर्वज्ञत्व, सत्यसकल्पत्वादिप्रयोजकीभूत सर्वमेव विलुप्तं सकुचित च[3] जायते ।

इदमत्रावधेय शाङ्करदर्शने यादृशमिथ्याभूते मायारूपेऽर्थे 'माया' शब्दः प्रयुज्यते नहि तादृशेऽर्थे निम्बार्कदर्शने माया शब्दप्रयोगोऽनुभूयते ।

---

१. वेदान्तपारिजातसौरभे ३/२/३
२. "मायाप्रधानादिपदप्रवाच्यम् सिद्धान्तबिन्दु श्लो० ३
३. सिद्धान्तबिन्दु श्लो० २

सप्तमः अध्यायः

प्रथमः पादः

# कबीरमते गरीबमते च मायास्वरूपं तत्सम्बद्धाऽन्यविचारश्च

भारतीयसाहित्यदर्शने मायाशब्दस्य तदर्थस्य चाऽतीव महत्वपूर्णमस्ति सर्वोत्कृष्टं व्यावहारिकं स्थानम्। अस्ति चायं मायाशब्दः सर्वथा पारिभाषिकः शब्दः इत्यपि समुद्गिरन्ति सन्तः। एतच्छब्दार्थं ऋग्वेदमारभ्य विंशतिशताब्दीपर्यन्तं पूर्णतया निर्मथ्य विचारितवन्तोऽस्माकं प्राचीनाचार्यचरणाः। शङ्करावतारभूतस्य श्रीशङ्कराचार्यस्य यद् दर्शनम् = अद्वैतदर्शनम्—तत्खलु मनीषिणो विश्वस्याऽद्वैतदर्शनं कथयन्ति प्रमाणादीनां सत्वाऽभ्युपगमपुरःसरं समर्थयन्ति, अभ्युपगच्छन्ति च।

तदेव हि दर्शनं मायावाद दर्शननाम्ना व्याहरन्ति च कबीरदर्शितमार्गावलम्बनपरास्तदनुयायिन इति। निर्मलान्तःकरणकरिणो मायाशब्दार्थप्रयोगपारायणपरायणमनीषिणो मायादर्शनस्य समधिककल्याणकामुकाः सन्तस्तदनुसन्धानप्रयोजकीभूतान् कतिपयतदर्थान् दर्शयन्ति कबीरसाहित्यकोविदाः।

तांश्चार्थान् यथा मायाशब्दस्य केचन विद्वांसः खलु धूर्तता, वंचना, स्वप्न, मतिभ्रम, इन्द्रजाल, कपट, प्रभृतिभूतान् व्याहरन्ति। यथोक्तम्—

स्वप्नो नु माया नु मतिभ्रमो नु"[1]।

अपरे च दार्शनिकाः—मनोलीला, आभास, छाया, कल्पना, सृष्टि, प्रभृतिष्वर्थेषु मायाशब्दं प्रयुंजते। यथोक्तम्—

"मायां मयोद्भाव्य परीक्षितोऽसि "[2]।

तथान्ये दर्शनशास्त्रवेत्तारः मायामृग, कूटनीति, राजनीति, अवास्तविक, प्रभृत्यर्थकं मायाशब्दं व्यवहरन्ति।

एवं प्राचीनभारतीयवाङ्मये च प्रयुक्तोऽयं मायाशब्दो विश्वस्य नियामिका

---

१. शकुन्तला० ६/७

२. रघुवंशः २।६२

शक्ति, आस्था, विश्वास, छल, छिद्रादिरूपमर्थं बोधयतीति नानुपपन्नं किमपि ।

अन्ततो गत्वा सन्तकबीरदासः खलु मायायाः पर्यवसान विषयासक्तौ, मृगतृष्णासमाया, विषयतृष्णाया, त्रिगुणात्मकमायास्वरूपे स्त्रीरूपेऽर्थे, कनक, कामिनी प्रभृतिषु नानाविधेषु अर्थेषु कृतवान् कबीरः । भगवता कृष्णेन—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोकस्तस्मादेतत्त्रयं त्यजेत्[1] ॥

कबीरदासोक्तमायारूपतामापन्नाना काम, क्रोध, लोभाना त्रयाणामेव खलु भगवता कृष्णेनापि नरकद्वारत्वं प्रत्यपादि यतः तेषा च पूर्वजन्मकृतनानाविधपुण्यपुंजातिशयवशात् काम, क्रोधादि त्रयाणामेव मनुष्यत्व पुरुषत्व, ब्राह्मणत्व, वेदाध्ययनविषयकृतित्व, विवेकशालित्व, लक्षणलक्ष्यभूतं मुक्तिसौधास्त=मोक्षमहलम् मारूढस्याऽधिकारिणो मुमुक्षोः पुरूपार्थनाशकत्वं प्रमीयते अर्थात् धर्माऽधर्मयोः कर्तव्याकर्तव्ययोः अर्थाऽनर्थयोः, बन्धमोक्षयोर्यदस्ति विवेकविज्ञानं तन्नाशयति मायापरपर्यायभूतं कामादित्रयम् । अतश्चाण्डालमिव कामरूपिणी मायाम् , कृष्णसर्पमिव क्रोधात्मिका मायाम् , मलमिव च लोभात्मिकां मायाम्—एतत्त्रय दूरत एव खलु सन्त्यजेत्[2] ।

इत्थं चाऽस्माकं श्रीरामभक्तिभावनाभावितान्तःकरणोऽय महानुभावः सन्तकबीरदासः कामस्यापि मायास्वरूपता व्याख्यातवान् । यतस्तावत् कामो हि खलु सर्वाधिकप्रबलतमशस्त्रभूतयोषिद्रूपः । सा च तादृशशस्त्रभूता योषित् सर्वातिशयित्वेन महनीभयङ्करभयङ्कराचार्यभूतत्वेन "महाठगिनी" ति निगद्यते सन्तकबीरदासेन, अनुभूयते चापि मादृशैः साधारणमनुजैः ।

अत एव तादृशयोषिद्रूपेयं माया बिडालभूतेत्यपि निगद्यते विदमदिराभगिनीत्यादि च व्याह्रियते व्यवह्रियते सन्तकबीरदासेन । सा च साक्षात्कामरूपिणीति साक्षादहि नरकस्य द्वारभूता कामस्य, नरकमूलत्वात् इत्यपि प्रोट्टङ्कितवान् खलु सन्तकबीरदासः ।[3]

नैतावन्मात्रकथनं पर्याप्तमस्ति मायाविषयेऽपि तु ये सन्ति मौनिनः वीरभावनाभावितान्त करण करिणो बलशालिनः दिगम्बरभूताश्च महात्मानः योगरूढाश्च योगिनः तपोबलशालिनश्च तपोमूर्त्तयस्तपस्विनः आरण्यकाश्च जङ्गमा वेदपारायणपरायणाश्च वेदशास्त्रवेत्तारो वेदपाठिन. । एवं ये केचन अपि सन्ति सेवकाः सेव्यादयश्च राजानो

---

१. गीता १६।२१
२. पश्यन्तु कबीरग्रंथावलि पृ० २२ पद ३६
३. तत्रैव, साखी ३

महाराजाश्च स्वामिनः तेषां सर्वेषामेव गले मोहपाशं सम्पात्य स्वायत्तीकृतांस्तान् अहर्निशमनिशं रमयति कदाचित् विडम्बयति कदाचिच्च विषादयति निर्भर्त्सयति, चेति किं किं नाचरति, सर्वमेवाऽऽचरति सम्पादयति चेत्यपि बोध्यम् ।

कबीरदासग्रन्थावलिग्रन्थेऽयमप्यस्ति विषयो दृष्टिगोचरतां गतः श्रुति गोचरतां गतो वा, यद् एकदा कामरूपिणी योषित्-स्त्री, रूपेयं माया सन्तकबीरदासस्य पार्श्वेऽपि गता, तत्र च गत्वा स्वीयपाशजाले श्री कबीरदासं बध्नातुं कामयमानाऽभूत् ।

परन्तु "पातु मां निःशरण्यं शरण्यो भवान्" इत्यादिरूपेण कीर्तयन्तं, निराकार, निर्विकार, निष्कल, निरंजन, परब्रह्म परमेश्वरं नितान्तं ध्यायन्तं, सच्चिदानन्द आनन्दकन्देत्यादिस्वरूपलक्षणलक्षितं तं संस्मरन्तम् अविद्याकामकर्मभिः विलश्यमानान् जनान् सान्त्वयन्तं सदुपदिशन्तं श्रीरामशरणागतं तं सन्तकबीरदासं विलोक्य ततो विनिवृताऽभूदिति[1] ।

केवलं भगवद्भक्तानां पार्श्वे इयं माया नहि कदापि गच्छति । गच्छति चेत् कदाचित् भ्रमवशात् कारणान्तरवशाद्वा, नैव तेषां किमपि कर्तुं पारयति ।

यद्यपीयं माया सर्वथा दुरत्यया, दृष्टादृष्टविषयसुखतत्साधनसर्वस्वपरित्याग-यमादिद्वारेणैवाऽत्येतुं शक्यते नान्यथा । अत एवाऽस्या मायायाः खलु दुर्जयत्वं लोके शास्त्रे च प्रसिद्धमस्ति ।

तथापि निष्कामभावनया भगवदर्पणबुद्ध्या बहुजन्मस्वनुष्ठितपुण्यात्मकपवित्र-कर्मविशेषैः सर्वथा विशुद्धात्मानः सन्तो ये यतयो मां प्रपद्यन्ते त एव यतयः ईश्वरप्रसादातिशयात् सर्वानर्थकारणीभूतां त्रिगुणात्मिकामेतां मायां तत्कार्यञ्च सन्तरन्ति । अर्थात् सर्वमिदं चराचरात्मकं जगज्जालम् अहञ्च ब्रह्मैवेत्यप्रमाण्यज्ञानानास्कन्दितैकत्वप्रत्ययेन सर्वमपि विपरीत दर्शनलक्षणं विलक्षणं विषयजालं विध्वंसयन्ति । तेषामेव भगवद्भक्तानां पार्श्वे नेयं गच्छति ।

त्रिगुणात्मिकेयं माया क्वचिद योषित्, स्त्रीरूपेण क्वचित् कनक, कामिनी रूपेण क्वचिच्चाऽन्यान्यरूपेण सर्वत्राऽधिष्ठिता वर्तते, एतेनाऽस्या व्यापकत्वमनुमीयते इत्यपि हार्दिक कथनमस्ति श्रीकबीरस्य[2] ।

कमलारूपेण =लक्ष्मीरूपेण, अस्या निवासः पुराणपुरुषोत्तमस्य भगवतो विष्णोर्गृहे वर्तते । भवानी=शिवानी, रूपेणास्या निवासो भवगृहे =शिवगृहे वर्तते । तथा ब्रह्माणीरूपेणास्या निवासो ब्रह्मणो गृहे । एवम् इन्द्राणीरूपेणेन्द्रस्य गृहे, राज्ञीरूपेण

---

१. कबीर ग्र० डा० तिवारी, पृ० ६४-६५

२. द्रष्टव्यं तत्रैव ।

राज्ञा गृहे, महाराज्ञीरूपेण महाराजाना गृहे निवसतीत्यत्र नास्ति लेशतोऽपि विवादः। मायाया बहुरूपता लोके शास्त्रे च प्रसिद्धैव।

इत्थंच तत्तद्रूपेण सर्वत्रैवाऽधिष्ठितेयं माया सार्वत्रिकं सूत्रसंचारं करोति। धनसंपत्ति प्रभृतयोऽपि सन्ति मायापदवाच्यता गता इत्यपि न तिरोहितमस्ति केषामपि विदुषाम्। यथोक्तम्—

कहु कबीर सुनहु रे सन्तों धनसच्यो कछु सगिन।
आई तलब गोपालराई की माया मन्दिर छाडि चल्यौ॥

अपि च पुनः—

धन के अन्धे श्रापि न बूझहु काहि बुझा बहु भाई।
माया कारनि वियाचेवहु जनम अविरथा जाई [1]।

अन्यदप्युक्तम्—

रामनाम करुआ लगै मीठो लागै दाम।
दुविधा में दोऊ गये माया मिली न राम [2]॥

क्वचित् स्थलविशेषेषु मायाशब्दस्य प्रयोग बहुवारं काम, क्रोध, अहङ्कार प्रभृतिष्वर्थेषु कृतवान् श्रीकबीर। यथा चोक्त ग्रन्थावल्याम्—

"माधो कब करिहौ दाया"
काम, क्रोध हंकार वियापै
ना छूटै या माया" [3]

एव आशा, तृष्णा, लोभ, मोह, मान, भ्रान्ति, प्रभृतिष्वप्यर्थेषु मायाशब्दस्य प्रयोग कृतवान् कबीर। इमे सर्वेऽपि विषयाः सन्ति दुःखमया, दुःखास्पदीभूताश्च अत एव भगवान् बुद्धः सर्वमपि जीवनम्, असारभूत वेद जगत् सर्वमेव दुःखरूप "सर्वं दुःख दुःखम्" इत्यादिभावनया भाषितवान्। एतादृशबुद्धोक्तभावनया भावितस्यैव खलु सर्वस्मदुःखरूपतामनुभूतवान् श्रीकबीरोऽपि यथा चोक्तम्—

याके नैन श्रवन पुन थाके—
थाकी सुन्दर काया।

---

१. कबीर ग्रंथावली पद १६५ पृ० ९६
२. तत्रैव
३. कबीर ग्र० पद ३६, पृ० २२

जामन मरना ये दोई थाके—
एक न थाकी माया[1] ।

अत्र स्पष्टतो मायाशब्दो लोभ, मोहरूपमर्थं बोधयतीति पूर्वमपि बहुषु स्थलेषु प्रयुक्तोऽयं माया शब्दो लोभ, मोहप्रभृतिभूतानेवार्थान् बोधयन् खलु समनुभूतः

कबीरस्येदमपि कथन साधु प्रतीयते यत् सर्वोऽपि शरीरधारी, स च योगी भवेत् संन्यासी वा भवेत् जंगमस्तपस्वी वा भवेत्, इतोऽतिरिक्तो वा यः कोऽपि शरीरधारी भवेत् सर्वोऽप्यस्ति सर्वथा दुःखपरिपूर्णः ।

आशा, तृष्णा, काम, क्रोधादिविवर्जिता एव खलु चेतननिवहाः एवम् अहमहमिकया च विवर्जिता एव शुकदेवप्रभृतयः केवलं सन्ति सुखभाजनभूताः । यावत्कालं नहि मनसो वशित्वं सुसम्पन्नं भवति तावत् कालं स्वयं माया,काम, क्रोध, आशा, तृष्णा प्रभृतिमतश्च तदीयः परिवारोऽपि नहि कदापि विश्रान्तिं समधिगच्छति ।

द्वितीयः पादः

कबीरः स्वानुभूतिं स्वयं प्रकाशयति कथयति च यत् कामस्य साक्षात् विग्रहवती नारीलक्षणलक्षितेयं माया, एव धनसम्पत्ति भौतिकसमृद्धि, काम, क्रोध, लोभ, मोह आशा, तृष्णा, अहङ्कारप्रभृतिपरिवारभूता आहोस्वित तत्सहिता चेयं माया मनसश्चापल्यं अशुद्धि, आदिदोषावच्छिन्नात् जनान् दूषयति तद्विपरीतांश्च तान् भूषयतीति सर्वजनप्रसिद्धमेतत् ।

श्रीकबीरः स्वयं घोषयति यदिन्द्रियासक्तं विषयासक्तं वा मनो नहि कदाचित् कथंचित् निराकारं निर्विकारं निर्गुणं निरंजन निर्विशेष नित्यानन्दैकरसम् आकाशवत् सर्वथाऽसङ्गम यायातत्कार्यैःसम्बन्धशून्यम् नित्यशुद्धबुद्धमुक्तस्वभावम् आनन्दैकमूर्तिम् अद्वितीयम ब्रह्म नाधिगन्तुं प्रभविष्यति वेत्यत्र साक्षात् शास्त्रमेव प्रमाणम् तन्मूलिकैव च मदीयान्तः करणवृत्तिरपि प्रमाणम् । तत्र च स्वानुभूतिरेव प्रमाणम् ।

एतत् सर्वमालम्ब्यैव सन्तकबीरः पौनः पुन्येन प्रोद्टङ्कयति-अरे मदीयमुन्मत्त मनः ? त्व विषयाभिमुखताम् इन्द्रियासक्तिञ्च सर्वथा परित्यज्य अखण्डब्रह्माकाराकारितम् एकमात्र भव इति महद्वेव सुन्दरतर समीचीन समुपदिशति सन्तकबीरः ।

अपि च स्वीयं मनः प्रति इदमप्यस्ति तदीय कथनम् । अर्थात् सन्तकबीरः स्वीयं मनः स्वयमेव बोधयति—सम्बोधयति पदे, पदे, यत् अरे मनः ! शरीरमिदं कीटाणवो

१. कबीरग्रंथावलि

भक्षयिष्यन्ति, गंगाधरस्याङ्गभूषणता वा गमिष्यतीत्येवरूपेणास्य शरीरस्य भस्म, पुरीष, रसान्ततामपरिकलयन्तो ये जनाः कामातुरता गताः खलु दृष्टिगोचरता प्रयान्ति ते कामान्धाः सन्तः भवबन्धनग्रस्ता एवाऽहर्निशमनिशं जायन्ते इति मे सुदृढो विश्वासः।

अपि च सन्तकबीरस्येदमप्यस्ति कथन यत् इयमेव माया महावाचिका सती महाप्रतारणकर्त्री सत्येव खलु द्वैत भेद च विदधाति जनयति च। अत एव महाठगनीयं माया।

यथोक्तम्—

> निरगुन फांस लिये कर डोलं बोलं मधुरी बानी
> केशव के कमला होई बैठी सिव के भवन भवानी
> पंडा के मूरत होई बैठी, तीरथ में हू पानी
> जोगी के जोगन होई बैठी राजा के घर रानी
> काहू के हीरा होई बैठी काहू के कौड़ी कानी
> भक्तन के भक्ति होई बैठी ब्रह्मा के ब्रह्माणी
> कहै कबीर सुनो भाई साधो यह सब अकथ कहानी।[1]

### कबीरमतेनाऽऽत्मविचारः

तत्वविवेचनदृष्ट्या सन्तकबीरः अद्वैततत्ववादी आसीदिति श्रूयतेऽनुभूयते च कबीरदर्शनदर्शनेन। यतोऽस्मिन् अद्वैत-दर्शनेऽपि स्फुटत एवोपनिषत् परम्पराऽद्वैततत्व निरूपित भवति। कबीरबीजके अस्य परमतत्वस्योल्लेखः राम अथवा ब्रह्म इत्यनया शब्दानुपूर्व्या मिलति, सोऽप्युल्लेखः केवल व्यवहारसम्पादनार्थमेव वर्तते अर्थात् व्यावहारिकदृष्ट्या सोऽस्त्युल्लेखः न तु पारमार्थिकदृष्ट्या इति।

तात्विकदृष्ट्या विचार्यमाणे इदमेवाऽऽयाति यत् तत् परमतत्व न वाच्यमस्ति न वाचकमस्ति, नापि च तस्य किमपि स्थानमस्ति, नापि च तस्य किमपि पत्रादिप्रेषणसङ्केतमस्ति। एव तत् परमतत्व न च गुणः नचास्ति द्रव्यम्, नापि च तत्रास्ति कोऽपि विशेषः—न्यूनातिशयो वा। एव स्थिते तस्य नाम प्रदानम् अथवा केनचित् नास्य सम्बोधन सविधान केवल व्यवहारसम्पदानार्थमेवास्ति न तु वास्तविक तत्। तत्वत इदमेव फलीभूत भवति यत् परमतत्व न वाचो विषयः, नापि मनसो विषयः। बाह्येन्द्रियाणा विषयता तु दूरायातावर्तते इत्येतासर्वथा निर्वचनीयो नास्ति तत् परमतत्वमित्येव वक्तव्यम्। यतो वाक् लिङ्गरूप परिमाण, मात्रा, भाव, अभाव, सुख, दुःख क्षुधा, पिपासा प्रभृतिद्वन्द्वभूतान् विकल्पान् आश्रित्यैव कस्यचिद् वस्तुनो निर्वचनं भवितुमर्हति।

---

१. कबीरग्रन्थावलि

परन्तु सन्तकवीराभिमतं तत् परमतत्वं सर्वथा निर्विकल्पमिति तत्र प्रागुक्त-द्वन्द्वात्मकविकल्पनावसर एव नास्तीति कथमिदं परमतत्वं वाक् निर्वक्तुं शक्ष्यति अपि च स्वरूपलक्षणानुसारं कबीरब्रह्म सर्वथाऽगमम् अगोचरंचास्ति। यादृशं-चास्ति शङ्करस्याऽद्वैतब्रह्म तादृशमेवेदं ब्रह्मेति विज्ञेयम्। प्रमातृप्रमेययोस्तादात्म्ये ज्ञाते सत्येव खलु ब्रह्मणः पृथक् सत्तैव विलुप्यते। अत एव सर्वं खल्विदं ब्रह्म इत्युक्तिः साधुत्वेन संगच्छते। अत एव च शंकरस्याऽद्वैतमतादविशेषकथनमपि साधु संगच्छते।

इदमपि सन्तकवीरस्य कथनमस्ति यदस्ति पिण्डे तदेवास्ते ब्रह्माण्डेऽपि, यच्च पिण्डे नास्ति तद् ब्रह्माण्डेऽपि नास्ति, सर्वत्र तदेव परमतत्वं समाहितं सन्निविष्टं च वर्तते। ततोऽतिरिक्तं किमपि नास्तीति। अर्थात् सत्यादिलक्षणात् परमेश्वरलक्षणल-क्षितात् तस्मात् परमतत्वात् परतरं किमपि नास्तीति मे मतिः। सर्वत्र तन्तुषु पटवत् सूत्रे मणिवत् परमतत्वसत्तैव वर्तते। सर्वाधिष्ठानभूते तस्मिन् परमतत्वे ब्रह्मण्येव सर्वमिदं चराचरात्मकमव्याकृतादिस्थूलान्तं जगत् ओतप्रोतमस्तीत्यत्र नास्ति कबीर-दर्शने कोऽपि विवादः।

तदेव परमतत्वमप्सु रसस्वरूपं सत् सन्तिष्ठते। अत एव रसकारणीभूत रसत्व-मेतस्मिन् परमतत्वे आपोऽपि परमतत्वात्मना परमत्वैकसत्ताः सत्यः परमतत्वे एव सन्तिष्ठन्ते। मृत्कार्यभूतस्य घटस्य मृत्तिकारूपेण मृत्तिकाया संस्थितिर्यथा प्रत्यक्षसिद्धा मृत्तिकातः पृथक् सत्ता घटस्य नास्ति। तथैव चराचरात्मकमव्याकृतादिस्थूलान्तं सन्ति-ष्ठमानोऽस्तीत्यत्र नास्ति कोऽपि सन्मते विवादो विवादावसरो वा।

एवमेव सर्वेषु वेदेषु ऋगादिषु तत् परमतत्वं प्रणवरूपेण संस्थितिमापन्नमस्ति परमतत्वस्य सर्वात्मकत्वेन प्रणवरूपत्वात्। प्रणवस्वरूपे तस्मिन् परमतत्वे ब्रह्मणि सर्वेऽ-पि वेदाः प्रोताः परमतत्वैकसत्ताका भूत्वा तस्मिन्नेव चेतनभूते परमतत्वे सन्तिष्ठमानाः सन्तीति भावः। इत्थं च कबीरदर्शनदर्शितमिदमात्मभूतं परमतत्वं विपरीतप्रत्ययनिरसन-पूर्वकं द्रष्टृदर्शनदृश्यादिभेदभिन्नम् अर्थात् सर्वथा सर्वतोऽभिन्नमेव सिद्ध्यतीत्यत्र नास्ति विचिकित्सालेशोऽपीति शंकराऽद्वैतब्रह्मणो विशेषत्वमनतिरिक्तंचास्य परमतत्वस्य सिद्ध्यति।

### तृतीयः पादः

## अविद्याया (अज्ञानस्य) तामसप्रत्ययरूपत्वम्

इयं चाऽविद्या तामसप्रत्ययरूपा वर्तते। विपरीतप्रत्ययजनकत्वात्, प्रमादधकार-हेतुत्वाच्च। इयमेवाऽविद्या स्वीयाऽऽवरणशक्तिद्वारा वस्तुभूतस्य ब्रह्मणः स्वरूपभाव-

णोति। अर्थात् आवरणशक्तिसमन्वितेयं माया ब्रह्मणो वास्तविकं निराकारं निर्विकारं, निष्कलं, निर्विशेष, निःसङ्गच यत् स्वरूप तदावृणोति ।

विक्षेपशक्तिसाहित्यावच्छिन्ना चेयं माया पुनस्तस्य ब्रह्मणो वास्तविक साकार, सविकार, सकलं सविशेष सम्बन्धयुक्तं च स्वरूप दर्शयति, अनुभावयति च लोकान् ।

एव नित्य, शुद्ध, मुक्तच ब्रह्मणो वास्तविक स्वरूपमावृणोति आवरणशक्तिसमन्विता चेय माया ।

विक्षेपशक्तितादात्म्यमापन्ना चेय माया तमेव नित्य शुद्ध बुद्ध मुक्त ब्रह्मस्वरूपमात्मानमनित्यम्, अशुद्धम्, अबुद्धम्, बद्धच दर्शयति, अनुभावयति च लोकान ।

अर्थाद् आवरणशक्तिस्तदीय वास्तविकं स्वरूपमावृणोति विक्षेपशक्तिश्च तत्र रूपान्तरम् अर्थात् अवास्तविक भेदसामानाधिकरण्यावच्छिन्न द्वैत समुद्भाव्य दर्शयति तदेव भेदसामानाधिकरण्यावच्छिन्नं द्वैत जगत् । अर्थात् इय विक्षेपशक्तिराहोस्वित् विक्षेपशक्तिसमन्वितेय मायाशक्तिरावरणशक्त्याऽऽवृतमद्वैतरूपेण, प्रपञ्चात्मकजगद्रूपेण, अर्थात् भेदसामानाधिकरणद्वैतरूपेण दर्शयति ।

अविद्याया आहोस्वित् मायाया इयमेवाऽऽवरणशक्तिः स्वप्रकाशस्य चिदात्मनो ब्रह्मणः स्वरूपावबोधे बाधकीभूता भवतीति तत रूपत्रयमिव धत्ते । सहकारिकारणत्वेन प्रयोजकत्वेन अर्थात् कारणतावच्छेदकत्वेन वा । तच्च रूपत्रयम्—

1- अग्रहणम्, आवरण वा,

2- मिथ्याग्रहणम्, विपरीतग्रहणम् वा,

3- विक्षेपः, संशयो वा,

परन्तूपर्युक्त रूपत्रय तदवच्छिन्ना या विशुद्धसत्त्वगुणप्रधानभूतेय माया विशुद्धसत्त्वप्रधानोपाध्यनवच्छिन्नस्य चैतन्य स्वरूपस्य तस्य ब्रह्मण. स्वरूपं नहि लेशतोऽपि विकृत[1] विधातु शक्ष्यतीति श्रुतयः स्मृतयश्च सर्वा एव समुद्घिरन्ति । उक्तंच

अविद्यायाः कृते वस्तुतत्त्वभूतस्य तस्य ब्रह्मणो विकृतत्वसम्पादन मालिन्यसम्पादन वाऽस्ति तादृश एवाऽसम्भवः यादृशश्चाऽसम्भवोऽस्ति मृगमरीचिकाये मरुभूमेः पङ्कत्वापादनम् ।

---

1. क्षुत्पिपासान्ध्यबाधिर्यकामक्रोधादयोऽखिला । लिङ्गदेहगता ह्येतेह्यलिंगस्य न विद्यते जडत्वप्रियमोदत्वधर्माः कारणदेहगा । न सन्ति मम नित्यस्य विद्यते निर्विकारस्वरूपिणः । आत्मप्रबोधोप० २० २४

द्रष्टृजीवरूपेण दृश्यभूतजगद्रूपेण च भासमानस्यास्य विश्वरूपस्य सर्वस्यापि चराचरात्मकस्य प्रपंचस्य महायानसिद्धान्तावलम्बनवत्-आचार्यवदेव श्रीशङ्कराचार्यपादा एवं श्रीगौड़पादाचार्यश्चाप्यसत्वम् अर्थात् मिथ्यात्वं वदन्ति विवदन्ते चात्र बहव इति।

अत एव शङ्कराचार्यग्रन्थेषु सर्वत्रैव खलु विश्वप्रपञ्चस्य निर्देशार्थम् अर्थाज्ज-गतो वास्तविक स्वरूप बोधयितु मृगमरीचिका, रज्जुसर्प, मायानिर्मितहस्ती, स्वप्न, जल-बुदबुद, आकाशतलमलिनता कदलीगर्भ, द्विचन्द्रदर्शन गन्धर्वनगर, तैमिरिकदृष्टिसृष्टमशक-मक्षिकादि माया फेन अलातचक्र शुक्तिरजत केशोण्डुक इन्द्रजालेत्यादीन्युदाहरणानि उदाहरणभूता वा शब्दा. समुपलभ्यन्ते यतो महायानिन आचार्यास्तथा श्रीगौड़पादाचार्यश्चेमान्युदाहरणानि प्रचुरतया[1] प्रयुंजते।

तथापि तेषु ग्रन्थेषूदाहरणरूपेण प्रयुक्तानां प्रागुक्तानामेतेषां शब्दानां यत्र कुत्राऽपिप्रयोगो दृश्यते तत्र सर्वत्रैव तादृशशब्दात्मक. प्रयोगः सर्वथा संस्कृतभाषामय एव, अर्थात् संस्कृतभाषाया एव इद दान (देन)मस्ति, न तु केवल बौद्धदर्शनस्यैव तत्राऽधिकारोऽस्ति, अर्थात् बौद्धदर्शनस्यैवतद् दान(देन) मस्तीत्यत्र नास्ति कश्चन नियम इति विज्ञेयम्।

परन्त्वेतेषा शब्दाना प्रयोगविधानेनेदमवश्य निश्चीयते यद् बौद्धदर्शनप्रभावान्वितोऽयं जन श्रीशङ्कराचार्योऽवश्यमेवाऽसशय प्रतिभातीति मे सुदृढो विश्वासः।

एवं श्रीशङ्कराचार्यकृतिष्वेवंभूतान्यपि स्थलानि मिलन्ति येषां खलु महायानग्रन्थेष्वपि यदि समावेशः स्यात्तदा नास्ति कोऽपि विरोध. नापि च काप्यापत्तिरनुपपत्तिर्वा। उदाहरणार्थं यथा—

आयागमनचक्र जन्मदातृन अव्यक्तादिस्थावरान्तान् व्याकृताऽव्याकृतरूपस्वरूपान् बीजाङ्कुरवत परस्परं जीवानुबन्धनबद्धान् अर्थात् बीजाङ्कुरवदितेरेतरोत्पत्तिनिमित्तभूतान् नानाविधाऽनर्थजड़भूतान् कदलीगर्भवत् सर्वथा साररहितान् माया मरीचिका गन्धर्वनगराकारान् स्वप्न, जलबुदबुद फेन समानत्वेन स्वास्तित्वविहीना प्रतिक्षण ध्वंसशीलान् स्वाऽव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगिनश्च सर्वथाऽविद्याजन्यान् रागद्वेषकामक्रोधादिदुष्टकर्मयुक्तान्, पापपुण्ययुक्ताश्च क्वचिद् द्रष्टृरूपेण क्वचिद् विषयिरूपेण, क्वचिद् दृश्यविषयरूपेण च प्रतीयमानान् सर्वानपि व्यवहारान् विहाय ब्रह्मणि निर्वेदमायात्। तथा चोक्तम्—

१. कठभाष्ये द्रष्टव्योऽयं विषयः १।३।१३ एव २।२।११। एवमूहदारण्यकेऽपि ४।४।६, प्रश्नभाष्येऽपि ६।४

लोकान् संसारगतिभूतान्बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्तान् अनेकानर्थशतसहस्रसंकुलान्, कदलीगर्भवदसारान् मायामरीच्युदकगन्धर्व-नगराकारस्वप्नजलबुद्बुदफेनसमानान् प्रतिक्षणप्रध्वंसान् पृष्ठतः कृत्वाऽविद्याकामदोषप्रवर्तितकर्मचितान् धर्माऽधर्मनिर्वर्तितान् ब्रह्मणि निर्वेदमायात्।[1]

अपि च संसारोऽयमनादिरनंतश्च दुःखस्वरूपत्वाद् हेयश्च। अस्य जननी अविद्या तस्मात् प्रतिक्षणपरिवर्तनशीलः सन् नदीस्रोतवदविच्छिन्नप्रवाहरूपेण नितान्तं प्रचलति। उक्तं च—

संसारेऽनादिरनन्तो दुःखस्वरूपत्वाद् हातव्य।
नदीस्रोतवद् व्यवच्छेदरूपसम्बन्धः।[2]

अपि च—यथा तैमिरिकः पुरुषः खलु दृष्टिदोषरूपकारणवशात् मसर, भ्रमरप्रभृतिश्यामवर्णयुक्तान् पदार्थान् सर्वानेव स्वीयनेत्राणां पुरस्तात् उड्डीयमानानिव पश्यति। अथवा एक एव चन्द्रः खलु द्विचन्द्ररूपेण दृष्टिगोचरतां गच्छति।

एवं यथा स्वप्नद्रष्टा पुरुषस्तूलाविद्यारूपकारणवशादेव स्वप्ने एवाऽनेकरथ-गज तुरङ्गादिसृष्टिं रचयति, अनुभवति बिभेति, कदाचिद् हसति च।

तथैव सांसारिकाः सर्वेऽपि समस्ता व्यस्ताश्च पदार्था अविद्यात्मकदोषरूपकारण-वशादेव भासमाना भवन्ति दृष्टिगोचरतां च गच्छन्ति, नहि तत्र कामपि तात्त्विकतां पश्यन्ति। यथोक्तम्—

एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च भासमाना भवन्ति सर्वपदार्थाः।[3]

अपि च-यथा ऐन्द्रजालिकान्मायासृष्टिर्जायते, तथैव पुरुषात् संसारमाया समुत्पद्यते। उक्तं च—

पुरुषात् संसारमायावृक्षप्रवृत्तिः प्रसृता—
ऐन्द्रजालिकादिव माया॥[4]

अत्रेत्थमपि शास्त्रस्यैव प्रामाण्यं विज्ञेयं यद् यथा स्वयं प्रसारितया मायया मायावी पुरुषः खलु स्वीयमायातः कदाचित् कथंचित् प्रभावितो वा वशीभूतो वा न भवति, कालत्रयेऽपि लिप्तो न भवति, स्वीयमायाविनिर्मितेषु एवं तज्जनितेषु च

१. मुण्डकभाष्यम्, १।२।१२
२. तत्रैव १।२ उपोद्घातः
३. प्रश्नभाष्ये ६।४
४. गीताभाष्यम् १५।४

पदार्थेषु समासक्तिमान्न भवति, नाऽपि च भवितुं शक्नोति, यतस्तदीयतन्मायायाः किमपि नास्ति अस्तित्वम्। स्वयंच तज्जानाति मायावी पुरुषः यदिदं सत्ताविहीना माया किं विधास्यति, किं वा विधातुं शक्ष्यति। सच्चिदानन्दभूतः परमानन्दस्वरूपः परमात्माऽपि त्रिषु कालेषु कदापि संसारित्वसम्पादनकर्तृमायातस्तादृशमायायाँ वा लिप्तो न भवति संस्पृष्टो न भवति, एवं मायावशीभूतो न भवति। तथा चोक्तम्—

यथा स्वयं प्रसारितया मायया मायावी पुरुषस्त्रिष्वपि कालेषु न संस्पृश्यते अवस्तुत्वात्, एवं परमात्मापि संसारमायया न खलु संस्पृश्यते"।

अहर्निशमनिशं वयमिदमेव शास्त्रेषु सर्वथाऽनुभवामो यत्—महायान सिद्धान्ताऽवलम्बिनामाचार्याणां गौड़पादाचार्याणांच कथनस्य वास्तविकं तात्पर्यं जगतः सर्वथाऽसत्सिद्धविधाने नास्ति।

एवं स्थिते मनोवैज्ञानिकश्रीशङ्कराचार्यविषये किं वयं ब्रूमः। एतेषां सर्वेषां प्राचीनाचार्यचरणसाहचर्याविच्छिन्नानां श्रीशङ्कराचार्यप्रभृतीनामप्याचार्याणामुपरि निर्दिष्टशब्दानां प्रयोग विधानं केवलं संसारस्य मिथ्यात्वे एव विज्ञेयम् अथवा संसारस्य पारमार्थिकमिथ्यात्वप्रतिपादनार्थमेव ते आचार्यपादा उपरिनिर्दिष्टशब्दान् प्रयुक्तवन्तः तेन संसारस्य शशशृङ्गवत् वन्ध्यापुत्रवच्च सर्वथाऽसत्त्वं नैव वेदितव्यम् अन्यथा बह्वीनामापत्त्यनुपपत्तीनां प्रसङ्गापादनं स्यात्। यावत्कालमस्माकमस्तित्वं व्यावहारिकतलस्योपरि विद्यमानमस्ति तावत्कालमस्य संसारस्य सत्वमवश्यमेवाऽभ्युपेतव्यम् यतः संसारस्य व्यावहारिकमिथ्यात्वस्य प्रतिपादनं सर्वथाऽसंभव एवेति व्यावहारिका विश्वसत्ताऽकामेनापि बलादभ्युपेया। यश्च श्रीशङ्कराचार्यो भ्रान्तिभ्रमाणां संशयविपर्यासादीनां चास्तित्वं स्वयं स्वीकृतवान्॥ किं संसारस्य सत्ता नाङ्गीकरिष्यते इति स्वयमेवोहनीयमकाट्य तर्कबलात् अनुभवबलात् अनुभवमूलकतर्कबलाच्च।

चतुर्थः पादः

## मायायाः स्वभावस्तद् भेदाश्च

माया नाम मूलप्रकृतिरनादिरनिर्वाच्या चिन्मात्रसम्बन्धिनी सा च माया ब्रह्मचैतन्यान्न भिन्ना ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वेन वस्तुतो मायया ब्रह्मणोऽभिन्ना चैतन्यजडयोरैक्याऽभावात्। नापि माया ब्रह्मणो भिन्नभिन्ना एकत्र भिन्नत्वयोर्विरोधेनासंभवात्।

---

१. शारीरिकभाष्यम् २।१।९

एवं माया न तावत् सती एकमेव द्वितीयं ब्रह्मेति[1] द्वैताभावबोधकोपनिषद् विरोधात्। नापि माया असती असत्या भूतप्रकृतित्वानुपपत्तेः। नापि माया सदसद्रूपा सत्त्वासत्त्वयोरेकत्र विरोधात्।

एवं माया न तावत्सावयवा, मायाया: सावयवत्वे सावयव वस्तुन सादित्वात्सादि माया प्रतिबिम्बितेश्वरस्यापि सादित्वप्रसङ्गात्। नापि माया निरवयवा माया निरवयव पदार्थाना लोके प्रकृतित्वादर्शनेन मायाया निरवयववाचा भूतप्रकृतित्वासंभवात् नापि निरवयवावयववती, सावयवनिरवयवत्वयोरेकत्र वस्तुनि विरोधात्। तस्मात् सर्व प्रकारेण मायाया निर्वक्तुमशक्यत्वात् मायाऽनिर्वाच्यैव स्वीकर्तव्येति।

तस्याश्च मायायाः शक्तिद्वयमस्ति। आवरणशक्तिः विक्षेपशक्तिश्चेति। यथा शुक्त्याद्यवच्छिन्न चैतन्याज्ञानमावरण शक्त्या शुक्त्याद्यवच्छिन्न चैतन्य मावृत्य विक्षेपशक्त्या रजतादिकमुत्पादयति, तथा मायाप्यावरणशक्त्या शुद्धचैतन्यमावृत्य विक्षेपशक्त्या जीवेश्वरादि भेद कल्पयति।

न च मायाया आवरण मानाभाव इति वाच्यम् ब्रह्मस्वरूपानवभासानुपपत्तेरेव तत्र मानत्वात्। न चान्यथानुपत्ति तत्र न तावदिदानी प्रतीचो ब्रह्म भावाभावादनवभासः ब्रह्मैव सन् ब्रह्माप्येति इति श्रुत्या ब्रह्मभावस्य सत्त्वात्। नापि तद्विषयप्रमाणाभावादनवभास, स्वयं प्रकाशस्य तस्यागन्तुकप्रमाणानपेक्षत्वात्। नापि विद्यमानस्यापि तस्य केनचित् मूर्तद्रव्येणावृतत्वादनवभास अत्यन्तमव्यहितस्य तस्याऽऽवृतत्वानुपपत्तेः। तस्मान्मायैवाऽऽवरणशक्त्या ब्रह्मचैतन्यमावृणोति।

माया शुद्धसत्त्वगुणप्रधाना भवति, अविद्यामलिनसत्त्वगुणप्रधाना भवति मायाया प्रतिबिम्बित शुद्धचैतन्यमीश्वर इति व्यपदिश्यते। अविद्याया प्रतिबिम्बित चैतन्य जीव इति व्यवह्रियते। तत्र च मायाया एकत्वादीश्वर एक एव। अविद्याया नानात्वाज्जीवो नाना। अज्ञानमेव शुद्ध सत्त्वगुण मलिनसत्त्वगुणयो प्राधान्याविद्याभेदेन व्यवह्रियते।

केचन तु आवरणशक्तिमदज्ञान माया, विक्षेपशक्तिमदज्ञानमविद्येति कथयन्ति।

---

१. सर्वोपनिषद् ४।
न सती वा नासती वा नोभयात्मा विरोधत।
एतद्विलक्षणा काचित् वस्तुभूतास्ति सर्वदा॥
देवी भागवतपुराणम् ७।३२।४१ अत्र च सेत्यनेन पूर्वश्लोका न्यायायाः परामर्शः
नासद्रूपा न सद्रूपा माया नैवोभयात्मिका। अनिर्वाच्या ततोज्ञेया भेदबुद्धिप्रदायिनी
बृहन्नारदपुराणम्, पूर्वखण्ड ३३।६९ सौर पुराणम् २१।२८ अध्यात्म रामायणम्
१।७।३३, २।१।२२ अनिर्वाच्या सैव माया जगद्बीजम् गणेशोत्तरतापनीयोपनिषद् ४।

## मायाया ईश्वरेण सह सम्बन्धः

माया उपहितत्वसम्बन्धेनेश्वरे वर्तते । मायेश्वरयोः उपाध्युपधेयभावसम्बन्धो वर्तते । सा च माया ईश्वरे न संलग्ना । यथा कर्णशष्कुल्यवच्छिन्न नभ इत्यत्र नभो न कर्णशष्कुल्या संलग्नं भवति । असंलग्नत्वादेवेश्वरो न मायाया वशगः । किन्त्वीश्वरो माया नियमयति । उपाधिर्नाम कार्यानन्वयित्वे सति व्यावर्तकत्वे सति वर्तमानत्वम् । यथा कर्णशष्कुल्यवच्छिन्न नभ इत्यत्र कर्णशष्कुलिर्विवराम्व्यावर्तकत्वे स्वयं विद्यते च, कार्येण सह नान्वयश्च । एवमेव मायाऽपि उदासी-विद्यत इतरान् व्यावर्तयति, ईश्वरेण सह मायाया अन्वयोऽपि नास्ति ।

निर्गुणमेव ब्रह्म यदा मायावच्छिन्नं भवति तदा ब्रह्म सगुणं भवद् ईश्वरसंज्ञा लभते । यदा तु निर्गुणमेव ब्रह्म मायोपाधिकं भवति तदा ईश्वरं साक्षी भवति एक एव हि ईश्वरः मायानिष्ठसत्वप्राधान्यात्, मायानिष्ठरजः प्राधान्यात् मायानिष्ठतमः प्राधान्याच्च विष्णुसंज्ञा महेश्वरसंज्ञा च लभते । तस्मादीश्वरस्येश्वरत्वे मूलं कारणं मायैव । मायी ईश्वरोविश्वं सृजति । माया विना परमेश्वरस्य स्रष्टृत्वं न संभवति । परमेश्वरस्य माया लौकिकस्य मायाविन्न परतन्त्रा विद्यते । ईश्वराश्रितत्वाच्चेश्वराधीनाऽस्ति । स्वस्य मायाशक्त्यैश्वरेण जगत् सृज्यते । ईश्वरस्य जगतो निमित्तोपादानकारणद्वयम् । यथा रज्जुः सर्पाधिष्ठानम्, तथैवेश्वरो जगतोऽधिष्ठानम् ।

## मायाजीवयोः सम्बन्धः

मायाजीवयोरवच्छेद्यावच्छेदकभावः सम्बन्धो विद्यते । मायाऽवच्छेदिका जीवोऽवच्छेद्यो वर्तते । माया विशेषणम् चैतन्य विशेष्यम् । विशेषणं नाम कार्यान्वयित्वे सति यद् व्यावर्तकं भवति तदेव मायाख्य विशेषणम् । यथा रूपविशिष्टो घट इत्यत्र रूपं विशेषणम् घटो विशेष्यः रूपस्य हि घटेन सहान्वयो विद्यते । रूपं च रूपं व्यावर्तयति तस्माद् रूपं विशेषणं भवति । एवमेव मायाविशेषणम् चैतन्यं विशेष्यम् जीवेन सह मायाया अन्वयोऽस्ति । मायाया सम्बन्धादेव मायायाः वशगो जीवो भवति ।

## मायाविषये दृष्टिकोणविचारः

व्यावहारदृष्ट्या विचार्यमाणे सति माया नाम पदार्थान्तरमस्ति यदि माया नाम न स्यात् तदा मन्दान्धकारे रज्ज्वादौ सर्पादि भ्रमो न स्यात् रज्ज्वादौ सर्पादिभ्रमः सर्वजनानुभवसिद्धो विद्यते ।

तार्किकदृष्ट्या अपि माया सर्वथा स्वीकर्तव्या एव । यदि माया न स्यात् तर्हि रज्ज्वादौ सर्पादिभ्रमो न स्यादित्यादि तर्को मायाविषयेऽनुसन्धेयः ।

वस्तुतो विचार्यमाणे माया नाम न हि किमप्यस्ति वस्तु । किन्तु कल्पिता सा इत्येव निश्चीयते । यथा रज्ज्वादौ सर्पादिकल्पना तथैव मायाया अपि कल्पना यथा रज्ज्वादौ विचार्यमाणो परमार्थतो नहि सर्पादिरस्ति तथैव विचार्यमाणे परमार्थतो न मायाऽपि विद्यते माया अपि शुक्तवच्छिन्नस्वरूपमेव । तस्मात् सर्वमेव जगत् अधिष्ठान ब्रह्म चैतन्यस्वरूपमेव । परमार्थतो जगतः सत्ता नैव विद्यते ।

वस्तुतः ईश्वरसंज्ञायाश्रय मूलकारणं माया । परमेश्वरशक्तिः सा च माया एकैव । मायाया एव विक्षेपावरणशक्तिद्वयेन व्यावहारिकदृष्टिकोणेन मायाया एव मायाऽविद्येतिभेदद्वयम् । आवरणशक्तिरविद्यायाः स्वरूपं अविद्यायाः सम्बन्धो जीवेन सह विद्यते । विक्षेपशक्तिर्मायायाः स्वरूपम् । निर्गुण शुद्धं ब्रह्मचैतन्यमेवाविद्योपाधि-द्वारा जीवरूपेण परिणमते । प्रतिजीवं कारणस्य भिन्नतया जीवः परिच्छिन्नोऽल्पो भवति । अन्तः करणस्य भिन्नत्वादथान्तःकरणावच्छिन्नो जीवो नानेति सिद्ध्यति ।

अष्टमः अध्यायः

प्रथमः पादः

# ब्रह्मणो विशेषविवेचनम्

"तमेव भान्तमनुभाति सर्वम्"[1]

"यश्च विश्वं सृजति विश्वं बिभर्ति विश्वं भुङ्क्ते स आत्मा।"[2]

इत्यादिना विश्वसृजनकर्तृत्वेन, विश्वभर्तृत्वेन, विश्वावभासकत्वेन यो ब्रह्मलक्षणलक्षित आत्मा शास्त्रेषु निर्दिष्टः स चिदात्मकः अचिदात्मकः, चिदचिदुभयात्मको वेति जिज्ञासा तावज्जायते। यदि चाऽचिदात्मकः स इत्युच्यते तदा मयोच्यते नहि भावत्कीयमुक्तिः समीचीना प्रतिभाति। यतः सर्वदाऽस्माभिरनुभूयते यादृशं कारणं भवति, तेन तादृशमेव कार्यं समुत्पद्यते। यथा श्वेततन्तवः श्वेतपटं समुत्पादयन्ति, रक्ताश्च तन्तवो रक्तं पटम्, इत्येवरूपेण कारणानुगमोऽनुभूयते सर्वत्र कार्येषु। तथैव खल्वचिदात्मकात् ब्रह्मणोऽपि अचिदात्मक जडभूतं जगदिदं जायते इत्यत्र नास्ति कोऽपि विचिकित्सावसरः।

ननु ब्रह्माण्डस्तम्बभूतस्य प्रभूतस्य जगदात्मकस्य सर्वस्यापि कार्यस्योभयात्मकत्वानुभवेन कथं खल्वचितो ब्रह्मण एवंविधं कार्यं भवितुं प्रभवतीति वाच्यम्। एतादृशशङ्कानिराकरणेच्छयैव खलु सर्वत्र कारणेषु कश्चन शक्तिविशेषः कल्प्यते, येन शक्तिविशेषेणाऽचेतनाद् गोमयाद् यथा वृश्चिकश्चेतनः समुत्पद्यते, तथैवाऽचितोऽपि ब्रह्मणश्चिदचिदुभयात्मक प्रपञ्चभूतं प्रभूतं जगदिदं जायते इत्यत्र नास्ति कापि विप्रतिपत्तिरित्यलं खलु प्रागुक्तमसत्तर्कजालस्वरूपवाग्व्यवहारविस्तारेणेति चेन्न।

ईक्षत्यधिकरणन्यायेन 'सोऽकामयत' 'तदैक्षत'[3]

'चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम।'[4]

---

१. कठोप० ३/२/१५

२. शाण्डिल्योप० २

३. छान्दोग्योप०

४. बृहदारण्यकोप०

आनन्दत्वान्न मे दुःखमज्ञानाद्भवति सत्यवत्"॥[1]
एवम् 'चिदेकत्वपरिज्ञाते न शोचति न मुह्यति'[2]
'विज्ञातारमरे केन विजानीयात्'।[3]

इत्यादि श्रुतयश्चेतनस्यैव जगत्कारणत्वं प्रतिपादयन्ति समर्थयन्ति चेति नाऽचेतनस्य कथमपि जगत्कारणत्वं वक्तुं शक्यते, अचेतनस्य परमार्थतः सर्वथा मिथ्यात्वात्। मिथ्याभूतस्य कस्यापि खलूभयात्मकजगदुत्पादकत्व नानुभवगोचरीक्रियते।

अपि च चिदचिदात्मकस्य ब्रह्मणो जगत्कारणत्वे निःसम्बन्धत्वे नित्यसम्बन्धत्वे च सति ब्रह्मणश्चिदचिदात्मकत्वं वेति संशयोऽपि स्यात, यतः सम्बन्धमन्तरा तयोरवस्थानानुपपत्तिदर्शनात्।

अपि च भावाऽभावयोः परस्परं विरोधेन नैकस्य ब्रह्मणश्चिदचिदुभयात्मकत्वं कथमपि स्वीकर्तुं शक्यते। जगत्कारणतावोधकश्रुतिषु सर्वत्रैव सच्छब्दवाच्यस्य चिदात्मकस्यैव ब्रह्मण उपक्रमोपसंहारादिना जगत्कारणत्वं श्रूयते निश्चीयते च प्रमात्वेन। इत्थं च—

"सदेव सोम्येदमग्र आसीत्।"[4]

इत्यादिना—

छान्दोग्योपनिषदि उपक्रम्य, उपसंहारे च,
"ऐतदात्म्यमिदं सर्वं स आत्मा तत्सत्यम्?"[5]

इत्यादिना जगत्कारणीभूतस्य ब्रह्मणश्चेतनत्वं सत्यत्वं च प्रतिपाद्य, अन्ते 'तत्त्वमसि'[6] 'अहं[7] ब्रह्मास्मि' 'अयमात्मा ब्रह्म'[8] 'सर्वं[9] खल्विद ब्रह्म नेह नानास्ति किंचन' 'एकमेवाद्वयं[10] ब्रह्म नेह नानास्ति किंचन।" इत्यादि श्रुतिभिः सर्वाभिरेव ब्रह्मण एकत्वम्, अद्वितीयत्वम्, तादात्म्यं च प्रतिपादितं भवति।

---

१. आत्मप्रबोधोप० ३०
२. ब्रह्महृदयोपनि० ३४
३. बृहदारण्यकोप० २/४/१४
४. छा०उ० ७/२४/१
५. तत्रैव,
६. तत्रैव, २/८/७
७. बृ० उ० १/४/१०
८. तत्रैव, ४/४/१९
९. निरालम्बोप० १५
१०. अध्यात्मोप० ६३

एवमन्यत्रापि 'अहमेव[1] परं ब्रह्म', 'आत्मैवेदं सर्वम्[2] ब्रह्मैवेदं[3] सर्वम्', 'अहमेव[4] हरिः साक्षादहमेव सदाशिवः' 'आत्मा[5] वा इदमेक एवाग्र आसीत्' इत्यादि-श्रुतयोऽपि तस्यैव ब्रह्मणश्चिदात्मकत्वं प्रतिपादयन्ति, नाऽचिदात्मकत्वं नापि च चिदचिदुभयात्मकत्वमिति : एवमेव 'प्रज्ञानं[6] ब्रह्म' इत्यनेनापि वेदवाक्येन सुस्पष्टमेव चिदात्मकत्वं ब्रह्मणः प्रतिपादितं भवति ।

एवमेवाऽन्यत्र सर्वत्रैवोपक्रमे सत्तयाऽसत्तया वा संशये जायमाने उपसंहार-वाक्यादेव तत्र तन्निश्चयो विधीयते इति युक्तमुत्पश्यामः ।

अत एव मीमांसाशास्त्रस्याऽन्तिमे भागे इदं सूत्रं वर्तते 'सन्दिग्धे तु वाक्यशेषात्[7]' इति अस्मिन् सूत्रे 'अक्ता शर्करा उपदधाती' इत्यत्र तादृशवाक्यसमनन्तरश्रुतेन 'तेजो वै घृतम्' इति वाक्यशेषेण विधीयमानया घृतस्य स्तुत्या खल्विदं निश्चीयते यद् घृतेन किमपि विधेयम् । किं विधेयं, किं कर्तव्यमिति कर्तव्यताकाङ्क्षायां पूर्वमंजनं कर्तव्यमिति समभ्युपगतं भवति ।

केनेति करणाकाङ्क्षायां समुपस्थितायां सत्यां किमपि द्रवीभूतं द्रव्यमेवान्वेति साधनत्वेन । इत्थंच नष्टाश्वदग्धरथन्यायेन द्वयोरेव परस्परं सम्बन्धात् द्रवद्रव्येण घृतेनैवां-जनं कर्तव्यं नहि खलु तैलादिनाऽञ्जनं कर्तव्यम् ।

तथैव प्रकृतेऽपि ब्रह्मस्वरूपमात्मानमुपक्रम्य तमेवाऽऽत्मानं चेतनत्वेन अचेतनत्वेन वा सत्त्वेनाऽसत्त्वेन वा संदिह्य स आत्माऽन्ते चोपसंहारे 'सच्चिदानन्द मात्रोऽ[8] हम्' । 'सच्चिदानन्दरूपमिदं[9] सर्वम्' । इत्यादि श्रुतिबलेन सच्चिदानन्दस्वरूपं स्वकीयं स्वरूप-लक्षणं प्रकाशयतीति तस्यैतादृशलक्षणलक्षितस्य ब्रह्मणः प्रागुक्तमुभयलिङ्गत्वं नैव कदाप्याशङ्कनीयम् । अत एव भगवान् बादरायणोऽपि खल्वस्याऽद्वैतस्य ब्रह्मण उभय-लिङ्गत्वं निराकृतवानुभयलिङ्गाधिकरणे प्रकरणे विशदीकृतं रूपं तत्रैवाऽनुभूयताम् ।

---

१. तेजोबिन्दूपनिषत् ६/४४
२. छान्दोग्योप० ७/२५/२
३. बृहदारण्यकोपनि० २/५/१
४. तेजोबिन्दूपनि० ६/६४
५. ऐतरेयोपनिषत् ४/७
६. तत्रैव ५/ ३
७. मीमांसादर्शने ६/१७
८. अध्यात्मोपनि ६३
९. नृसिंहोत्तर तापनीयोप० ७,—छां० उ० ७/२५/१ ।

एवम् 'एकमेवा'ऽद्वितीयम्', 'अहमेवेद[2] सर्वम्' 'अहमेव[3] जगत्सर्वम्', 'न तु तद्द्वितीयमस्ति[4]' तथा 'निर्विकारे निराकारे निर्विशेषे भिदा कुतः[5]', अपि च—

'अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्ध. सत्यो
मुक्तो निरंजनो विभुरद्वयानन्द, परः प्रत्यगेकरसः'[6] ।
'सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन'[7] :
'एकमेवाऽद्वितीय नेह नानास्ति किंचन'[8] ।

इत्यादिश्रुतीना प्रामाण्याद् ब्रह्मातिरिक्तस्य सर्वस्यैव स्वाश्रयनिष्ठाऽत्यन्ताभाव-प्रतियोगित्व' रूपमिथ्यात्वकथनेन स्वगतभेद-सजातीयभेद-विजातीयभेद-त्रयशून्यमखण्डमद्वैतं ब्रह्मैं वाऽवतिष्ठते ।

स चाऽस्य भेदोऽविद्याकृतो भेदः । सर्वस्यापि ब्रह्मादिस्तम्बपर्यन्तस्य चराचरात्मकस्य प्रपचभूतस्य प्रभूतस्यापि जगतोऽविद्याकृतत्वेन सर्वेषामेव नैयायिक, साख्य, पूर्वमीमासक, प्रभृतीना दार्शनिकाना तथाऽन्येषामपि सर्वेषामेव व्यावहारिकजनाना सर्वथा सर्वदाकालावच्छेदेनाऽभीष्टेन द्वैतनिरूपितव्याप्यवच्छिन्नेन भेदेन व्याप्तत्वमेवाऽनुभूयते ।

तत्र घटस्य कपाल, कपालिकादिभिश्च यो भेदः स स्वगतो भेदः। एव घटस्य तन्त्वादिभिश्च यो भेदः सोऽपि स्वगतो भेदः । एव वृक्षादीना वृक्षान्तरेभ्यो योऽस्ति पारस्परिको भेदः स सजातीयो भेद उच्यते । एव घट, पटादीना घटान्तरेभ्यः पटान्तरेभ्यश्च योऽस्ति भेदः सोऽपि सजातीयो भेदः। एव वृक्षाणा वृक्षस्य वा शिलादिभ्यः वा यो भेदः स विजातीयो भेदः ।

प्रकृते च स ब्रह्मस्वरूप आत्मा स्वरूपतोऽस्ति भेदत्रयशून्यः । अतः 'एकमेवाद्वितीय ब्रह्म' इत्यत्र श्रुतिघटकीभूतेनैकपदेन स्वगतभेदनिरासो विज्ञेयः। यत 'एक' पदेनाऽवयवशून्यत्वरूप निरवयवत्व विवक्षित भवति ।

१. अध्यात्मोपनि० ६३
२. नृसिंहोत्तरतापनीयोप० ७
३. तेजोबिन्दूपनि० ६/४३
४. बृहदारण्यकोपनि० ४/४/२३
५. अध्यात्मोपनि० २२
६. नृसिंहोत्तरतापनीयोप० १
७. निरालम्बोप० २५
८. अध्यात्मोप० ६३

एवं तत्रैव श्रुतिघटकीभूतेन 'एव' शब्देन च सजातीयभेदनिरासो बोध्यः। यतस्तत्रैवकारेण ब्रह्मनिरूपितं साजात्यं व्यवच्छिद्यते। अर्थात्तत्सजातीयः कोऽपि नास्तीत्यर्थः। तथा श्रुतिघटकीभूतेन द्वितीयशब्देन च विजातीयो भेदो निराक्रियते। यतो ब्रह्मणो विजातीयो द्वितीयो, नास्ति कश्चित् येन विजातीयभेदो ब्रह्मणि सन्तिष्ठेत।"अतो भेदत्रयशून्यत्वरूपमखण्डत्वं ब्रह्मणि सुतरामेवाऽऽभाति। इत्थंच समस्तस्याऽविद्याकृतभेदस्य निरस्तत्वेन तादृशभेदाप्रतियोगित्वं तस्य सुतरामेव सिद्ध्यतीति सर्वं सुस्थिरं भवतीति भावः।

अपि च—

'सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम्।
प्रपंचाऽऽधाररूपेण वर्ततेऽतो जगन्नहि[1]॥'

"जगद्रूपतयाऽप्येतद् ब्रह्मैव[2] प्रतिभासते।"
"घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः।

जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम्[3]।"
"ब्रह्मैवेदं विश्वमिदं वरिष्ठम्[4]।"

"न तु तद्द्वितीयमस्ति[5]।"
"अहमेव जगत्सर्वम्[6]।"
"एकमेवाऽद्वयं ब्रह्म[7]।"

अन्यच्च—

"उपादानं प्रपंचस्य ब्रह्मणोऽन्यन्न विद्यते।
तस्मात् सर्वप्रपंचोऽयं ब्रह्मवास्ति नचेतरत्[8]।"
"ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन[9]।"

---

१. आत्मप्रबोधोपनि० १२
२. आत्मोपनि० २
३. योगशिखोपनि० ४/१८
४. मुण्डकोपनि० २/२२१
५. बृहदारण्यकोप० ४/४/२३
६. तेजोबिन्दूप० ६/४३
७. अध्यात्मोप० ६३
८. योगशिखोपनि० ४/३
९. तेजोबिन्दूपनि० ३/१२

इत्थञ्च प्रागुक्ताभिः सर्वाभिरेवाऽद्वैतबोधकश्रुतिभिः साक्षात् कण्ठत एव निरस्तसमस्तभेदवतीभिः सर्वथाऽद्वैतं ब्रह्म सिद्ध्यतीत्यत्र नास्ति कोऽपि विवादो विचिकित्सावसरो वा ।

अवच्छेदकभेदेनापि तस्य चिदचिदुभयात्मकत्वम्, अचिदात्मकत्वं वा नोपपादयितुं शक्यते ।

## द्वितीयः पादः

### आत्मनिरूपणप्रसङ्गसङ्गत्या माया निरूप्यते

यथा घटाकाराऽऽकारिताऽन्तः करणवृत्तिर्घटविषयकमज्ञानं विनाशयति । यथा वा महान् दीप्तो वह्निः शुष्कमार्द्रं च काष्ठं सर्वथा निर्दहति । तथैवाऽखण्डब्रह्माकाराकारिताऽन्तःकरणवृत्तिरपि ब्रह्मविषयकमज्ञानं सर्वथा समूलञ्च विनाश्य तादृशाऽज्ञानजन्यं जगदात्मकं कार्यम्, एवं प्रारब्धकर्मातिरिक्त सर्वमपि शुभाशुभात्मकं कर्म, तज्जन्यं च सांसारिकबन्धनसम्पादकं तत् सम्बन्धमपि विनाशयति । उक्तंच—

'यथा वह्निर्महान् दीप्तः शुष्कमार्द्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहते क्षणात्[१] ।"

अपि च—

देहे ज्ञानेन दीपिते बुद्धिरखण्डाकाररूपा यदा
भवति तदा विद्वान् ब्रह्मज्ञानाग्निना कर्मबन्धं निर्दहेत्[२] ।"

अपि च— "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे[३] ।"

एवम्— "सञ्चितं विलयं याति प्रबोधात् स्वप्नकर्मवत्[४] ।"

इत्थञ्च कर्मजन्य सम्बन्धविनाशे सत्येव सत्, चित् आनन्दलक्षणलक्षित केवल स्वयं ज्योतिर्ब्रह्मैं वाऽवतिष्ठते । वेदस्यान्तिमे भागभूते वैदिकसिद्धान्ते तदेव सच्चिदानन्दरूपं ब्रह्मतत्त्वं निरूपितम् । ततोऽतिरिक्तं सर्वमेव दृश्यमानं पदार्थभूतम् अनित्यकार्यस्वरूपम्, 'इन्द्रो मायाभिः पुरुरूप ईयते ।[५]

---

१. शिवधर्मोत्तर
२. पैङ्गलोपनि० ४/११
३. मुण्डकोपनि० २/२८
४. अध्यात्मोप० ५०
५. वेदान्तसारप्रभृतिषु

इत्यादिश्रुत्या मायिकं च ।

माया चाऽऽपाततश्चिद्भिन्नत्वेन प्रतीयमानापि न सती, नाप्यसती, नोभयात्मिका, नाप्यनुभयात्मिका सा । अत एव साऽनिर्वचनीया मिथ्याभूता सनातनी विज्ञेया ।

सत्वेन, असत्वेन, उभयरूपेण, अनुभयरूपेण च सर्वथा निवक्तुमशक्येयं माया ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सति पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगिनी भवति । अत एव मिथ्यापि भवति ।

तद्भिन्नत्वे च सर्गप्रारम्भे चिद्भिन्नतया कस्यापि प्रतिज्ञाभावाद् द्वैतापत्तिः स्यात् ।

न च तथाविधत्वाङ्गीक्रियमाणेऽपि तस्य चेतनस्य कारणताया आपत्तिसम्भवेन चितो विकारित्वापत्तिः स्यादिति वाच्यम् । फलाभावाभिप्रायेण सर्गस्यापि त्रैकालिकनिषेधप्रतियोगित्वेन मिथ्यात्वाऽभ्युपगमात् ।

ब्रह्मसाक्षात्कारानन्तरं हि सर्वथा बाधदर्शनात्

एवम्—   'दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत्'[1] ।"

इतिश्रुत्युक्तदिशा च ब्रह्मातिरिक्तस्य सर्वस्यापि बाधितत्वेन सर्गस्यापि बाधितत्वमनुभूयतेऽतः सृष्टिर्नास्त्येवेत्येव वक्तव्यम् । अथवा सृष्टिस्वीकारेऽपिमहि तस्याः सृष्टेः किमपि फलमनुभवामः ।

न च विश्वजिन्न्यायेन दुःखप्राप्तिरेव फलं कल्प्यतां सर्गस्य स्वयं दुःखहेतुत्वात्, "सर्वं दुःखं विवेकिनः" इत्यभियुक्तोक्तेः सर्वस्यापि चराचरात्मकस्य प्रपञ्चभूतस्य प्रभूतस्य जगतो दुःखरूपत्वात्, सर्वथाऽस्मदनुभवाच्चेति वाच्यम् ।

दुःखत्रयाभिघाताज् जिज्ञासा तदपघातके हेतौ"[2] । तथा "प्रमाणादीनां तत्वज्ञानान्निःश्रेयसाधिगमः" इत्यादिशास्त्राणां सर्वेषां दुःखपरिहाराय प्रवृत्तानां तथात्वे प्रतिज्ञाहानिरनुभवात्, शास्त्रेषु सर्वेषामनाश्वासप्रसङ्गाच्च ।

तावतापि तस्या मायाया एवोपादानत्वं स्वाक्रियता न तु चित इत्यापत्तिः स्यात् । भवतु नाम आपत्तिः—"न तस्य कार्यं कारणं च विद्यते" "मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" इत्यादिश्रुत्या तस्या मायाया एव रज्जुसर्पवदुपादानत्वं चितश्च ब्रह्मणो विवर्ताधिष्ठानत्वाङ्गीकारात् ।

---

१. तेजोबिन्दूपनि० ६/२९
२. सांख्यकारिका १ श्लोक
३. प्रामाण्यवादः प्रारम्भ एव

अपि च 'रज्जुसर्पवत्' इति प्रागुक्ते दृष्टान्ते यथा रज्ज्वच्छिन्न चैतन्यनिष्ठा-ज्ञानपरिणामः सर्पः, तथैव दार्ष्टान्तभूते प्रकृतेऽपि खलूपादानकारणत्वं मायायाश्चेतनस्य तु ब्रह्मणो विवर्ताधिष्ठानत्वमेवेति निश्चीयते । यतः सर्वत्र भ्रमस्थलेषु दृष्टान्तभूतेषु नहि सादृश्यादेः कारणत्वं भवति किन्तु सर्वत्रानुगतं कारणमधिष्ठानाज्ञानमेवेत्यह-र्निशमनिशं वयं स्वयमनुभवामः ।

इत्थं च एव स्थितेऽघटनाघटनपटीयस्या अज्ञानापरपर्यायभूतायाः प्रभूताया मायाया खलु किं दुःशकमस्ति । यतः दुष्टदमनगोविप्रसाधुपरित्राणपरायणसाधारण-कारणीभूता तथा सत्त्वगुणप्रधाना सेयं माया यदा जगन्नियन्तुर्जगदीश्वरस्यापि निर्माणं विधत्ते तदा तयाऽन्येषां हिरण्यगर्भप्रभृतीनां कां कथां वयं कथयामः । यथोक्तम्—

"माया भासेन जीवेशौ करोति"[1]

अर्थात् सा मायाऽघटनाघटनपटीयसी सती ईश्वरं जीवं च निर्माति । "तस्मा-देतन्नाम रूपमन्नञ्च जायते" इति श्रुतेस्तद्द्वाराऽऽब्रह्माण्डस्तम्बपर्यन्तं सकलमेव प्राचीना-र्वाचीनपरिपाटी सदाचारादिप्रदर्शकनिबन्धविभूषितमचिन्त्यरचनात्मकं जगत् समुत्पाद-यतीति मे मतिः ।

प्रागुक्तोपादानन्तु तादृशापारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगिनीय मायैवेति नात्र कश्चिद् विचारचर्चावसरः । "साक्षी चेता केवलो निर्गुणश्च" इत्यादि-श्रुत्या केवलत्वनिर्गुणत्वयोरुपदेशदानात् । कर्तारमित्यादेरीश्वरबोधनपरतया मुख्यार्थ-बाधेऽनन्यगतिकतया विवर्ताधिष्ठानस्य शुद्धचेतनस्यैव ब्रह्मणः सिद्ध्यति । न तु चिच-चिदात्मकस्य तस्य ।

अपि च—

'देवात्मशक्तिं स्वगुणैर्निगूढाम्'[2] ।
"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"
"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"[3]॥

अनादिकालीनया अज्ञानापरपर्यायभूतया प्रभूतयाऽविद्यया माययाऽनात्मभूते जगति जागतिकेषु वा पदार्थेषु आत्मत्वप्रकारकभ्रमेण सम्मोहितानां जीवानां प्राणिनां संसारदुःखदावानलेन सन्तप्यमानानां सन्तरणं वा कथं भवतीत्येवोपदिशत्यर्जुनं सच्चि-दानन्दो भगवान् श्रीकृष्णचन्द्रो मथुराचन्द्रः ।

---

१. वेदान्तसारे
२. श्वेताश्वतरोप० ६ । ८
३. श्रीमद्भगवद्गीता ७ । १४

हे अर्जुन ! स्वप्रकाशचिदात्मभूते निर्विशेषे निर्विकारे मयि परमात्मनि आभासरूपेण सन्तिष्ठमाना सत्त्वरजस्तमोगुणात्मिकेयं माया मम स्वप्रकाशलक्षणलक्षितस्य स्वरूपस्य सलिलस्य शैवालमिवाऽऽवरणं विधाय सन्तिष्ठते।

दृष्टादृष्टविषयाणां सुखेन तत्साधनीभूतेन सर्वस्वपरित्यागेन यमनियमादीनां पालनजन्येन दुःखेन वाऽत्येतुं शक्या नान्येन साधनेन साधनान्तरेण वेत्यत एवाऽस्या मायाया दुर्जयत्वं प्राक् प्रोट्टङ्कितम्। अस्या मायायाः दुर्जयत्वमिव लोके वेदे सर्वत्राऽन्यत्र च शास्त्रेषु प्रसिद्धमस्तीति सर्वेऽपि विदाङ्कुर्वन्ति वेत्तारो जनाः।

ब्रह्मादिस्तम्बपर्यन्तानां सर्वेषामेव प्राणिनां स्वोपसृष्टानां सदसद्विवेकज्ञानस्य तिरोहितत्वविधानेन श्रद्धाया भक्तेश्च वैधुर्यसंवर्धनेन बुद्धिजाड्याधिक्यदर्शनात्सुभवेन च हेयत्वमत एव च निरुक्तैरनर्थैस्तुच्छत्वं सम्यग् विनिश्चित्य नेयं शुक्तिरितिवत् तस्या मायायाः सर्वतोभावेन तादृशत्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वमभ्युपगम्यते। इत्थंच त्रिगुणात्मिकाया मायाया मिथ्यात्वेन तत्कार्यस्य मायामयस्य प्रपंचभूतस्य जगतोऽपि मिथ्यात्वमनुमीयते। अनुमानं चात्र—"इदं सर्वं मिथ्या मायाकार्यत्वात् ऐन्द्रजालवत्" इत्यादिप्रमाणैर्जगतो मायाकार्यस्य मिथ्यात्वं निश्चीयते।

तथा च जाग्रत् स्वप्नावस्थयोर्व्यभिचारिता गतस्य प्रपंचस्य सुषुप्त्यवस्थाया सुस्पष्टमेवाऽत्यन्ताभावो निश्चीयते प्रत्यक्षप्रमाणेनेऽति तस्य प्रतीतिमात्रत्वमेव वक्तुं शक्यते न तु तदस्तित्वमपि मरुजलवत्, रज्जौ सर्पवत्। अत एव त्रैकालिकनिषेधप्रतियोगित्व तस्य तत्र तत्रोक्त साधु सङ्गच्छते। तादृशवस्तुनोऽभावे तादृशवस्तुगतगुणदोषपरिच्छिन्नत्वादयोऽपि नहि तत्र संभावयितुं शक्यन्ते। यथा भ्रमकल्पिते रजते, तथाविधे च सर्पे शुक्तिरज्ज्वादीनामवस्थान सर्वथा शक्य प्रतिभाति तथैव प्रकृतेऽपि विज्ञेयम्।

वस्तुतः सिद्धान्तश्रुतिस्मृतिप्रभृतीनां प्रामाण्यबलेन खल्वेकमात्रं ब्रह्मण एवावस्थानस्याऽनुभूयमानतया चिदचिदात्मकत्वपक्षेऽपि अचितश्चिदभावरूपतयाभावस्य चाधिकरणरूपतया नित्यशुद्धमुक्तस्वभावस्याऽद्वितीयस्य ब्रह्मणश्च सर्वस्यापि चराचरात्मकस्य जगतोऽधिष्ठानाऽपरपर्यायभूताधिकरणरूपत्वेन चिदेकरूपमेव ब्रह्म फलीभूत भवतीति तस्यैवाऽस्तित्वं केवल सुस्थिरं निर्धार्यते।

ब्रह्मणोऽतिरिक्तस्य सकलस्यापि नश्वरतया मिथ्याभूतत्वेन नास्तित्वमस्तीति प्रतीतिमात्रत्वं सुनिश्चीयते। अतो मायाद्वारा ईश्वरद्वारा च यदुपादानकर्तृत्वोपपत्ती सत्या चिदचिदुभयात्मकस्य ब्रह्मणोऽवधारणं कल्पनचास्ति सर्वथा युक्तिविरुद्धं शास्त्रविरुद्धं चेति विदाङ्कुर्वन्तु भवन्तो नैयायिकप्रभृतयो दार्शनिकाः। एतेन ब्रह्मणो विकारात्मकत्वपक्षोऽपि निरस्तः।

इत्थं च त्रिष्वपि कालेषु सजातीय, विजातीय, स्वगतभेदरहित निसङ्ग, निर्विशेष, निरजन, नित्य, शुद्ध, बुद्ध, मुक्तस्वभावमद्वैतमेकरस परं ब्रह्मैवाऽवतिष्ठते।

"एकमेवाऽद्वितीयं ब्रह्म"।[1]

"न तु तद्द्वितीयमस्ति"।[2]

"ब्रह्मैवेद सर्वम्"।[3]

"सच्चिदाऽऽनन्दरूपमिदं सर्वम्"।[4]

इत्यादीना सर्वासामेव श्रुतीना चिदेकरसभूते प्रभूते द्वैते एव ब्रह्मणि तात्पर्यमस्तीति भावः।

एव च मायाया ब्रह्मणः शक्तिरूपत्वादिति मूलाऽविद्यापरपर्यायभूता माया नास्ति ब्रह्मणो भिन्नेति वक्तुं शक्यते। शक्तिशक्तिमतोरभेदात् इति।

नापि च सा माया ब्रह्मणोऽभिन्नेति व्याहर्तुं व्यवहर्तुं वा शक्यते, यतः "ततो विश्वमायानिवृत्तिः" इत्येव रूपेण तस्या मायाया बाधश्रवणात् अभिन्नत्वे सति बाधः कुत इति, स्वयमेव विचार्यताम्। ब्रह्मसत्तातिरिक्तसत्ता नास्तीत्यभिप्रायेण यदि अभेदपक्षः स्वीक्रियते पुष्टीक्रियतेऽवा तदातु "जीव्यता चिरमि"ति मत्वा मयापि स पक्षः समर्थ्यते, यतोऽध्यस्तसत्ताया अधिष्ठानसत्तात. सर्वथा ऽनतिरिक्तत्वात् तस्या अध्यस्तसत्ताया अतिरिक्तत्व कालत्रयेऽपि न वक्तु शक्यते।

एव माया ब्रह्मणो नापि भिन्नाऽभिन्ना, अर्थात् भेदाऽभेदपक्षोऽपि न सगच्छते, यतः परस्पर भेदाऽभेदयोः सर्वथा विरुद्धत्वात्। अतो विरुद्धधर्माक्रान्तत्वेन विरोधानुभवात् नाऽय पक्षोऽपि समीचीनः।

इत्थ च यद् यद् दृश्य तत् तत् सर्व मिथ्येति सर्वदृश्यावच्छेदेनेन्द्रजालवत् मिथ्यात्वाऽवधारणात् तदानीमेकस्यैव परमतत्त्वस्य सर्गादौ स्थितिरनुभूयते शास्त्रप्रामाण्यानुरोधात् तदनुबन्धितप्राचीनाचार्यचरणानुरोधाच्चेति यदासीत् यच्चास्ति तदेवावशिष्यते।

तस्यैव च परमतत्त्वस्य परमपुरुषस्य वा त्रिकालाऽबाधितत्वमप्यनुभूयते, तथाविधा चास्ति तदीया सत्ता। तच्चास्ति तत्व चिन्मात्र सन्मात्र च ब्रह्म।

---

१. अध्यात्मोप० ६३

२. बृ० उ० ४/३/२३

३. तत्रैव, २/५/१

४. नृसिंहोत्तरतापनीयोप० ८

तच्च ब्रह्म न चिदचिदात्मकं नाप्यचिदात्मकम्, किन्तु चिन्मात्रमेव तत् । इत्थंच चिद्भिन्नस्य सर्वस्यैवाऽनुमानतोऽपि मिथ्यात्वं निश्चीयते । तच्चानुमानमत्रैव प्रकरणे प्रागेव दर्शितमस्माभिरिति तु परमार्थः ।

## तृतीयः पादः

## तत्त्वमस्यादिमहावाक्यार्थविचारः

"तत्त्वमसि" इति महावाक्यघटकीभूतं "तत्" पदं यावाविश्वनाथापरपर्यायभूत शिवपरं वा तदीयभवान्यात्मकशक्तिपरं वा, साक्षाच्छिवतादात्म्यापन्नशक्तिपरं वा विष्णुपरं वा, इत्थं यत् किमपि साकार-निराकारपरं वा भवेत् स एव देव उपासितव्यः । तस्य देवस्य खलु क्रमशस्तत्त्वमस्यादिमहावाक्यजन्येन जीवब्रह्मैकत्वज्ञानेनाऽज्ञाननिवृत्तौ सत्यामेवाऽपवर्गो जायते नान्यथा ।

इतोऽतिरिक्तमार्गगमनेन तु संसारो भवतीति सकलशास्त्रपर्यालोचनयेदमेव निश्चीयते प्रमीयते च ।

अनेनैव जीवब्रह्मात्मैकत्वज्ञानेन सर्वविज्ञान वेदे वेदान्ते वा यत् प्रतिज्ञातमस्ति तस्य सर्वथा सर्वकालावच्छेदेन निश्चितत्वात् अश्रुतकल्पनाया अपि नापत्तिरस्तीति ।

नोचेदन्यथा ब्रह्मणोऽचिदात्मकत्वे चिदचिदुभयात्मकत्वे वा चिदात्मकस्य माया-ज्ञानस्य तथाविधस्य संसारज्ञानस्य वा आहोस्वित्तथाविधस्य घट-पटादिज्ञानस्य एवं तादृशोभयात्मकज्ञानस्य वा द्वैतव्याप्यत्वेन ■ तव्याप्यभेदव्याप्यत्वेन वा कुत्रैकविज्ञानेन सर्वविज्ञान स्यात्, कुत्र वा मुक्तिरपि स्यात, इति स्वयं वयं विचारयामः ।

यदि च सन्मात्रापरपर्यायभूतस्य चिन्मात्रस्यैवाऽऽत्मत्वकथनेन निर्विकारनिराकार-ब्रह्मपराणामधिकारिविशेषाणां चिन्मात्रे ब्रह्मणि समाधिसम्पादनद्वारा जायमानस्य. तादृशब्रह्मतात्पर्यकोपदेशात्मककथनस्य मोक्षप्रयोजनकत्वेऽपि साकारं निराकारंच ब्रह्मेति समभ्युपगच्छतां खलु विनिर्णय अन्यादृश एव स्यादित्युच्यते, तन्न साम्प्रतं प्रतिभाति । यतस्तादृशमोक्षप्रापकस्य तु मार्गस्य सर्वेषां एव कृते समानत्वेन एकत्वेन प्रकारान्तरेण कृतायाः कल्पनायाः सर्वथाऽन्याय्यत्वात् ।

श्रुत्युक्तं तत्र श्रुत वा चिन्मात्रं सन्मात्रंच निराकारमेव ब्रह्म स्वतादात्म्येन स्वज्ञानात् ब्रह्मज्ञानादज्ञाननिवृत्तौ सत्यामेव खलु मोक्षः सर्वैरेव सार्वत्रिकोऽभ्युपगम्यते इति चोक्तं प्रागेव। इत्थं च—

आत्मा ब्रह्मैव भवति सद्रूपत्वाच्चिद्रूपत्वात् आनन्द-
रूपत्वात् अविक्रियत्वादसङ्गत्वात् च" ॥[१]

"अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः ।"[२]

अपि च—"चिदेकत्वपरिज्ञाने न शोचति न मुह्यति" ।[३]

एवम्— "अखण्डं सच्चिदानन्दं परं ब्रह्म विलक्ष्यते" ।[४]

अन्यच्चापि—

"तत्त्वमसि" ।[५]
"अयमात्मा ब्रह्म"[६]
"अहं ब्रह्मास्मि"[७]
"प्रज्ञानं ब्रह्म"[८]
"सच्चिदानन्दरूपमिदं सर्वम्"[९]

इत्यादि वाक्यानां महावाक्यानाञ्चेदमेव यदुक्तपूर्वं यदि साक्षात् सुस्पष्टतरोऽभिप्रायोऽस्ति तदा प्रकारान्तरं कुत्रानुभूतं केनानुभूतं कदा चानुभूतमित्युच्यताम् ।

इतोऽतिरिक्तस्थलेऽनुभूतमित्युच्यते चेत्तदा वेदबाह्यस्थलीयमेव तत् । यतस्तावद् वेदबाह्यस्थले तत् प्रकारान्तरं साक्षात् परम्परया वा न कुत्रापि समनुभूयते दृश्यते श्रूयते वा । तथा चोक्तम्—

"सन्मूला इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" ।[१०]

इत्यादिवेदवाक्यमनुसृत्य घण्टाघोषेण तथाविधेन नादेन वा जोघुष्यमाणं चिन्मूलत्वं सन्मूलत्वं चानुभूयते ।

---

१. श्रुतिः
२. नृसिंहोत्तरतापनीयोप० ६
३. रुद्रहृदयोपनि० ३४
४. अध्यात्मोपनि० १/३२
५. छान्दोग्योप० २/८/७
६. बृहदारण्यकोप० ४/५/१९
७. तत्रैव १/४/१०
८. छा० उ०
९. नृसिंहोत्तरतापनीयो० ७
१०. सिद्धान्तमणिटीका, वेदान्तपरि०

एवं च सत् शब्दवाच्यचिन्मात्रब्रह्मण एवेक्षणं साधयित्वाऽन्ते "तत्वमसि" इत्येवं-विधवाक्येन ब्रह्मणश्चेतनेन श्वेतकेतुना तादात्म्य प्रतिपाद्य तत्रैकस्मिन् चिन्मात्रे ब्रह्मणि विज्ञाते सर्वं विज्ञातं भवतीति तदेव ब्रह्म ज्ञातव्यम् इति प्रतिज्ञातम् ।

परन्तु प्रकृते मायाया नित्यत्वाऽङ्गीकारेण जीवब्रह्माऽभेदज्ञाने जायमानेऽपि खल्व-विद्याऽपरपर्यायभूताया मायाया निवृत्तेः कदाचित् कथञ्चिदसंभवेन जीवस्य परिच्छिन्न-त्वप्रकारकस्य भ्रमस्य निवृत्तेरभावेन प्रकृतिलयत्वं सुस्पष्टमेवेति ततः "पुनरपि जननं पुनरपि मरणं पुनरपि जननी जठरे शयनम्" इत्यादिरूपः पुनर्जनन, मरण, जननीजठरे-शयनरूपः संसारः सृष्टिसर्जनरूपो भूयो भूयोऽभिजायते ।

इत्थं चेदं जगज्जननरूपं सर्गपालनरूपं सर्गविसर्गरूपं संहाररूपंचाऽविच्छिन्न-प्रयासायासभाररूपं क्रमजातमहर्निशमनिशं प्रचलत्येव । नहि कदाचित् विश्रान्तिं सुख-शान्तिं वा लभते ।

अपि च येनाऽभेदज्ञानेन नाऽज्ञाननिवृत्तिर्जाता तादृशवाऽभेदज्ञानं नाममात्र-मेवेति अगण्यतावच्छेदककुक्षिविक्षिप्तमेव तत् इत्थ च तात्त्विकदृष्ट्या विचार्यमाणे खलु अज्ञानमेव तत् इत्यपि कथन्न व्याहर्तु शक्नुमः ।

अत्रोपनिषदानुयायिन इत्थ समुद्गिरन्ति यन्मूलाज्ञानरूपाया अविद्यापरपर्याय-भूतायाः प्रभूतायाः मायायाः कालत्रयेऽपि नित्यत्व नाङ्गीकर्तुं शक्यते । यतस्तस्यामायाया जडत्वात् परिच्छिन्नत्वात् असद्भूतत्वाच्च कथमपि नास्ति नित्यत्वम् । तथा चोक्तम्— "ब्रह्मादिस्तम्बपर्यन्त मृषामात्रा उपाधय."[1] ।

ब्रह्मण उपाधिभूताया मायाया जडत्वेन मिथ्याभूतायास्तस्याः किमप्यस्तित्वमेव नास्तीति मृषात्व कल्पित भवति ।

एव जगतोऽपि मृगजलापेक्षया किञ्चित्कालीनस्थितिमत्वेन वास्तविकं तस्यापि किमपि नास्ति सत्वमस्तित्व वेति तस्यापि मृषात्वेन प्रतीतिमात्रत्वमेवानुभूयते तथा चोक्तम्—

"अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्नहि" ।[2]

अर्थात् अजकोट्यन्तर्गताना पदार्थाना नित्यत्व स्वीक्रियते, एवम् आत्मकुक्षि-निक्षिप्तानामपि पदार्थानामविनश्वरतया नित्यत्वमभ्युपगम्यते । परन्तूभयकोटिविनि-र्गताना तु केषामपि नास्ति नित्यत्वम् । यतस्तेषा ध्वसप्रतियोगित्वेन प्रागभावप्रतियोगि-त्वेन चाऽनित्यत्व सुस्पष्टमेव एव ब्रह्मादिस्तम्बपर्यन्ताना पदार्थानामुपाध्यनुपाधिभूताना

---

१. अध्यात्मोप० १८

२. तेजोबिन्दूपनि० ३७

सर्वेषामेव मृषात्वं प्रतिपादितं प्रागेवेत्यतो मायायास्तत्कार्यस्वरूपस्य च जगतो ह्यनित्यत्वं नश्वरत्वंचास्ति सुस्पष्टमिति मायाया नित्यत्वकथनं नैव कालत्रयेऽपि सङ्गच्छते।

अपि च सत्यस्वरूपस्यास्य ब्रह्मण एव मिथ्याभूतस्यास्य चराचरात्मकस्य जगतः स्तयाविधायाश्च मायाया अधिष्ठानत्वेन तस्यैव चाऽधिष्ठानभूतस्य ब्रह्मणो जगन्नाम्ना भासमानत्वेन तस्यैव सत्त्वम् = अस्तित्वम् परमार्थतो निश्चीयते इति केवलं ब्रह्मैव भासमानं सन्निष्ठमानंच भवतीति भावः। तथा चोक्तम्—

> यथैव शून्यो वेतालो गन्धर्वाणां पुरं यथा।
> यथाकाशे द्विचन्द्रत्वं तद्वत् सत्ये जगत्स्थितिः॥
> यथा च जलकल्लोलैर्जलमेव स्फुरत्यलम्।
> घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः॥
> जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम्।
> गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात्।
> वीक्ष्यमाणे प्रपंचे तु ब्रह्मैवाभाति भासुरम्।
> यथैव मृण्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः।
> आत्मानात्मविवेकोऽयं वृथैव क्रियते बुधैः।[1]

यथा शून्यो वेतालः गन्धर्वाणां पुरम्, आकाशे च चन्द्रद्वयं मिथ्यैव भासमानं भवति, तथैव ब्रह्मण्यपि जगत्स्थितिः सर्वथा मिथ्याभूतैव। एवं यथा जलकल्लोलैर्जलमेव भासते, यथा च पृथ्वी घटनाम्ना भासते, तन्तवश्च पटनाम्ना भासमाना भवन्ति। तथैव सच्चिदानन्दस्वरूपलक्षितं ब्रह्मैव जगन्नाम्ना भासमानं भवतीत्यद्वैतवेदान्तिनस्त-दनुगामिनश्चाऽनुभवन्ति।

यथा वा घटे गृह्यमाणे बलात् मृत्तिका भाति तथैव खलु प्रपंचे वीक्ष्यमाणे प्रपंचाऽधिष्ठानभूतम् आहोस्वित् प्रपंचाऽध्यासाऽधिकरणीभूतं प्रभूतं ब्रह्मैव भासुरतया भाति।

तदेव च सकलचराऽचरप्रपंचाधिष्ठानभूतं सन्मात्रं चिन्मात्रं च ब्रह्म "तत्त्वमसी" ति महावाक्यघटकीभूत "तत्" पदं लक्ष्यीभूतं भवति। तदेव च पुनः "तत्त्वमसी" तिमहावाक्यघटकीभूतत्वं पदार्थेन चेतनेन श्वेतकेतुना तादात्म्यापन्नं भवतीति।

---

1. योगशिखोपनि० ४/१६-२२।

अपि च—

"सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन" ।[1]
"एकमेवाऽद्वयं ब्रह्म नेह नानास्ति किंचन" ।[2]
"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" ।[3]
"न तु तद्द्वितीयमस्ति"[4]

अन्यच्चापि—

"मद्व्यतिरिक्तमणुमात्रं न विद्यते"[5] ।

एवम्—

"अव्यक्तात् पुरुषः परः"[6]

तथा— 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्'[7]

इत्यादिना श्रौतप्रमाणेनाऽचिद्भिन्नतया चिन्मात्रस्य सन्मात्रस्य च ब्रह्मणो ब्रह्मत्वाऽऽकलनात् अज्ञानापरपर्यायभूताया मायायाः सत्यस्य नित्यत्वसमर्थनं सर्वथा शास्त्रविरुद्धमत एव च खलु अयौक्तिकमेव प्रतिभातीतिवेदान्तघण्टाघोषः ।

अपि च—

"स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ।
न सन्ति नास्ति माया च तेभ्यश्चाऽहंविलक्षण" ।[8]

इत्यनेनापि औपनिषद्प्रमाणेन जगदादीना मायाप्रभृत्युपाधीना च तथा जीवेश्वरादीना स्वातन्त्र्येणास्तित्वं नास्तीति तेषा स्वतन्त्रमस्तित्व सत्व निराकृतं भवतीत्यतस्तेभ्यः सर्वथा विलक्षणश्चेतनः परमब्रह्मपरमेश्वर एवाऽस्तीति वेदान्तोपदेशः ।

## चतुर्थःपादः

अन्यच्च श्रीमद्भागवतेऽप्ययमेव पक्षः समर्थितः सुदृढीकृतश्च ब्रह्मा जी महोदयाना प्रार्थनानन्तर स्वयमेव सच्चिदानन्देन परमानन्देन भगवता । तथा हि—

---

१. निरालम्बोपनि० २५
२. अध्यात्मोपनि० ६३
३. तत्रैव २७
४. बृहदारण्यकोपनि० ४/३/२३
५. त्रिपाद्विभूतिमहानारायणोप० ८/१
६. शुक्लयजुर्वेद—रुद्राष्टा० २/१७
७. तत्रैव
८. वाराहोपनि० २/११

"अहमेवाऽऽसमेवाऽग्रे नान्यद् यत् सदसत् परम् ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥

ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥

यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥

एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः ।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा ॥"[1]

अर्थात् सृष्टेः पूर्वकालावच्छेदेनाप्यहमेवाऽऽसम् मतोऽतिरिक्तस्य कस्याप्यस्तित्वमेव नासीत् । स च निषेधप्रतियोगिभूतः पदार्थः स्थूलो वा भवेत्, एतत्पदार्थद्वयकारणीभूतं सत् जगत्कारणीभूतमज्ञानं वा भवेत् कस्यापि कदापि कथमपि परमार्थतोऽस्तित्वमेव नास्ति ।

यत्र च नास्तीयं सृष्टिस्तत्रापि केवलमहमेवास्मि । एवं सृष्टिरूपावच्छिन्नतया योऽप्यस्ति भासमानो भावभूतो वा वाऽभावभूतो वा पदार्थः सोऽप्यहमेवाऽस्मि ।

एव सृष्टेः समाप्त्यनन्तरकालावच्छेदेन योऽप्यवशिष्येत सोऽप्यहमेवाऽस्मि । इत्थंच स एव परमात्मा उपरिष्टात्, अधस्तात् दक्षिणतः, उत्तरतः, पश्चात् पुरस्तात् सर्वकालावच्छेदेन च स एवास्ति 'तत्' पदाभिधेयो भगवान् सच्चिदानन्दः ।
तथा चोक्तम्—

"आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेद सर्वम्"[2] ।

एवं स्थिते यत्र तत्र सर्वत्र च वेदेषु वेदान्तप्रभृतिषु च शास्त्रेषु तस्यैव "तत्" पदाभिधेयस्याऽस्तित्वं = सत्त्वं, परमार्थतः, श्रूयते च श्रवणेन्द्रियजन्यप्रत्यक्षगोचरीक्रियते चेति मायापरपर्यायभूतस्य जगत्कारणीभूतस्याज्ञानस्य तु खल्वस्तित्वमेव नास्तीति केवलं व्यावहारिकावस्थाकालावच्छेदेनैव तदस्तित्वमसीतः पुरस्ताज् ज्ञानचक्षुषः समुन्मीलनानन्तर तस्याज्ञानस्य मायाया वा तत्कार्यभूतस्य वा जगतो बाधदर्शनात् तदीयमस्तित्वमेव परिसमाप्तिं गच्छतीति परमार्थो निष्कर्षो चेति । उक्त च—

१. श्रीमद्भाग० स्कं २, अ० ९, श्लो० ३२-३५
२. छान्दोग्योपनि० ७/२५/२

"दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत्"[1]।
"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः"[2]

अपि च—

"एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः"।[3]

अत्र "परमार्थतः" इत्यस्य "अद्वैतम्" इत्यनेनान्वयः। अर्थात् अद्वैतमेव पारमार्थिकम् द्वैतंचेदं मायामात्रम्, मृषाभूतंद्वैतमित्यर्थः। अतश्च यत् पारमार्थिकं तदेव सत्। तदतिरिक्तं सर्वमेव मिथ्याभूतमसदस्ति अवस्तुजातम्।

स च ब्रह्मत्वभूतः परमेश्वर एकः सन्नपि "भिद्यते" भेदवान् भवति, भिन्नत्वं गच्छति, न स्वरूपतो भिन्नः प्रतीयते, अपि तु मायया आहोस्विद् भ्रान्त्या।

स एव ब्रह्मात्मभूतः परमेश्वरः "तत्वमसी" तिमहावाक्यघटकीभूत "तत्" पदवाच्यः। अनेनैव ब्रह्मात्मभूतेन परमेश्वरेण "तत्" पदवाच्यतां गतेन सह चेतनस्य श्वेतकेतोरभेदबोधनाय तादात्म्यं प्रतिपादयितुं वा जहदजहल्लक्षणापि स्वीक्रियते द्वैतवेदान्तिभिः।

एवं चोपसंहारे त्वंपदाभिधेयस्य जीवस्याऽध्यासजन्येनेतरेतराविवेकेन योऽस्ति वर्तमानकालीनः संसारित्वप्रकारको भ्रमः पूर्वं वाऽऽसीदतीतकालीनः, तत्वमस्यादिमहावाक्यजन्येन। ज्ञानेनाऽध्यासाभावे सति विवेकज्ञानोदयेन भ्रान्तिनिवृत्तौ सत्यां चेतनो जीवः स्वस्मिन् सन्तिष्ठमानत्वेन स्वस्थः सन् केवलो भवति, अर्थात्तदानीं कैवल्यमापन्नो भवति। अर्थात् मनः प्रसादात् बाबाविश्वनाथप्रसादात् गुरोःशिवस्य प्रसादात्तापत्रयविमुक्तः सन् मुक्तो भवति।

तदानीं च स्वात्मदर्शनद्वारा दृश्यप्रपंचस्याप्यभावदर्शनेन पूर्णतया रागद्वेषविमुक्तः सन् मनोगतसकलकामनाभिर्वासनाभिश्च सर्वतोभावेन विमुक्तो भवति। उक्तं च वराहोपनिषदि—

"रागद्वेषभयादीनामनुरूपं चरन्नपि।
योऽन्तर्व्योमवदच्छन्नः स जीवन्मुक्त उच्यते"।[4]

---

१. तेजबिन्दूपनि० १/२९
२. श्रुतिः
३. अन्नोपनि० ६/७
४. वराहोपनि० ४/२४

"जीवन्मुक्ता न मज्जन्ति सुखदुःखरसस्थिते"[१]

अपि च—

निर्विकल्पा च चिन्मात्रा वृत्तिःप्रज्ञेति कथ्यते ।
सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते[२] ॥

"ब्रह्मानन्दे निमग्नस्य विषयाशा न तद्भवेत्"[३]
"स्वात्मनैव सदा तुष्टः"[४]
"सुखदुःखदशाधीर साम्यान्न प्रोद्धरन्ति यम्" ।[५]

अन्यच्चापि तत्रैव—

"इदं रम्यमिदं नेति बीजन्ते दुःखसन्तते ।
तस्मिन् साम्याग्निना दग्धे दुःखस्यावसरः कुतः"[६]
"न स्तौमि न च निन्दामि आत्मनोऽन्यन्नहि क्वचित्" ।[७]
"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"[८]

अपि च—

"मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः ।
शमो विचारः सन्तोषश्चतुर्थः साधुसङ्गमः"[९] ॥
"तत्प्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः ।
विमुक्तो जीवनिर्मुक्तो ब्रह्मनिर्वाणमृच्छति" ।[१०]
"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"[११] ॥

---

१. महोपनिषत् ५/३७
२. अध्यात्मोप० ४४
३. आत्मप्रबोधोप० २६
४. तत्रैव १२
५. अन्नोपनि० ४/१२
६. तत्रैव ५/७०
७. तत्रैव ५/५६
८. तैत्तिरीयोपनि० २/६
९. महोपनिषत् ४/२
१०. श्रीमद्भाग० ४/११/१४
११. मुण्डकोपनि० २/२/८

व्यतिरेकेणाप्याह—

"विहितस्याऽननुष्ठानात् निन्दितस्य च सेवानात ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति"[1] ॥

अपि च पुनस्तत्रैव—

"अकुर्वन् विहितं कर्म निन्दितस्य समाचरन् ।
प्रचरन्निन्द्रियार्थेषु नरः पतनमृच्छति"[2] ॥

मनुनाऽप्यत्रोक्तम्—

"इन्द्रियाभ्यामभ्याभ्यां द्वाभ्यामेव हृतं जगत् ।
अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि ॥
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति"[3]

अत्रैदमस्ति रहस्यम्—यत् स्वतः सिद्धे नित्यकूटस्थासङ्गस्वप्रकाशचिदात्मके ब्रह्मणि चक्षुषो रूपवद् रूपावच्छिन्नद्रव्यवद्वा सर्वेनोपलभ्यमाने परमानन्दस्वरूपे आत्मनिजस्वरूपे रममाणो ब्रह्मज्ञानी स्वस्वरूपेणैव स्वात्मानन्दरसानुभूत्यैव खलु पूर्णां सन्तुष्टिमापन्नस्तृप्ति चाऽवाप्नुवानोऽमृतरसपानकर्ता लवणाम्बुवत् सर्वथा निकृष्ट नरकगर्तपतनशील विषयजन्य सांसारिकं सुखं कदापि नाभिवाञ्छति ।

तदानीं च स्वात्मदर्शनद्वारा दृश्यप्रपञ्चस्याप्यभावदर्शनेन पूर्णतया रागद्वेषवियुक्तः सन् मनोगतसकलकामनाभिर्वासनाभिश्च सर्वतोभावेन विमुक्तो भवतीत्यत्र नास्ति लेशतोऽपि सन्देहानध्यवसायावसर ।

अयमेव च सकलमनोगतकामनाभिर्वासनाभिश्च सर्वथा विमुक्तश्चेतन पुरुषः श्वेतकेतु प्रागुक्तलक्षणलक्षितेन परमेश्वरेण सह तादात्म्यमापन्नः सन् "तत्त्वमसी" तिमहावाक्यघटकीभूतत्वम् 'पदस्य' वाच्यीभूतोऽर्थो भवति ।

इदानीं पुनः प्रकृतमनुसराम—यद्यपि अविद्या, मायापरपर्यायभूतोऽध्यासो भाष्ये विशदीकृत्य निरूपितस्तथापि स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यासः एवम् अतस्मिन् तद्बुद्धिरूपो वाऽध्यासः ।

स चाऽयमध्यासः सत्यानृतमिथुनीकरणेन भासमानः । अविद्यापरपर्यायभूता-

---

१. याज्ञवल्क्यस्मृ० ३/५/२१६
२. तत्रैव ३/५/७७
३. मनुस्मृतिः २/२१५

ऽज्ञानरूपो वा इत्यपि वक्तुं शक्यते। श्रीशङ्कराचार्य "अध्यासं पण्डिता अविद्येति मन्यन्ते" इत्यनेनाऽविद्यायाः पर्यायवाचिनमध्यासं ब्रूते।

अस्यैवाऽध्यासस्य बलेन सर्वेऽपि लौकिका वैदिकाश्च व्यवहाराः प्रवर्तन्ते नातोऽन्यथा। अन्यस्मिन् अन्यधर्मावभासतायाः असत्वे वेदान्तवेद्यस्य निःसङ्गस्योदासीनस्य च परमेश्वरस्य ब्रह्मक्षत्रियादिभावशून्यस्य कथं तत्तद्भावापादनं सगच्छते। एवमन्तःकरणादीनां वा चैतन्यमपि कथं स्यात् अयमप्यस्ति विचारणीयो विषयः।

सर्वत्र लोकेऽध्यासविषये वर्तते प्रसिद्धिरियं यद् रज्जुः सर्पवदाभासमाना भवति, एवं शुक्तिरपि रजतवदेवाऽऽभासमाना भवति। तथैव चैकश्चन्द्रो द्वितीयवत् प्रतिभासते।

अयमेव चाऽध्यासः सत्ख्यातिरूपतयाऽसत्ख्यातिरूपतयाऽनिर्वचनीयख्यातिरूपतयाऽन्यथा ख्यातितया च वादिभिर्व्याह्रियते व्यवह्रियते च। विशेषस्तु विशेषवार्ताः इति च श्रीशङ्कराचार्यः स्वीयभाष्ये प्रोट्टङ्कितवान्[1]। नेह विस्तरभयान्नात्रोच्यते।

एवञ्च प्रागुद्दर्शितसत्यानृतमिथुनीकरणरूपाऽध्याससिद्धौ सत्यामेव तद्विषयकासिद्धिसंशयमाश्रित्य यद् यद् विकल्पितं तत्सर्वमेवाऽनेन निराकृतं बोध्यम्।

इदानीमेतावता प्रबन्धेनाऽचिदात्मकब्रह्म पक्षः चिदचिदात्मकब्रह्मपक्षश्च निरस्य चिन्मात्रं ब्रह्म, चिन्मात्रब्रह्मपक्षो वा सुतरां सिद्ध्यति। तेनैव चिन्मात्रब्रह्मणा सह मोक्षयितव्यस्य चेतनस्य श्वेतकेतोस्तादात्म्यमभेदापरपर्यायभूतं "तत्त्वमसी" त्यादिमहावाक्येन प्रतिपादितं भवतीति भावः।

---

१. ब्र०सू०शा०भाष्यम् १/१/१

# मायायाः रामानुजस्य सत्तानुपपत्तिप्रदर्शनं तत्परिहारश्च

(१) आश्रयानुपपत्तिस्तत्परिहारश्च :—

आश्रयानुपपत्तिविषये श्रीरामानुजाचार्यस्येदमस्ति कथनम् यद् यथाऽविद्यया भ्रम. समुत्पन्नो भवति तस्या अविद्याया आश्रयः-आधारः कः ?[1]

यदि जीवस्याऽविद्याया आश्रयत्वमुच्यते चेत्तन्न समीचीनं प्रतिभाति यतस्ता-वज्जीवस्य स्वयमविद्यया परिकल्पितत्वेनाऽविद्याया आश्रयत्वं भवितुमशक्यत्वात् ।

एव ब्रह्म अपि अज्ञानापरपर्यायभूताया अविद्याया आश्रयं नैव[1] भवितुं प्रभवति, यतस्तस्य ब्रह्मणः "सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुत्युक्तदिशा ज्ञानस्वरूपत्वेन प्रकाशरूपत्वात् ।

अविद्यायाश्च अज्ञानरूपत्वेन ज्ञानविरोधितया तमोरूपत्वात्—अन्धकार-रूपत्वात्, कथमविद्याया आश्रयं स्वप्रकाशचिदात्मरूपं ब्रह्म भवितु प्रभवतीति स्वयमेवाऽनुभवतोऽपि विचार्यताम् ।

अपि च श्रीहर्षेणापि खण्डनखण्डखाद्यनामके ग्रन्थे स्पष्टमेवोल्लिखितम्—

"विज्ञानं तावत् स्वप्रकाश स्वत एव सिद्धस्वरूपम् । न खलु विज्ञाने सति जिज्ञासोरपि कस्यचिद् जानामि न वेति संशयो" न जानामीति विपर्ययो व्यतिरेकप्रमा. वा"[2] ।

एवं "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः" इत्यभियुक्तोक्तेरपि ब्रह्मणो, विद्याश्रयत्वाधिकेत्याश्रयानुपपत्तिः सुस्पष्टत्वेन सुदृढैवेति मन्तव्यम् ।

अपि च चित्सुखमुनिनापि ब्रह्मणः स्वप्रकाशत्वं खलु—

प्रमाणनखनिर्भिन्नमहामोहामरारये ।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने[3] ॥

---

१. श्रीभाष्यम् १/१/१

२. खण्डनखण्डखा० शारदाटीका पृ० ४५

३. चित्सुखी, मङ्गलप्रकरणे, ४

इत्यादिना मङ्गलश्लोकेन 'चित्सुखी'ति नामके ग्रन्थे साधु साधितम्। तत्रैव पुनस्तत्वप्रदीपिकायाम्—

"स्वप्रकाशा चित् सैवाऽऽत्मा यस्य, अथवा स्वप्रकाशश्चिद्रूपश्चासावात्मा च"।
इत्येवरूपेण तस्याऽऽत्मनो ब्रह्मणः स्वप्रकाशत्वं, चिद्रूपत्वं च दर्शितम्।

तथा चैतेनापि ब्रह्मणि—अविद्यायाः समाश्रयता सुतरां बाधिता भवतीत्यविद्याया आश्रयानुपपत्तिस्तदवस्थैवेति "अविद्याया आश्रयः कः" जीवो वा ब्रह्म वेति समुत्थिताऽऽकाङ्क्षा पुनः सुदृढैवेति भावः।

श्रीरामानुजाचार्यस्य मते पूर्वं खलु अविद्याया आश्रयस्याऽनुपपत्तिर्दर्शिता। तत्राऽस्माकमियमस्ति विचारधारा यदविद्याऽस्ति जीवाश्रिता, जीवो वाऽविद्याश्रित इति। उभयोरेवाऽय प्रवाहोऽनादिमान् अर्थात् अनादित्वस्मादन्योन्याश्रय।

परन्तु तथापि स न दोषाय बीजाङ्कुरस्थले यथाऽऽन्यस्याऽनास्ति दोषत्वम्, अपि तु प्रामाणिकत्वं यथा तस्याः स्वीक्रियते। तथा प्रकृतेऽप्यन्योन्याश्रयस्य न दोषत्वम्।

श्रीरामनुजाचार्यस्य ब्रह्मणोऽविद्यायाश्च विरोधे तत्सम्बन्धे वाऽस्माकमिदमेवास्ति वक्तव्यं समाधानं वा यद् वृत्तिमत्स्वरूपे धर्मभूते ज्ञानऽज्ञाने चास्ति विरोधः न तु सर्वाधिष्ठानभूते—

"सत्यं ज्ञानमनन्तं ब्रह्म"
"नित्यं विज्ञानमानन्दं ब्रह्म"

इत्यादिश्रुतिप्रतिपादिते ब्रह्मस्वरूपे ज्ञाने, एवं मायापरपर्यायभूतऽज्ञानेऽपीतिभावः। ब्रह्माऽविद्ययोः परस्परं विरोधप्रवचने तत्कथने वा नहि किमपि प्रमाणं नापि कामपि युक्तिं वा पश्यामः।

(२) तिरोधानानुपपत्तिस्तत्परिहारश्च—

अत्रेदानीमयं प्रश्नो जायते यदविद्याया ब्रह्मणस्तिरोधानस्य सामर्थ्यमस्ति न वेति? तत्र श्रीरामानुजाचार्यं इत्थं ब्रूते यदविद्याया ब्रह्मणस्तिरोधानस्य नास्ति सामर्थ्यम्।

तिरोधानशब्देनार्थद्वयमेव बुध्यते। यथा पुष्पवन्तपदं चन्द्रत्वविशिष्टश्चन्द्रः सूर्यत्वविशिष्टं सूर्यस्तदुभयवाचकं भवति, तत्र पुष्पवन्तपदादुभयोरेव चन्द्रत्व-सूर्यत्वावच्छिन्नयोरेव प्रतीतिर्जायते।

---

१. चित्सुखी, मङ्गलप्रकरणे टीकायाम्।

तथैव प्रकृतेऽपि तिरोधानशब्देन लयरूपोऽर्थः। अवरोधरूपश्चार्थ इत्यर्थद्वयमेव प्रतीयते। कस्य लयः, कस्य वाऽवरोध इति जिज्ञासाया जायमानाया प्रकाशस्य प्रकाशोत्पत्तेर्वाऽनुषङ्गो बोध्यः। अर्थात् प्रकाशस्य लयः—विनाश इत्यर्थः। एवं प्रकाशोत्पत्तेरवरोध इत्येवरूपमर्थद्वयमेव बुध्यते।

इत्थं चाऽविद्याया ब्रह्मणस्तिरोधानसामर्थ्याऽभावेन तिरोधानस्य तत्राऽनुपपत्तिरेवास्तीति सुवचम्।

अद्वैतवादसमर्थकस्य प्रवर्तकस्य वा श्रीशङ्कराचार्यस्य नये खलु प्रकाशस्याऽनुत्पाद्यमानस्वरूपकारणवशात् तिरोधान 'शब्दजन्यबोध' विषयतावच्छिन्नप्रकारतानिरूपित विशेष्यतानर्थः प्रकाशविनाशरूप एवार्थो बुध्यते। तादृशेऽर्थे एव तच्छक्त्यङ्गीकारात्।

श्रीरामानुजाचार्येण समुद्भावितायाः शङ्कायाः कारणं तात्पर्यं वा शाङ्करमायावादस्य स्वेच्छयाऽध्ययनमेवाऽवबुध्यते। तात्त्विकदृष्ट्या विचार्यमाणे सतीदमेवाऽवगम्यते यत् शाङ्करवेदान्तानुरूपाऽविद्या नहि ब्रह्मप्रकाशस्य विनाश विधत्ते। अपि तु अविद्यावशीभूतं त जीवं ब्रह्मसाक्षात्कारतो वञ्चितं कुरुते।

परन्तु श्रीरामानुजाचार्यस्याप्याशंकायाः प्रागुक्तायाः असाम्प्रतत्वं नैव वक्तु शक्यते, साऽपि सर्वथा स्वस्थाने साम्प्रतमेव प्रतिभाति।

यथा चक्षुषो.पुरस्तात् स्वल्पोपि मेघखण्डः समागत्य अनेकयोजनेषु अर्थात् (६५००) पद् सपरूपञ्चशतयोजनेषु आयतम्—विस्तीर्णमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाऽऽच्छादयतीव प्रतिभाति। तनाऽज्ञानशीलो मूढपुरुषः खलु भगवन्तं भास्कर प्रकाशविहीन तथा घनच्छन्न जानाति। तथैव प्रकृतेऽपि इयमेव व्यवस्था विज्ञेया। यथोक्तं सदानन्देन—

> घनच्छन्नदृष्टिर्घनच्छन्नमर्कम्—
> यथा मन्यते निष्प्रभं चातिमूढः।
> तथा बद्धवद् भाति यो मूढदृष्टेः—
> स नित्योपलब्धिस्वरूपोऽहमात्मा[1]॥

(३) स्वरूपानुपपत्तिस्तत्परिहारश्च—

मायावादिन श्रीशङ्कराचार्यमाक्षिपति श्रीरामानुजाचार्यः यदद्वैतसिद्धान्तानुसारं ज्ञानं निर्विषयं निराश्रयं स्वयं प्रकाशमानं सत् सन्तिष्ठते।

---

१. वेदान्तसारः गुरुशान्तस्वामिना पृ० ३६

स्वरूपम् । अतस्तस्या मायाया स्वरूपानुपपत्तिकथनं सर्वथा भ्रान्तिरेव श्रीरामानुजाचार्यस्य वर्तते इति तु परमार्थः ।

(४) अनिर्वचनीयत्वानुपपत्तिस्तत्परिहारश्च—

श्रीरामानुजाचार्या मायाया अनिर्वचनीयत्वं नाङ्गीकुर्वन्ति, असिद्धत्वात् ।

कश्चिदपि वस्तुविशेषो विषयविशेषो वा घटपटादि सत्त्वेन, असत्त्वेन वा प्रतीतिविषयीभूतो भवितुं प्रभवति । सदसद्विलक्षणस्याऽनिर्वचनीयस्य घटपटादेः भानाविषयत्वात् प्रमाणागोचरत्वाच्च निर्वक्तुमशक्यत्वमेव सिद्ध्यति ।

तथैव प्रकृतेऽपि घट-पटाद्यनिर्वचनीयपदार्थानां कारणीभूता भवदभिमता माया सती भवितुमर्हति असती वेति निरुच्यताम् । सदसद्विलक्षणस्य वस्तुनोऽदृष्टचरत्वात्तस्यालीकत्वं कल्प्यते ।

यदि च सदसद्विलक्षणस्यापि वस्तुनो ज्ञानं स्यात्तदा तु ज्ञानमपि स्वयममर्यादितमेव स्यादतो रामानुजाचार्यस्येदं कथनं साधु सगच्छते यदनिर्वचनीयं नास्ति किमपि वस्तुजातम् । तस्माद्धेतोर्मायावादिनो वेदान्तिना मायाया अनिर्वचनीयत्वकथनं नहि कदाप्युपपन्नं भवतीतीयमवाऽनिर्वचनीयत्वानुपपत्तिस्तस्या मायापरपर्यायभूताया अविद्यायाः, तत्कार्यभूतस्य च जगतः ।

श्रीरामानुजाचार्यस्योक्ताक्षेपस्य कारणं प्रतीतिसिद्धस्य व्यावहारिकस्य सद्वस्तुनो मृषाऽनङ्गीकरणमेव प्रतिभाति । मायाया सदसद्विलक्षणत्वरूपस्याऽनिर्वनीयत्वस्य साधारणतयाऽयमेवार्थोऽवगम्यते यत् माया न सती अर्थात् माया पारमार्थिकरूपेण नास्ति । नाप्यसती अर्थात् माया वन्ध्यापुत्रवत्, गगनारविन्दवच्च असती अपि नास्ति ।

अतस्तत्कथनस्येदमेवास्ति तात्पर्यं यत् माया-निष्ठं प्रातीतिकं व्यावहारिकं सत्यत्वमवश्यमेवाऽभ्युपेयम् । अर्थात् माया व्यवहारतः सती, अतस्तत्र व्यावहारिकं सत्यत्वमवश्यं वर्तते इत्यत्र नास्ति कश्चन विरोधः । तादृशसत्यत्वेन (सत्त्वेन) मायाया निर्वचने नास्ति कोऽपि विवादः, इति नाऽनिर्वचनीयत्वानुपपत्तिर्मायायाः ।

अपि चाऽविद्यापरपर्यायभूताया मायाया उपाधित्वेनापि निर्वचनं जायते, यतः सा माया ब्रह्मण उपाधिरस्ति । यत्र तत्र सर्वत्रैवाऽस्योपाधेरुल्लेखः शास्त्रेषु श्रूयते । तथाहि—

> अनकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्नहि ।
> ब्रह्मादिस्तम्बपर्यन्तं मृषामात्रा उपाधयः[2] ॥

---

१. श्रीभाष्यम् १/१/१

२ अध्यात्मोपनि० १८

अत्र मायाया अविद्याया वोपाधिभूताया मृषात्वम् अर्थात् मिथ्यात्वं प्रतिपादितम्। तच्च मिथ्यात्वं केवलं पारमार्थिकदृष्ट्या न तु व्यावहारिकदृष्ट्या। अपि च—

"माया तत्कार्यविलये नेश्वरत्वं न जीवता"[1]

अत्रापि मायाया उपाधित्वेनैवोल्लेखो वर्तते। उपाधौ व्यावहारिकं सत्यत्वं सदानुभूयते सर्वैश्चानुभूयते। अपि च पुनः—

"सर्वोपाधिविनिर्मुक्तं स्वात्मानं भावयेत् सुधीः।"[2]

इत्य चोपाधेरुल्लेखस्य सर्वत्र वाऽनुभूयमानत्वेन सर्वथा तस्य मिथ्यात्वं नैव वक्तुं शक्यते।

(५) प्रमाणानुपपत्तिस्तत्परिहारश्च—

अविद्यापरपर्यायभूताया मायायास्तथा जगतस्तस्युपश्चाऽनिर्वचनीयता निराकुर्वाणः श्रीरामानुजाचार्यं सुस्पष्टमिदं वक्ति यत् सदसद्विलक्षणस्य वस्तुनो यथा नास्ति किमपि स्वरूपं प्रमाणाभावात्, अर्थात् तथाविधसदसद्विलक्षणवस्तुनो विषये कस्यापि दृष्टचरत्वेन तदीयं स्वरूपं तथाविधं नहि केनापि प्रमाणेन साधयितुं शक्यतेऽतः सदसद्विलक्षणस्य वस्तुनोऽनिर्वचनीयत्वसाधने कस्यापि प्रमाणस्योपपत्तेरदर्शनात् प्रमाणानुपपत्तिः सुस्पष्टैवेति श्रीभाष्यकारः श्रीरामानुजाचार्यो वदति। अतः प्रमाणाभावरूपकारणवशादेव मायायाः तत्कार्यभूतस्य जगतः स्थावरजङ्गमरूपस्य सर्वस्यापि अनिर्वचनीयत्वं सर्वथा स्वीकार्यमेवेति भावः।

मैवं वक्तुं शक्यते भवता श्रीरामानुजाचार्येण, यतस्तावत् मायायाः स्वरूपमनिर्वचनीयत्वात्मकं सर्वाण्येव प्रमाणानि साधयन्ति। प्रत्यक्षतोऽस्माभिरनुभूयते यत् सर्वमपि जगदात्मकं कार्यं त्रिगुणात्मकं भवतीत्यतस्तत्कारणेनापि तथाविधेनैव भवितव्यम्।

वयं स्वयं जगदात्मकमनित्यं कृत्यं सुखदुःखमोहात्मकं त्रिगुणात्मकं पश्याम, अतोऽस्माभिरनुमीयतेऽनुभूयते च यदस्य कारणेनापि त्रिगुणात्मकेनैव वर्तितव्यम्। तच्च कारणं त्रिगुणागुणात्मकस्य सुख, दुःखमोहात्मकस्य चराचरस्वरूपस्य जगतस्त्रिगुणात्मिका सत्त्वगुण, रजोगुण, तमोगुणात्मिका भवन्ति जगत्कारणीभूता प्रभूता माया, नान्यत्तद्व्यतिरिक्तं किमपि कारणान्तरं भवतीति युक्तमुत्पश्यामः।

तस्याश्च कारणान्तरस्वरूपाया मायायाः सत्त्वेनाऽसत्त्वेन च निर्वक्तुमशक्यत्वेनाऽनन्यगतिकतया निर्वचनीयत्वमेव वाच्यम्। इति नास्ति तस्या अनिर्वचनीयत्वानुपपत्तिः।

---

१. वराहोपनि० २/५२

२. कठरुद्रोपनि० ४१।

किन्तु अविद्यारूपदोषात्मककारणवशादेव तत्राऽनन्तताना ज्ञातॄणा ज्ञेयपदार्थाना च कल्पना क्रियते। श्रीरामानुजाचार्यस्याऽस्मिन् विषय इदमस्ति विशेषतो विवेचनम्, यत् ज्ञातॄणा ज्ञेयभूतविषयाणा च आनन्त्यद्योतनपराऽस्ति काचन मायानामधेयाऽविद्यापरपर्यायभूता शक्तिर्यैव खलु शक्तिभूता ता मायामविद्या वा निर्वक्तुमेव न पारयामः।

तन्निर्वचनमन्तरा मायाया अविद्यायाश्च स्वरूपमेव न सिद्ध्यतीति तदीयस्वरूपानुपपत्ति सुस्पष्टैव।

तत्रास्ति रामानुजाचार्यस्याऽभिमतिवर्यस्तर्क यदस्या मायाया अथवाऽविद्याया नहि सत्त्वेन निर्वचन कर्तु शक्यते, नाप्यसत्त्वेनेति कथन्तस्या स्वरूप सेत्स्यतीति तदनुपपत्तिस्तदवस्थैव।

अद्वैतवेदान्तिाना नये केवल ब्रह्मैवास्ति सत्यम्, तदतिरिक्तस्य च सर्वस्यैव मिथ्यात्वेनाऽविद्याया अपि[1] सत्यत्व नैव वक्तु शक्यते, नाप्यसत्यत्वमिति तस्या अविद्याया स्वरूपानुपपतिस्तदवस्थैव।

अविद्याया ज्ञातृज्ञेयज्ञानभूतषु त्रिषु रूपेष्वेव असत्त्वम् असत्यत्व स्वीकर्तु शक्यते नान्यथा। तत्र ज्ञानरूपे तु मायापरपर्यायभूतामविद्यामत एव सत्यभूता ता नानुमन्यते यदद्वैतसिद्धान्तानुसार ज्ञानस्य स्वरूपभेदा नास्त्येव, यतस्तत्र ज्ञानस्य "[2]सत्य ज्ञानमनन्त ब्रह्म" "नित्य विज्ञा[3]नमानन्द ब्रह्म" इत्यादिश्रुत्युक्तदिशा ब्रह्मरूपत्वेन ब्रह्मणश्च सर्वस्व[4]रूपत्वेन भेदो नास्तीत्यत्र योगाचारस्यापि सम्मति। यथा—

> "बुद्धिस्वरूपमेक हि वस्त्वस्ति परमार्थतः।
> प्रतिभानस्य नानात्वान्न चैकत्व विहन्यते ॥[5]

तथा च ज्ञानरूप वस्तु पारमार्थिक तच्च सद्रूप तस्य चैकत्वम्। "नचैकत्व विहन्यते" इत्यभियुक्तोक्त। तस्य च ज्ञानस्य व्यावहारिकत्व नाङ्गीक्रियते।

तस्य च ज्ञानस्याऽसद्रूपताङ्गीकारे माध्यमिकस्य शून्यवादप्रसङ्गः स्यात्। यतोऽविद्याया असद्रूपताऽङ्गीकारेऽविद्याया आश्रयभत यच्चास्ति सर्वाधिष्ठानभूत ज्ञान तदप्यसदेव यदि स्यात्तर्हि शून्यवादमतानुप्रवेश एव स्यात्, अपसिद्धान्तापत्तिश्च स्यात्।

---

१. श्रीभाष्यम् १/१/१
२. न्या० सि० मु० प्रत्यक्षखण्ड, आत्मनिरूपणे, प० ज्वाला प्र० टीकायुक्ताया द्र० पृ०१९१
३ तत्रैव पृ० १९६
४. "सर्व खल्विद ब्रह्म नेह नानास्ति किंचन"—निरालम्बोपनि० ४२
५. न्या० सि० मु० कृष्णाटीका, प० ज्वालाप्रसादकृता प ९

यदि चेत्थं ब्रूयात् ज्ञाता, ज्ञेय ज्ञानेत्याख्यास्त्रय एव पदार्थाः सन्ति असद्रूपास्तदा तेषां त्रयाणामेव पदार्थानामसद्रूपतासिद्ध्यर्थं तत्कारणीभूतस्यैकस्याऽविद्यापदार्थस्य कल्पना क्रियते । तदा तु तथैवाऽविद्याया अप्यसद्रूपतासिद्ध्यर्थं तत्कारणीभूतस्यापि कस्यचिदसत्पदार्थ. परिकल्प्यताम् । एवं सति तत्रापि पुनरसत्पदार्थान्तरं परिकल्प्यताम् इत्येव क्रमेणाऽनवस्थाया पर्यवसानं स्यात् ।[1]

यदि च शाङ्करमतानुयायिनो मायावादिनो वेदान्तिन इत्थं ब्रुवन्ति यत् सत्-स्वरूपं ब्रह्मात्मकं ज्ञानमेव विद्यते, तदपि न समीचीनम् । यत एवं स्वीकारे सति ब्रह्मैव प्रपञ्चभूतस्य जगतो मूलं स्यात् । पुनश्च ब्रह्मातिरिक्ताऽविद्या माया जगत्कारणं नहि सेत्स्यति ।

पुनश्च ब्रह्मणो नित्यत्वेनाऽविद्यारूपो दोषोऽपि नित्य एव स्यादिति अविद्याया नित्यत्वस्वीकारे मोक्षभङ्गप्रसङ्गः स्यात् । अत इदमवश्यं वक्तव्यं भविष्यति अविद्याऽथवा माया निःस्वरूपा स्वरूपानुपपत्तिसहितैव स्थास्यतीति तदीयं स्वरूपमेव नोपपद्यते ।

प्रागुक्ताया मायायाः अविद्यायाः स्वरूपानुपपत्तिविषये ये ये हेतवो दर्शिताः श्रीरामानुजाचार्येण ते सर्वेऽपि सन्ति हेत्वाभासा एव । एतेन श्रीरामानुजाचार्यस्य विचारधारा सर्वथा पक्षपातपूर्णा प्रतीयते इत्येवाऽस्माभिरनुभूयते ।

महदाश्चर्यमिदमस्ति यत् श्रीआचार्यमहोदयः श्रीशङ्कराचार्येण प्रतिपादिताः याः प्रातिभासिक, व्यावहारिक, पारमार्थिक सत्तास्ताः सर्वा एव, तथा मायाया अनिर्वचनीयता कथं विस्मृतवान् ।

श्रीशङ्कराचार्यद्वाराङ्गीकृतो योऽस्ति मायाया अनिर्वचनीयतावादस्तेनेदं सुस्पष्टं सिद्ध्यति यत् माया परमार्थतो नास्ति सती, नाप्यसती, नाप्युभयात्मिका, नापि चाऽनुभयात्मिका सा ।

एतेन मायाया अनिर्वचनीयत्वं सिद्ध्यति । इदमेव चाऽनिर्वचनीयत्वात्मकं स्वरूपमस्य चराचरात्मकस्य जगतोऽनुभूयते । तदेव च स्वरूपं तदन्तर्गतानां पदार्थानाम् ।

इत्थञ्च मायाया अनिर्वचनीयत्वाङ्गीकारे नहि कदाचित् कुतश्चित् कैश्चित् तस्याः स्वरूपानुपपत्तिरनुभूयतेऽनुभवशालिभिः । तथा च यथा वह्नेरौष्ण्यं स्वरूपमनुभूयते, जलस्य च शैत्यं स्वरूपमनुभूयते । तथैव मायायाः अविद्यायाः अनिर्वचनीयत्वमेव

१. श्रीभाष्यम् १/१/१

साधकबाधकप्रमाणसद्भावाच्च नास्ति प्रमाणानुपपत्तिरपीति सर्वस्यैव मायिकस्य जगतो व्यवहाररूपेण सद्रूपत्वात्प्रत्यक्षरूपेण चाऽनुभवविषयत्वात् कथं प्रमाणानुपपत्तिः अनिर्वचनीयत्वानुपपत्तिश्च स्यानाम् इत्यपि स्वयमेवाऽनुभूयताम् ।

(६) निवर्तकानुपपत्तिस्तत्परिहारश्च—

ये खलु सन्ति श्रीरामानुजाचार्यप्रभृतिप्रतिद्वन्द्वीभूताः श्रीशङ्कराचार्यप्रभृतयो दार्शनिकास्तानाक्षिपन्ति श्रीरामानुजाचार्याः यदद्वैतवेदान्तिनामयमस्ति सिद्धान्तः सर्वथा प्रामाणिकः यत् निराकार, निर्विकार, निष्कल, निःसङ्गब्रह्मणो ज्ञानात् अविद्यानिवृत्तिर्जायते । यतस्तावत्—

"वेदाहमेत पुरुष महान्तमादित्यवर्णं तमसः परस्तात्[1] ॥"

इत्यादिश्रुतिघटकीभूतेषु वाक्येषु ब्रह्मणो विशेषणाना महदेव सुन्दरतर वर्णनं मिलति ।

परन्तु तादृशविशेषणविशिष्ट विशेष्यीभूतस्य ब्रह्मणो ज्ञानस्याऽविद्यानिवर्तकत्व नास्तीति निवर्तकानुपपत्तिरपि अन्यानुपपत्तिवत् तदवस्थैव ।

अविद्यापरपर्यायभूताया मायाया आहोस्वित् मायापरपर्यायभूताया अविद्याया निवर्तक ज्ञान ब्रह्मस्वरूप ज्ञान भवतीति नहि तिरोहितमस्ति केषामपि विदुषाम् ।

सर्वाधिष्ठानभूत सर्वावभासक स्वय स्वतः प्रकाशरूप निर्विशेष पर ज्ञात्वाऽपि नहि भवति अज्ञाननिवृत्तिस्तदा सर्वविद्वज्जनाऽनुभवाऽपलापः स्यात्, सर्वाणि च शास्त्राणि, सर्वे च वेदाः खलु निरर्थका एव स्यु । यतो ज्ञानस्याज्ञाननिवर्तकत्व सर्वाणि शास्त्राणि समुद्गिरन्ति तत् शास्त्रकथनमपि सर्वथा मिथ्याभूतमेव स्यात् । अपि च—

"दृष्टि ज्ञानमयी कृत्वा पश्येद् ब्रह्ममय जगत्[2]

एतेन ज्ञानमयीदृष्टिकरणक ब्रह्ममयजगत्कर्मक यत् फलात्मक दर्शन तेन दर्शनेदमेव ध्वनित भवति, यदेव विधेन दर्शनेन खलु सर्वमेवाऽज्ञानमज्ञानजन्य तम. सर्वथा समूलच निवर्तित स्यात् । तथा च तादृशाऽज्ञानस्य अज्ञानजन्यतमसश्च निवर्तकं ज्ञान सुस्पष्टमेव सिद्ध्यतीति न निवर्तकानुपपत्तिर्ब्रह्ममयज्ञानस्येति तु परमार्थः अपि च—

तेषामेवानुकम्पार्थमहमज्ञानज तम. ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता[3] ।

---

१. श्वेताश्वतरोप० ३-८ ।
२. तेजोबिन्दू प० १/२९
३ गीता १०/११/

आनन्दकन्द: सच्चिदानन्दो भगवान् श्रीकृष्णचन्द्र स्वयं ब्रूते यद् आत्मभावस्थ. खल्वहं ज्ञानदीपेन भास्वता ज्ञानजं तमो नाशयामि । अर्थात् नित्यनिरन्तरसमाधिनिष्ठा-संभावितप्रतिबद्धभावेन निरङ्कुशप्रकाशवता ज्ञानदीपेन अज्ञानजन्यम् अथात् अविद्या-जन्यम् अर्थादविद्यालक्षणमायाजन्यमावरणात्मक तमोऽहं नाशयामि । यथा घट-पटाद्या-वरक तम. उदयाचलारूढो भगवान् भास्कर. स्वीयेन प्रकाशेन यथा विध्वंसयतीत्यत्र तमो-निवर्तकत्व भगवतो भास्करस्योपपन्न भवति । तथैव धीस्वरूपवृत्तिफलकारूढोऽहं मत्प्रकाशव्याप्तधीवृत्तिविशेषेण मत्स्वरूपावरकमविद्याध्वान्त निःशेष निवर्तयामीति अज्ञानापरपर्यायभूताया अविद्याया. मायाया निवर्तकत्व ब्रह्मस्वरूपस्य ज्ञानस्य साधु सूपपद्यते इति न निवर्तकानुपपत्तिः सगच्छते । इत्थ चेश्वरप्रसादेनैव सम्यग्ज्ञान तत एवाऽविद्याध्वान्त नि.शेष निवृत्तिस्तयैव विदेहकैवल्यमपीतिभावः ।

अपि च शुक्तिरूपमधिष्ठान ज्ञात्वा यथा रजतस्य तत्र बाधितत्वेन रजत-विषयकमज्ञान निवर्तते । यथा वा रज्जुस्वरूपमधिष्ठान साक्षात्कृत्य सर्पत्वप्रकारकम ज्ञान निराकृत भवति ।

एव सर्वत्र वाऽनुभूयते यद् अधिष्ठान ज्ञात्वा मिथ्यात्वेन भासमानस्य वस्तुनो ज्ञानस्य निवृत्तिर्जायते, इति न निवर्तकानुपपत्तिः । अपि तु ब्रह्ममयस्य ज्ञानस्य जगत्का-रणीभूतस्य ज्ञानस्य मायारूपस्य निवर्तकत्व सुस्पष्टमेवेति फलितोऽर्थः ।

(७) निवृत्त्यनुपपत्तिस्तत्परिहारश्च -

श्रीरामानुजाचार्या ब्रह्मात्मैकत्वज्ञानेनाऽविद्याया निवृत्ति नानुमन्यते । श्रीरामा-नुजाचार्यस्येदमस्ति कथन यद् बन्धन स्वाभाविक वास्तविक चेति बन्धनरूपायास्तस्या अविद्याया ब्रह्मात्मैक्यज्ञानेन निवृत्तिर्नहि भवितुमर्हति ।

श्री रामानुजाचार्यस्येयमस्ति विचारधारा यज्जीवस्य पुण्यपापरूपकर्मनिमित्त-वशादेव मानव, देव, दानवप्रभृतिशरीराणामवाप्तिर्जायते नान्यथा, अतो नास्ति बन्धन मिथ्याभूतमपि तु वास्तविकमेव तत् अविद्यारूप बन्धन, तत्कृत वा बन्धनम् । वास्त-विकस्य च न निवृत्तिर्जायत इति श्रीरामानुजाचार्यस्य हार्दिकोऽभिप्राय. । अत एव ते आचार्य-महोदया बन्धन मिथ्यात्वेन नोल्लिखितवन्त । यदि बन्धन मिथ्याभूत भवत्तदा ब्रह्मात्मनोरैक्यज्ञानात्तन्निवर्त्य स्यात् न चैवमस्ति, अतस्तादृशेऽस्यज्ञानेऽपि मायाया: अविद्याया निवृत्तिर्नोपपद्यते इति निवृत्त्यनुपपत्तिरक्षुण्णैवास्ति अविद्याया इति ध्येयम् ।

अथाऽद्वैतवेदान्ती ब्रूते यत् ब्रह्मात्मैकत्वज्ञानेन मायाया. अविद्याया निवृत्तिर्न जायते इत्यस्ति खलु श्रीरामानुजाचार्यस्य स्वेच्छानुसारिताप्रयुक्त दुराग्रहमात्रम्, स्वेष्टकल्पनामात्र चेति न तत्कथन साम्प्रत प्रतिभाति ।

---

१. श्रीभाष्यम् १/१/१

अद्वैतवेदान्तकथनानुसारं बन्धनं नास्ति वास्तविकमपि तु अविद्याजन्यम् तद्, अत एव मिथ्याभूतं तद्बन्धनम्। यन्नास्ति अविद्याजन्यं तदेवास्ति केवलं सत्यम् अमिथ्याभूतञ्च। ब्रह्मैव केवलमस्ति सद्भूतं वस्तु ततोऽतिरिक्तं सर्वमेवाऽसत्-सत्ता-शून्यम्, नहि सर्वथा सत्त्वविहीनं नञ्ज्यन्ताऽसत् बन्ध्यापुत्रवद् वन्ध्यवंनगरवच्च इत्यादि। तथा चोक्तमपि—

"सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम्।
प्रपञ्चाधाररूपेण वर्ततेऽतो जगन्नहि[1]॥

अपि च—

उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते।
तस्मात् सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति नचेतरत्[2]॥

एवेनेदमेव सिद्धं भवति यद् अद्वैतसिद्धान्तमेव सत्यं शिवं सुन्दरमस्ति। ततोऽतिरिक्तं द्वैतसिद्धान्तं भेदसिद्धान्तं सर्वमेवास्ति मिथ्याभूतमसदिति। अपि च—

"मायामात्रमिदं द्वैतमद्वैतं परमार्थतः"
"न तु तद्द्वितीयमस्ति"[3]

अतो द्वैतब्रह्मतत्त्वमेव पारमार्थिकं तदेव सत्यं शान्तं शाश्वतम् अस्ति। अविद्यामूलकं च सर्वमेव द्वैतं दर्शनं कैवल्यनिवर्तकं, बन्धनकारकं, भयप्रदम्, मृत्युस्वरूपम् परतन्त्रम् क्षयशीलम्, विकृतम्, दुःखं स्वरूपम्, इति विद्वज्जनानुभवः।

इत्यञ्चाऽविद्यामूलकानां सर्वेषामेव निवृत्तिर्जायते ब्रह्मात्मैकत्वज्ञानतः। अविद्याया अपि तत एव निवृत्तिः सुस्पष्टतरैव। ज्ञानतोऽज्ञाननिवृत्तिः सर्वजनानुभवसिद्धा।

अपि च—

"ब्रह्मादिस्तम्बपर्यन्ता मृषामात्रा उपाधयः"[4]

एवं च मायाया अविद्यायाश्चोपाधित्वेन तयोरपि मिथ्यात्वं सुस्पष्टमेव।

इत्थं च सर्वाधिष्ठानभूतस्य ब्रह्मणो ज्ञानात् सर्वेषामेव मिथ्याभूतपदार्थानां निवृत्तिर्भवतीत्यनुभूतमेतत्।

---

१. आत्मप्रबोधोपनि० १२
२. योगशिखोपनि० ४/३
३. बृहदारण्यकोप० ४/३/२३
४. अध्यात्मोपनि० १८

आभासवाद :

आभास शब्दः आङ् उपसर्गाद्, भास, धातोः अच् प्रत्ययो भूत्वा निष्पन्नो भवति: तस्य च बह्वोऽर्थाः शास्त्रेषु समुपलभ्यन्ते । ते च यथा—

(१) निग्रहस्थानमपि आभासशब्दार्थोऽस्तीतिगौतमवृत्या ज्ञायते ।

तदुदाहरणं च व्यभिचारादावसिद्धयामुद्भावनम् । धूमवान् वह्नेरित्यादौ वह्निहेतुरस्ति इति वह्निहेतुः स्वरूपासिद्धः स्यात् । अयच निरनुयोज्यानुयोगनामकस्य निग्रहस्थानस्य प्रभेदः इति तु विज्ञेयम् ।[1]

(२) क्वचिच्च प्रमोऽपि आभासशब्दार्थ यथा शुक्तौ "इदं रजतम्" इत्यत्र रजताभासः, "अयं सर्पः" इत्यादिस्थले वा भ्रम एव आभासशब्दस्य प्रचितोऽर्थो विज्ञेयः ।

(३) क्वचिच्च अप्रमाज्ञानहेतुरेवाऽस्ति आभासशब्दस्य प्रमाविषयोऽभूतोऽर्थः । यथा तत्प्रयुक्त सामान्यतो दृष्टस्यापि आभासत्वमिति वाचस्पत्याऽगाकर्यात्[2] ।

(४) एवमेव क्वचित् प्रतिकूलरूपोऽर्थः विरुद्धो वार्थः आभासशब्दार्थः इत्यपि केचिद् दार्शनिकाः वदन्ति । यथा तर्काभासः, प्रमाणाभासः न्यायाभासः, इत्यत्र आभास-शब्दार्थः प्रागुक्तयोरर्थयोः प्रयुक्तो वेदितव्यः ।

(५) तर्कजवृन्दवरवारणवारणभुवो नैयायिकाः खलु ज्ञानविषयीभूतम् अर्थमेव आभासशब्दार्थं वदन्ति । यथा हेत्वाभास इत्यत्र हेतुरूपोऽर्थः । अत्र हेतुवदभासते इति व्युत्पत्या आभासपदं हेतुनिष्ठदोषपरं विज्ञेयम्[3] ।

(६) मायावादिनो वेदान्तिनस्तु प्रतिबिम्बरूपमर्थम् उपाधितुल्यया भासमानम् । आभासशब्दार्थं वदन्ति । तथाचोक्तम्—

वुद्धितस्थचिदाभासो द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासात् घटः स्फुरेत्[4] ॥

एवम् क्वचिद् आकृतिः छायापुरुषः, इत्यादयोऽपि बह्वोऽर्था आभासशब्दजन्य-बोधविषयतावन्तो भवन्तीति अन्ये दार्शनिकाः खलु प्रोक्तवन्तस्ते च लेखविस्तरभया-न्नोच्यन्ते ।

---

१. गौतम सू० ५/२/२२
२. निम्बार्कपि २ पृ० १०५
३. न्या० र० सामा०
४. पञ्चदशी ७/९१

प्रकृते चाऽन्यतमाऽऽभासशब्दार्थमध्ये कोऽयमाभासशब्दार्थो ज्ञानविषयत्वेन समादरणीय इत्याशङ्का मायावादिवेदान्तिमतमाश्रित्यैव समाहिता भवति । तथा हि—

अयचाऽऽभासवादो विशेषतो वार्तिककारसम्मतोऽस्ति । तत्र प्राक् स्वीयाऽभिप्राय दर्शितवतो वार्तिककारस्येदमेवास्ति तात्पर्यं यद् अन्यसम्बन्धेनाऽन्यत्राऽऽभासमानत्वमेवाऽऽभासः । यथा जपाकुसुमसान्निध्येन स्फटिकमणौ रक्तिमावभासमानत्वमनुभूयते ।

प्रकृते चाऽज्ञानरूपोपाध्यवच्छिन्न आत्मा ज्ञानेन सह तादात्म्यमवाप्नुवान. स्वीयचिदाभासा विवेकरूपकारणवशात् अन्तर्यामी, साक्षी, जगत्कारणम् ईश्वर इत्यादिरूपैर्व्यपदिश्यते व्यवह्रियते च ।

एव बुद्ध्युपहितो बुद्धितादात्म्यमाप्नो बुद्धिगुहाया च संश्लिष्यमानो जीवस्वरूपश्चेतनतत्वभूत आत्मा स्वीयचिदाभासाऽज्ञानेन एव कर्तारं भोक्तारं प्रमातारं चानुभवति ।

तात्त्विकदृष्ट्या विचार्यमाणे स चैक एवाऽऽत्मा द्वितीयतत्वभूत. ' एकमेवाऽद्वितीय नेह नानास्ति किंचन" ।[1]

'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः'[2]
"न तु तद्द्वितीयमस्ति"[3]

इत्यादिश्रुतिवाक्यतो नानात्वनिषेधपरत्वेन यथार्थत पारमार्थिकदृष्ट्या स्वगतभेद, सजातीयभेद, विजातीयभेदेत्याकारकभेदत्रयराहित्यावच्छिन्न अन्तर्यामित्व, साक्षित्व, जगत्कारणत्वादिकल्पितरूपोपाधिभिर्व्यवह्रियते ।

तच्च रूपमज्ञानम् अविद्या माया, कल्पित तदात्मक वेति विचारान्तरम् । तच्चाऽज्ञानमनादि मिथ्याभूत च ।

एतदज्ञानोपाध्यवच्छिन्नश्चेतन एवाऽज्ञानरूपोपाधौ भासमानो भवति येन चराचरात्मक जगदिद तदात्मनो वा प्रपचो दृष्टिगोचरता गच्छति ।

अज्ञानरूपोपाधौ फलितचिदाभास उपाध्यन्तर्गतत्वादेवाऽन्तर्यामीति संज्ञां लभते ।

अज्ञानरूपोपाधि स्वय साध्यभूतस्तदपेक्षया तादृशोपाध्यवच्छिन्नश्चेतन आत्मभूतो जगन्नियन्ता साक्षीति व्यपदिश्यते ।

---

१. अध्यात्मो प० ६३
२. तत्रैव ६५
३. बृहदार० उ० ४/३/२३

मायापरपर्यायभूतस्याऽज्ञानोपाधेर्जगद्रूपेण परिणामस्तदैव जायते यदा तस्मिन्नुपाधौ चिदाभासो भवति, जगन्निष्ठकार्यतानिरूपिता या चिदाभासनिष्ठा कारणता तादृशकारणताऽत एव चेतनभूत आत्मा जगत्कारणं भवति ।

परमार्थतश्चेतनतत्वभूत आत्मा चिदात्मा वा नास्ति कथमप्युपाध्यवच्छिन्नः अपि तु निरूपाधिक एव सः अर्थात् सर्वथास्ति सर्वोपाधिविनिर्मुक्तः अतः स नास्ति अन्तर्यामी सर्वान्तियामी वा, नापि साक्षी, नापि च जगत्कारणम् इति येन जगन्नियन्तृत्वावच्छिन्नो भवेत् सः ।

किन्तु स्वीयचिदाभासेन सह चिदात्मनो भेदागृहीतत्वात् आहोस्वित् अज्ञानेन सार्धं तादात्म्यप्राप्तत्वात्, चिदाभासेन चिदात्मनो विवेकाग्रहरूपकारणवशादेव चेतनत्वभूत आत्मा सर्वथोपाधिविनिर्मुक्तोऽपि चिदात्माऽन्तर्यामी, सर्वान्तर्यामी, साक्षी, जगत्कारणम्, जगन्नियन्ता, ईश्वर इति च व्यपदिश्यते । यथा स्फटिकमणिना सह तादात्म्यं गतस्य जपाकुसुमस्य लालिमा, रक्तिमा वा स्फटिके स्फुटं भासते ।

तथैवाऽज्ञानेन सह तादात्म्यभावापन्नश्चिदाभासोऽपि अज्ञानतो भेदावच्छिन्नत्वेन नैव प्रतीयते, यतो ज्ञानकार्यभूतबुद्धिरूपोपाध्यवच्छिन्नचिदात्मभाव प्राप्तेन चिदाभासेनाऽविवेकरूपकारणवशादेव चिदात्मैव स्वयं जीवः, कर्त्ता, भोक्ता, आदिनानासंज्ञासञ्ज्ञितो भवति ।

वस्तुतस्तु चिदात्मा एक एव, परन्तु अज्ञानस्य कार्यभूतासु नानात्वेन नानाविधत्वेन वा भासमानासु बुद्धिषु चिदाभासा अपि नानाविधा एव जायन्ते । तैर्नानाविधैश्चिदाभासैर्विवेकाग्रहनिबन्धनरूपकारणवशादेव चिदात्मापि नानात्वेन प्रतीयमानो भवति । "एकोऽहं बहु स्याम्" "एकोऽहं बहु स्याम्" "एकोऽहंबहु स्याम्"—

इति श्रुतेस्तत्र प्रामाण्यं विज्ञेयम् ।

अज्ञानगतचिदाभासाविवेकाग्रहनिबन्धनवशादेव चिदात्मा यद्यपि साक्षी अन्तर्यामी, जगत्कारणम्, ईश्वरः इत्यादिशब्दैर्व्यवह्रियते व्याह्रियते च । तथापि चिदात्मा, प्रागुक्तसाक्षीत्यादिशब्दवत्या मुख्यभूत (वाच्यी भूतो) र्थः लक्ष्योभूतो वाऽर्थोऽस्तीति मा व्यज्ञासि, किन्तु गौणभूतः सोऽर्थ इत्येव तत्र तत्त्वम् इति तु परमार्थः ।

स एव चार्थः "तत्त्वमसी" ति महावाक्यप्रतिपादितो भवति । अर्थात् हे श्वेतकेतो ! स चिदाभासतया भासमानो भूतभावनो भगवान् ईश्वरस्त्वमेवासीत्यर्थः ।

एवमेव बुद्धिगतचिदाभासा विवेकेन चिदात्मा यद्यपि कर्ता, भोक्ता, जीव इति च विज्ञायते । तथापि स जीवभूतश्चिदात्मा नास्ति कर्ता इत्यादिप्रागुक्तशब्दावल्याः वाच्यीभूतोऽर्थः अपि तु गौणभूत एव ।

अत एव "तत्" "त्वम्" पदयोः संशोधनं विदधता श्रीसदानन्देन "वेदान्तसार" नामके ग्रन्थे लक्ष्यीभूत एवार्थो विशुद्धश्चिदात्मा गृहीतः । तथा चोक्तम्—

"तथा तत्वमसीति वाक्यं तदर्थो वा परोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे दिरोधाद्विरुद्धपरोक्षत्वाऽपरोक्षत्वविशिष्टमशं परित्यज्य विरुद्धमखण्ड चैतन्यमात्रं लक्षयति"।[1]

स चाऽस्ति लक्ष्यीभूतोऽर्थः, न च वाच्यार्थः, नापि च वाच्यार्थातिरिक्तोऽन्य एव कश्चन विलक्षणोऽर्थः।

अत एवाऽत्र वाच्यार्थं सर्वथा परित्यज्य लक्ष्यार्थं एव समादृतो भवति, "गंगाया घोषः" इतिवत्। चिदाभासे जडचैतन्याभ्या वैलक्षण्यदर्शनात् तस्य निःसङ्कोचमसंदिग्धंच मिथ्यात्वमनिर्वचनीयत्वमेव वा वक्तव्यम् इत्यस्ति वार्तिककारमतम्। तथाहि—

"स्वरूपतो मिथ्याभूतं प्रतिविम्वमितिवाद, स्वरूपतः सत्यम्। प्रतिबिम्बत्वरूपेण मिथ्याभूत बिम्बमेव प्रतिविम्वमिति वादस्य प्रतिवादत्वमिति भाव।"[2]

स्वामिविद्यारण्यपादा अपि प्रतिबिम्बस्य मिथ्यात्व वदन्ति। तेषा नये मुखस्वरूपबिम्बसन्निधानेन दर्पणादौ किमप्यनिर्वचनीयमेव प्रतिबिम्ब समुत्पद्यते। अत एव जीवेश्वरयोः स्वरूप मिथ्याभूतमङ्गीकृतम्।

यथा भासवादे प्रतिविम्बमनिर्वचनीय वर्तते, तस्य प्रतिबिम्बस्य चाऽधिष्ठानभूता दर्पणादयः उपाधयो भवन्ति। तथैव विवरणोक्ते प्रतिबिम्बवादेऽपि दर्पणस्थत्व, विपरीतदेशाभिमुखत्वादयोऽपि धर्मास्तदीयाः सर्वथा सन्ति अनिर्वचनीया एव।

तेषां च धर्माणामत्राऽधिष्ठान मुखादिस्वरूप बिम्बमेव।

अत एवाऽस्मिन् पक्षद्वयेऽपि अनिर्वचनीयाना पदार्थाना परिणाम उपादानकारणमज्ञानमेवास्तीत्यभ्युपेयम्।

प्रागुक्तवादत्रयविषये शान्करवेदान्तदृष्ट्या विचार .—

तात्त्विकदृष्ट्या विचार्यमाणे प्रतिबिम्बवादे, आभासवादे च नास्ति कश्चन विरोधोऽनुरोधो विवादो वा केषामपि विदुषाम्। यतस्तेषा सर्वेषामेव वादानामेकमेवास्ति लक्ष्यम्। तच्च लक्ष्यमिदमेवास्ति यत् तस्मिन् निरुपाधिके चेतने संसारधर्माणामस्तित्व सर्वथा सम्भवदोषग्रस्तमेवेति न तिरोहितमस्ति केषामपि वेदान्तविदुषाम्। परमार्थिके तैर्भेदानङ्गीकारात् भेदस्याऽज्ञानकल्पितत्वात्। वस्तुतो जीवेश्वरयोश्च पारस्परिको नास्ति कश्चन भेद एव। तथाहि—

"भेददृष्टिरविद्येयं सर्वथा तां विसर्जयेत्"।[3]

अपि च— "अद्वितीये परे तत्वे निर्विशेषे भिदा कुतः"।[4]

तथा — "न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयो."।[5]

---

१. वेदान्तसारः पृ० ८० प ज्वालाप्रसाद गौड़ेन सशोधितः
२. वार्तिके द्रष्टव्यम्
३. म० उ० ६/१३
४. अध्यात्मोपनि० २४
५. „ ४६

अन्यच्चेदमस्ति—

"ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन"[1]

"आत्मनोऽन्यन्न हि क्वचित्"[2]

"उपादानं प्रपंचस्य ब्रह्मणोऽन्यन्न विद्यते ।

"तस्मात् सर्वप्रपंचोऽयं ब्रह्मैवास्ति नचेतरत्"[3] ।

अपि चोक्तम्—

"एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः"[4]

एवम्— "निर्विकारे निराकारे निर्विशेषे भिदा कुतः"[5]

"अभेददर्शनं ज्ञानम्" ।[6]

"न तु तद्द्वितीयमस्ति"[7] ।

यथैकस्मिन् तोये तरङ्गफेनबुद्बुदादिभेदकल्पना, द्वैतकल्पना वा जायते, यथा वैकस्यामेव भूमौ गृहसेत्वादिभेदादिकल्पना सर्वथा वर्तते भ्रान्तिमूला न तु वास्तवी ।

तथैवैकस्मिन् ब्रह्मणि नामरूपादिभेदकल्पनापि नितान्तं भ्रममूलैव न तु तात्त्विकीति मन्तव्यम् ।

यथा वा जलीयतरङ्गादिषु जलधर्माणां द्रवत्व, शीतत्व, शुक्लत्व, मधुरत्वादीनां बहिरन्तर्भागयोरनुस्यूतत्वात् जलसत्ताव्यतिरेकेण पृथक् सत्ताभावाच्च तरङ्गादि सकलमेव जलमात्रमेवास्ति न तु ततोऽतिरिक्तं किमप्यस्ति वस्त्वन्तरम् ।

तथैवाऽसारे खलु संसारेऽपि बहिरन्तर्भागावच्छेदेन सर्वत्राऽविच्छेदेनाऽऽनन्दत्वाऽनन्तत्वादीनां ब्रह्मधर्माणामनुगमदर्शनात् ब्रह्मणोऽस्तित्वाऽतिरेकेण पृथक् सत्ताभावाच्च

१. तेजोबिन्दूप० ३/३२
२. अध्यात्मोपि० ५/५६
३. योगशिखोप० ४/३
४. अन्नोपनि० ५/७
५. अध्यात्मोप० २२
६. स्कन्दोपनि० ११
७. बृहदारण्यकोप० ४/४/२३

"सत्यं ज्ञानमनन्तं ब्रह्म" "चिद्धीदं सर्वम् सद्धीदं सर्वम्" "सर्वं खल्विदं ब्रह्म" "इदं सर्वं ब्रह्मैव" इत्यादिश्रुतिभिः सर्वस्यैव ब्रह्मण्यारोपितत्वात् रज्जुसर्पवत् इत्यादि-युक्तिभिः, मृत्तिकादिदृष्टान्तैश्च तात्त्विकदृष्ट्या विचार्यमाणे चराचरात्मकं सर्वमेव जगदिदं ब्रह्मैवेति नास्ति ततोऽतिरिक्तं किमपीति भेदभावना तन्मूलिका द्वैतभावना च सर्वापि भ्रममूलिका वर्तते न तु वास्तवीति। तथा चोक्तम्—

"ब्रह्मैवेदं सर्वम्"[1]
"अहमेव जगत्सर्वम्"[2]
"सच्चिदानन्दरूपमिदं सर्वम्"[3]
"अहमेवेदं सर्वम्"[4]

अपि च पुनस्तत्रैव—

"परात्मनो मनुष्येन्द्र ! भेदोऽज्ञानकल्पितः"[5]।

इत्यादिश्रुतिभिरपि द्वैत-भेदनिराकरणपूर्वकोऽभेद एव प्रतिपादितो भवति।

अत एव विशुद्धात्मा ब्रह्मनिष्ठो ब्रह्मवित् यतिः सर्वं खलु जगद् ब्रह्मैवेति पश्यति। अर्थात् शनैः शनैः क्रमेण बाह्यविषयेभ्यः खलु मनः अन्तःकरणमुपरतं विदध्यात्। तत इन्द्रियेभ्यस्ततश्चाऽन्तर्विपरीतप्रत्ययेभ्य उपरमेत्। अर्थात् मोक्षैक-कामनया विषयैरिन्द्रियैः।

ब्रह्मातिरिक्तस्याऽभावविचारः—असद् विषयकप्रत्ययैश्च यथा संसर्गो न भवेत्तथान्तःकरणस्य मनसो बाह्यविषयेषु जायमाना प्रवृत्तिं सर्वथोपशमयेत्। उक्तं च—

"यच्छेद्वाङ् मनसी प्राज्ञस्तद्यच्छेद् ज्ञान आत्मनि।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि"।[6]

इत्यादिश्रुतिदर्शितदिशा वाण्युपलक्षितानां खलु सकलेन्द्रियाणां तत्तद्विषयैः सह मनसि लयं कुर्यात्। ततश्च प्रपञ्चकारणीभूतं मनो ज्ञानस्वरूपे आत्मनि लीनं विद्-

१. बृहदारण्यकोप० २/५/१
२. तेजोबिन्दूप० ५/४३
३. नृसिंहोत्तरताप० ७
४. छान्दोग्योप० ७/२५/१
५. विष्णुधर्मोत्तर
६. गीता शङ्करानन्दीटीका श्लो० २५

ध्यात् अर्थात् अहम्भावभूतायां बुद्धौ लीनं कुर्यात्। तथाविधां च बुद्धिं महत्तत्वे लीनां कुर्यात्। तादृशंच महत्तत्वमव्याकृते व्याकृतंच सर्वप्रपंचोपशमे निर्विशेषे परब्रह्मणि लीनं कुर्यात्।

एवं क्रमेण सर्वमेव प्रपंचजातं जगज्जातं वा ब्रह्मणि प्रविलाप्य—

"अहमेवेदं सर्वम्—"[1]

"ब्रह्मैवेदं सर्वम्"[2]

"आत्मैवेदं सर्वम्"[3]

"अहमेव जगत्सर्वम्"[4]

इत्यादिश्रुत्यर्थाऽवष्टम्भजन्यनिश्चयवत्या दृढवृत्या तथाविधवृत्या च निगृहीत-बुद्ध्या प्रागुक्तदर्शितदिशा प्रविलापनेन सर्वत्र ब्रह्ममात्रावशेषभूतप्रभूतं संस्कारबलेन सर्वमेवाऽऽत्मैव सर्वमेव ब्रह्मैवेति न ततोऽन्यदस्तीत्येवंविधप्रत्ययवत्या बुद्ध्या मन आत्म-संस्थं कुर्यात् अर्थात् सम्यक् चैतन्यस्वरूपे ब्रह्मणि मनो निश्चलं विधाय—

"सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन"
इत्यादिश्रुतिबलेन सर्वं ब्रह्मैव पश्येत्।

एवं रीत्या मन आत्मसंस्थं विधाय विद्वान् ततः स्वयं किमपि बाह्याऽभ्यन्तर-देशस्थितं विषयजातं वस्तु न चिन्तयेत्, अपि तु सर्वं ब्रह्मैवेति चिन्तयेत्।

तथा चेत्थं श्रुतियुक्तिदृष्टान्तानुभवबलेन सर्वस्यैव जगतो जगदन्तर्गतस्य वा पदार्थमात्रस्य विषयमात्रस्य वा ब्रह्ममात्ररूपतासिद्धौ सत्यां सम्यक् सरतीति यौगिक-व्युत्पत्तिसिद्धस्य संसारस्य अन्यत्वरूपस्य कार्यत्वस्यापि सर्वथा निवृत्तत्वं सिद्ध्यति, तन्निवृत्या च—

"निमित्तापाये नैमित्तिकस्याप्यपायः"

इति न्यायेन जनकत्वरूपम् आहोस्वित् कार्याऽव्यवहितप्राक्क्षणावच्छेदेन पूर्ववर्तित्वरूपं कारणत्वं सुतरामेव निवृत्तं निरस्तं वा भवति। यतः जन्यत्वसापेक्षत्वा-ज्जनकत्वस्येति जन्यत्वनिवृत्या तन्निबद्धस्य जनकत्वस्यापि निवृत्तिर्बोध्या।

१. छा० उ० ७/२५/१
२. बृहदारण्यकोप० २/५/१
३. छा० उ० ७/२५/२
४. तेजोबिन्दूप० ५/४३

इत्थञ्च जन्यत्वजनकत्वोभयनिवृत्या तु कार्यकारणभावाऽभावरूपमद्वितीयं ब्रह्म सिद्धं भवतीति ब्रह्मणोऽद्वितीयत्वं सुस्पष्टमेव सिद्ध्यति।

यदि च विचारानन्तरमेव ब्रह्मणोऽद्वितीयत्वमिदानीमेव सिद्धं न पूर्वमिति पूर्वकालावच्छेदेन द्वैतं वर्तते एवेति चेदुच्यते। तदपि न साम्प्रतं प्रतिभाति, यतः यथा शुक्तिरेव खलु रजततदवयवरूपेण भासमाना सती दृष्टिगोचरतां गच्छति, यथा वा रज्जुरेव सर्पतदवयवशिरोभागपुच्छप्रभृतिरूपेण भासमाना भवति, यथा वा मरुरेव जलतरङ्गफेन-प्रभृतिरूपेण भासते।

तथैव ब्रह्मैव खलु भ्रमेण द्रव्यगुणकर्मादिभेदभिन्नजगदात्मना भासमानमभूत, तत्त्वतो जगतः किमप्यस्तित्वमेव नास्तीति ब्रह्मसत्ताव्यतिरेकेण जगतः पृथक् सत्ताभावो मन्तव्यः। तथा चोक्तम् —

"ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन"[१]

"उपादान प्रपंचस्य ब्रह्मणोऽन्यन्न विद्यते।

तस्मात् सर्वप्रपंचोऽयं ब्रह्मैवास्ति न चेतरत्"[२]॥

"आत्मनोऽन्यन्नहि क्वचित्" अध्यात्मोप०।

अपि चोक्तं पुनः—

"सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम्।

प्रपंचाधाररूपेण वर्ततेऽतो जगन्नहि"[३]॥

"मद्व्यतिरिक्तमणुमात्रं न विद्यते"[४]।

एतावता प्रबन्धेन निबन्धेन वा जगन्नाथबाबा विश्वनाथस्य ब्रह्मणो या सत्ता तादृशसत्तातिरिक्तसत्ताकत्वाभावः सर्वस्यापि जगतोऽथवा चराचरात्मकस्य सर्वस्यापि प्रपञ्चस्य सूचितो भवति। जगत्कारणीभूते सर्वाधिष्ठानात्मके च ब्रह्मणि बाबाविश्वनाथे सर्वमेवेदं चराचरात्मकव्याकृतादिस्थूलान्तं जगत् आहोस्वित् रसातलादिब्रह्माण्डान्ताश्च सर्वेऽपि लोकाः सन्ति ओताः प्रोताश्च। अर्थात् यथा मणयः सूत्रे भवन्ति ओतप्रोतास्तथैव प्रकृतेऽपि विज्ञेयम्।

---

१. तेजोबिन्दूपनि० ३/३२
२. योगशिखोपनि० ४/३
३. आत्मप्रबोधोपनि० १२
४. त्रिपाद्विभूतिमहानारायणोप० ८/१

अत एव चेतनस्यैकरूपता, एकरसतापि साधु सङ्गच्छते। जीवेश्वरयोरज्ञान-जन्यद्वैतभेदभावनापक्षे एवं जगतः प्रपंचस्य वा तादृशभावनासमुद्भाव्यप्रभावितपक्षे वा ब्रह्मण एकरूपताया एकरसतायाश्च साधुत्व नैव निर्वहति।

केवलन्तत्र चेतनभूते आत्मतत्वे ब्रह्मणि अनाद्यविद्याया आवरणात्मिकाया-स्त्रिगुणमय्या मायायाः ससर्गविशेषवशादेव जीवेश्वरविषयिणी भ्रमभेदभावना समुद्-भाव्या भवतीति नात्र किमपि चित्रम्।

अत एव आनन्दत्व, कूटस्थत्व, चिद्रूपत्व, सद्रूपत्व एकरसत्व, शुद्धत्व, बुद्धत्व, सर्वज्ञत्व, स्वयंप्रकाशत्व, सर्वसाक्षित्वादिधर्मैर्विलक्षणं सर्वथा विजातीय च तथाऽऽवरण-रहितत्वाच्च सर्वकालावच्छेदेन स्वयमेव प्रकाशमानम् अहमर्थस्वरूप प्रत्यक्षानुभूत्या सुषुप्त्यवस्थायामपि भासमानमेकरूपं निर्विशेषं परं ब्रह्म नाभिजानाति।

तत्त्वतो विचार्यमाणे सर्वथाऽसङ्गे तस्मिन् चेतनभूते आत्मस्वरूपे ब्रह्मणि जीवेश्वरभावनायाः सर्वथाऽभाव एवाऽनुभूयते।

यद्यपि चेतने तस्मिन् परब्रह्मणि परमात्मनि जीवत्वेश्वरत्वरूपधर्मौ परस्परं सर्वथा भिन्नौ कल्पितौ च वर्तेते।

तथापि धर्मिणोर्जीवेश्वरयोर्नास्ति कश्चन भेदोऽतस्तौ परमार्थतोऽभिन्नावकल्पि-तावेव च स्तः। एतत्पक्षसाधनमेव खल्वस्ति एतेषा प्रतिबिम्ब, अवच्छेदप्रभृतीना वादाना समानं लक्ष्यम्।

आभासवादस्य प्रतिबिम्बवादस्य वाऽत्र नास्ति यौक्तिको वितानमात्रभूतो बौद्धिकः प्रपंचः, प्रत्युत प्रपंचग्रस्ता चेतना स्वीयवास्तविकचिद्रूपताया व्यवस्थितां विधातुमेव खल्वियमस्ति श्रुतिस्मृतिसमर्थितोपायभूता व्यवस्था।

"रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय"[1]

अर्थात् स चेतनः प्रत्येकं रूपे विराजमानत्वात् स्वस्थितिमत्वाच्च प्रतिरूपस्वरूपो बभूव। अत एव "सर्वं खल्विदं ब्रह्म" इत्यपि श्रूयते। अत एव च तस्य सर्वस्वरूपता-कथनमपि साधु संगच्छते।

अतः स चेतनः क्वचित् कृष्णरूपेण, कदाचिद् रामरूपेण, नृसिंहरूपेण, एव-मन्यदा कालावच्छेदेन इतोऽतिरिक्तेनापि अन्यान्यरूपेणोपासकाना कार्यार्थं प्रादुर्भवति बभूव च। तथा चोक्तम्—

"उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना"[2]।

---

१. बृहदारण्यकोप० २/५/१९
२. श्रीरामपूर्वतापनीयोप० १/७

इय च तस्य चेतनतत्वस्याऽऽत्मनः प्रतिरूपप्राप्तिः केवलं तस्य प्रतिस्थापनार्थमेव वेदितव्या। यद्येव न स्यात्तदा तदीयनामरूपाणां प्रख्यातिरभिव्यक्तिरेव न स्यात्। नामरूपाणामभिव्यक्त्यभावे च तस्य चेतनतत्वस्य परब्रह्मणः परमेश्वरस्य भूतनाथस्य बाबाविश्वनाथस्य "प्रज्ञानघन" संज्ञक निरुपाधिकं रूपमेव न श्रुतिगोचरीभूतं भवेत्। श्रुति-स्मृत्यादिषु प्रतिपादित चेद रूपमेव विलुप्तप्राय स्यादिति हेतोस्तदीय-प्रतिरूपस्वरूपता नितान्तमावश्यकीति मन्तव्यम्।

इद च सर्वं मायाया एव माहात्म्य (महत्त्वं) विज्ञेयम्। तथा चोक्तम्—

"जीवेशावाभासेन करोति माया"[1]

अर्थात् चिदाभासद्वारा माया जीवेश्वरयोर्भेद विधत्ते। अत एवेद कथनमपि साधु संगच्छते—

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"।[2]

अर्थात् एक एवात्मा चेतनतत्वभूतः परमात्मा स्वभावतः स्वरूपतः खल्वेकोऽपि जले प्रतिबिम्बितचन्द्रवत् प्रत्येकमन्तःकरणे प्रवेश विधाय बहुरूपतामापन्नो भक्ताना योगिना स्थितप्रज्ञाना च दृष्टिगोचरता गतो भवति।

"स एष इह प्रविष्टः[3]

अर्थात् सोऽय व्याकर्ता अस्मिन् शरीरे सन्निविष्टो वर्तते। अय च प्रवेशो दर्पणादौ प्रतिबिम्बप्रवेशतुल्यो वर्तते।

'सीमान विदार्यैतया द्वारा प्रापद्यत"[4]

अर्थात् स एव परमात्मा तस्य मूर्धप्रदेशस्य मध्यभाग विदार्य तेनैव द्वारेणाऽस्मिन् शरीरे प्रविष्टो भवति," । शरीरैकदेशे शरीरावयवभूते वा हृत्प्रदेशे सन्तिष्ठते। उक्तं च—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"[5]

---

१. नृसिंहोत्तरतापनीयोप०
२. ब्रह्मबिन्दुः
३. बृहदारण्यकोप० १/४/७
४. ऐ० उ० ३/१२
५. गीता १८/६१

अपि च—

"तत्सृष्ट्वा तदेवानुप्राविशत्"[1]

अर्थात् स परमपिता परमेश्वरः परमात्मा जगदात्मकं कार्यजातं समुत्पाद्य पुनः स्वेन समुत्पादिते अस्मिन् स्वयं प्रविष्टो भवति। तदेव श्रुतिस्मृतिषु शरीरादिषु परमात्मनः प्रवेशः सुस्पष्टं समुल्लिखितो वर्तते। स चायं प्रवेशो बहिर्भागे सन्तिष्ठमानस्य चैत्रमैत्रादेर्गृहप्रवेशवन्नैव भवितुमर्हति, यतः सर्वमूर्तसंयोगिनो व्यापकस्य परमात्मनः कृते नास्ति कोऽपि बहिर्भागः। अत एव श्रुतिप्रतिपादितप्रवेशान्यथानुपपत्त्या परमात्मनः प्रतिबिम्बं कल्प्यते। यथा दर्पणे प्रतिबिम्बितं मुखं प्रविष्टवद् भवति, तथैव आत्मनोऽपि प्रवेशो विज्ञेयः।

इदं च प्रतिबिम्बं सत्त्वगुणसंपन्नत्वाद् विशुद्धाऽन्तःकरणे एव व्यक्तं भवतीति तादृशप्रतिबिम्बविशिष्टाऽन्तःकरण एव जीवः। उक्तं च—

यथा ह्यको ज्योतिरात्मा विवस्वा—
नपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो—
देवः क्षेत्रेष्वेवमजोऽयमात्मा[2]॥

अर्थात् यथैक एव सूर्यो भिन्नभिन्नेषु जलेषु प्रतिबिम्बितो भूत्वा अनेकत्वेन भासमानो भवति अर्थात् अनेकत्वेन दृष्टिगोचरतां गच्छति। तथैव द्वितीयमपि ब्रह्म नानाऽन्तःकरणोपाधिषु प्रतिबिम्बितो भूत्वाऽनेकत्वेन प्रतीयते। अतोऽन्तःकरणेषु तस्य प्रतिबिम्बमेव जीवः।

अपि चोक्तं ब्रह्मसूत्रेऽपि—

"आभास एव च"[3]

तत्रैव भाष्येऽपि भगवताऽऽचार्येणाऽयमेव पक्षः समर्थितः—

"आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः। न स एव साक्षात्। नापि वस्त्वन्तरम् अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते"।[4]

---

१. तैत्तरीयोप० २/६/११
२. भागवत
३. ब्र० सू० २/३/५०
४. भाष्यम्

अपि च तत्रैव द्रष्टव्यम्—

"आभासस्य चाविद्याकृतत्वात्तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिः"[1]

अर्थादयं जीवो जलसूर्यकादिवत् तस्य परमपितुः परमात्मनः प्रतिबिम्बभूत आभास इत्येव विज्ञेयम्। अयं च नास्ति साक्षात् परमात्मैव, नापि च परमात्मभिन्न एवाऽस्ति कश्चिदनिर्वचनीयः पदार्थविशेषो वस्तुविशेषो वेति।

"अत एव चोपमा सूर्यकादिवत्"[2]

अर्थात् यतोऽस्य चैतन्यस्वरूपस्याऽऽत्मनः (परमात्मनः) परप्रतिषेधेनोपदेशः क्रियतेऽत एवाऽस्य जलगतसूर्यप्रतिबिम्बेनोपमा दीयते।

अपि च याज्ञवल्क्यस्मृतावपि—

"आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्॥[3]

अर्थात् यथैकमेवाऽऽकाशं घटादिरूपोपाधिभेदभिन्नं सन्नानात्वेन प्रतीयते। यथा चैक एव सूर्यो विभिन्नजलेषु जलपात्रेषु वाऽनेकत्वेन प्रतिभासते, तथैवैक एवाऽऽत्माऽन्तःकरणरूपोपाधिभेदावच्छिन्नः सन् भिन्नो भिन्नः प्रतीयते।

अपि च भागवतेऽपि—

"ज्योतिर्यथैवोदकपार्थिवेष्वदः—
समीरवेगानुगतं विभाव्यते।
एवं स्वमायारचितेष्वसौ पुमान्—
गुणेषु रागानुगतो विमुह्यति॥[4]

अर्थाद् यथा स्वयंज्योतिःस्वरूपाश्चन्द्रसूर्यादयो जलपूर्णघटादिषु प्रतिबिम्बिता भवन्ति। एवं वायुवेगेन घटगतजलकम्पिते सति तस्मिन् जले प्रतिबिम्बभूताः खलु चन्द्रसूर्यादयोऽपि प्रकम्पिता भवन्तीति नादृष्टचरम्। तद्वदेवायं जीवोऽयं स्वस्वरूपाज्ञानविरचितशरीरान्तःकरणादिषु रागानुगतः सन् तत्र विमुह्यति, अर्थात् अन्तःकरणादीन् स्वस्वरूपं मत्वा तेषामन्तःकरणादीनां गमनागमने स्वीये गमनागमने

---

१. भाष्यम्]
२. ब्र० सू० ३/२/१८
३. याज्ञ० स्मृति ३°१/४४
४. भागवते १०/१/४३

मन्यमानो न कदाचिद् विश्रान्ति भजते, तत्रैव मोहपाशबद्धोऽर्थाऽनर्थस्वरूपानभिज्ञो मूढो गुणेषु रागानुगतो भवति।

अपि च तत्रैव—

"मनसैतानि भूतानि प्रणमेद् बहुमानयन्।
ईश्वरो जीवकलया प्रविष्टो भगवानिति॥"[1]

अर्थात् सर्वेऽपि प्राणिनः स्वीयेन मनसा बहुमानयन्तस्ते सम्माननीयाः समादरणीयाश्च विधेयाः, अत एव ते प्रणामवचसा व्याहर्तव्या व्यवहर्तव्याश्च यतः सर्वेष्वेव प्राणिषु स परमात्मा जीवकलया अर्थात् प्रतिबिम्बांशरूपेण प्रविष्टो भूत्वा सन्तिष्ठते। उक्तं च—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति"[2]।

अपि च

,"ममैवांशो जीवलोके जीवभूतः सनातनः[3]।"

अत्र जीवस्य ब्रह्मांशत्वम्, आत्मनः शरीरेन्द्रियाद्यतिरिक्तत्वम्, निर्विकारित्वम् असंसारित्वंच प्रतिपादितं भवति। भगवान् स्वयं ब्रूते योऽस्ति जीवलोके (संसारे) निराकारस्य निर्विकारस्य निर्विशेषस्य, विवेकरसस्य, खलु ब्रह्मणोऽश इवांशोऽविद्यया प्रकल्पितो भागः सोऽपि मम परमात्मन एव सनातनांशभूतश्चेतनो जीवः कर्ता, भोक्ता, प्रमाता, इत्याद्युपनामभिः प्रसिद्धिं गतोऽस्तीति विज्ञेयम्।

अपि च शाङ्करभाष्येऽपि—

"यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते, तथा-यमप्यंशस्तेनैवात्मना सगच्छति"[4]।

अर्थाद् यथा जले प्रतीयमानो भगवतो भास्करस्य प्रतिबिम्बभूतः सूर्यांशो जलरूपनिमित्तापाये सूर्यमेव गत्वा न निवर्तते, तद्वदेव तस्यैव परमात्मनोऽशभूतो जीवोऽपि तेनैव परमात्मनाऽभिन्नो भवतीति न पुनर्निवर्तते :

इदमत्रावधेयम् आभासवादानुसारेण जीवेश्वरयोः स्वरूपमित्थं निर्णीयते यत् मलिनसत्वप्रधानभूतायामविद्यायां यश्चेतनस्यास्ति प्रतिबिम्बः स एव खलु चेतनतत्त्वपदाभिधेयो जीवः।

---

१. भागवत० १०/१४३
२. गीता १८
३. तत्रैव १५
४. शाङ्करभाष्यम्

शुद्धसत्वप्रधानभूतायामविद्यास्वरूपाया योऽस्ति चेतनप्रतिबिम्बः स एव खल्वीश्वर। जीवोऽपि पारमार्थिक, व्यावहारिक, प्रातिभासिकभेदत्रयावच्छिन्नस्त्रिविधो भवति।

स्थूलसूक्ष्मशरीरद्वयावच्छिन्नकूटस्थचेतनः पारमार्थिको जीवः। अविद्याऽऽवृत-कूटस्थकल्पिताऽन्तःकरणे यश्चेतनप्रतिबिम्बभूत. सूक्ष्म, स्थूलशरीराभिमानी स व्यावहारिको जीवः। एव निद्रारूपया विद्ययाऽऽवृते व्यावहारिके जीवरूपाधिष्ठाने कल्पितप्रातिभासिकाऽन्तःकरणे यश्चेतनस्य प्रतिबिम्बः सोऽस्ति स्वप्नप्रपंचस्याऽभिमानी प्रातिभासिको जीवः।

आभासवादे उपादानकारणदर्पणाद्यधिष्ठाने बिम्बतो भिन्नोऽनिर्वचनीयः प्रतिबिम्बः समुत्पद्यते। अत आभासवादे प्रतिबिम्बस्योत्पत्तौ यदस्ति-बिम्बस्य दर्पणादि-स्वरूपोपाधिना सह सन्निधान तदेव निमित्तकारणम्।

अस्मिन् मते स्थाणुस्वरूपाधिष्ठानस्य ज्ञान यस्मिन् क्षणं जायते तदुत्तरद्वि, त्रि, क्षणमारभ्य पचम, षष्ठक्षणपर्यन्तक्षणाऽभ्यन्तरक्षणेष्वेव'' नास्त्ययं पुरुष. स्थाणुरयम्'' इत्याकारक पुरुषबाधकालीनमभावज्ञान जायते।

ब्राह्मीस्थितेर्विवेचनम्—

अस्मिन् पक्षे नास्ति जीवेश्वरयोरैक्यमपितु जीवब्रह्मणोरैक्यमवश्यमेव स्वीक्रियते तदेव चास्ति सैद्धान्तिकमावश्यक मतमित्यत्र नास्ति केषामपि विदुषा विवादः। यत ईश्वरोऽपि ब्रह्मण एवास्ति प्रतिबिम्बभूत. सगुणब्रह्मेतिशब्दजन्यबोध-विषयश्चेतनतत्वम्। उपाधिविनाशे सत्यपि एव प्रतिबिम्ब प्रतिबिम्बान्तरे नैव मिश्रित भवति, अपि तु चेतनतत्वभूते बिम्बे एव मिलति सर्वत्र प्रतिबिम्बमित्येवास्ति वेदान्त-शास्त्रप्रतिपाद्योऽनुभूयमानश्च सिद्धान्तः।

जीवब्रह्मणोरैक्यक्षण एव खलु सर्वाश्चर्यमयी ब्राह्मी स्थितिर्वर्तते। अस्यामेवा-वस्थायामस्मिन्नेव जीवनकाले कार्यत्व, निष्क्रियत्व, ब्रह्मत्वप्राप्तिमान् सुकृतदुष्कृतात्मक-र्मणोना निरोधमनुभवति। अत्रैव पुनरुक्तम्—

जगज्जीवादिरूपेण पश्यन्नपि परात्मवित्।
न तत्पश्यति चिद्रूप ब्रह्मावस्त्वेव पश्यति[1] ॥

अर्थाद् ब्राह्मी स्थितिमापन्नो ब्रह्मात्मैक्यदर्शी योगी ब्राह्मीदृष्ट्या जगज्जी-वादिक पश्यन्नपि नैव पश्यति। अर्थाद् व्यावहारिकदृष्ट्या पश्यन्नपि पारमार्थिक-

---

[1] पाशुपतब्रह्मोप० २४

दृष्ट्या नानुभवति ब्रह्मातिरिक्तं किमपि। केवलमेकतत्त्वं ब्रह्मतत्त्वमेव सर्वथा सर्वत्रानुभवति। इयमवस्था शास्त्रेषु इत्थं वर्णिता वर्तते—

(१) न जागर्ति न निद्राति नोन्मीलति न मीलति।
अहो परदशा क्वापि वर्तते तद्योगिनः[1] ॥

(२) "स्वराज्ये भैक्ष्यवृत्तौ च लाभालाभे जने वने।
निर्विकल्पस्वभावस्य न विशेषोऽस्ति योगिनः ॥

(३) विक्षेपे न विक्षिप्तः समाधौ न समाधिमान्।
जाड्येऽपि न जड़ो धन्यः पाण्डित्येऽपि न पण्डितः ॥

इमामेव सर्वाश्चर्यमयी ब्राह्मीमवस्थां समनुप्राप्तो विशुद्धात्मा विचक्षणो जगदधिष्ठानभूतब्रह्मतत्त्वदर्शी योगी यतिर्वा कामकर्मसमुत्पत्तेः कारणभूता मूलभूताश्च याः सन्ति विषयवासनास्ताः सर्वा एव विषयवासना विषयवैराग्यपूर्वकतावृशवासनापरित्यागेनैव शुद्ध, बुद्ध, मुक्तस्वभावं स्वस्वरूपं याथार्थ्येन परिचिनोति।

पुनश्च तादृशरूपावच्छिन्नं स्वप्रकाशचिदात्मकमखण्डमात्मान (परमात्मानं) ब्रह्म विज्ञाय विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन पश्यति। ब्रह्मानन्दरसं पीत्वा स्वयमपि तद्रूपतामापन्न एव भवति। तथा चोक्तम्—

अखण्डानन्दमात्मानं विज्ञाय स्वस्वरूपतः।
बहिरन्तः सदानन्दरसास्वादनमात्मनि ॥
स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन[2] ॥

अपि च—

ब्रह्मविज्ञानसम्पन्नप्रतीतमखिलं जगत्।
पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥[3]

इत्थं च निरन्तरब्रह्मानन्दामृतरसेनैव तृप्तत्वाच्च योगिनो यतेर्वा विषयसुखापेक्षाभाव एव सर्वथाऽपेक्ष्यते।

---

१. ज्ञानयोग पृ० १६
२. अध्यात्मोपनि० २७'२०
३. पाशुपतब्रह्मोप० ४६

अयं च निष्कर्षः—

प्रतिबिम्बवाद, अवच्छेदवाद, आभासवादानामुपर्युक्तविवेचनेन सुस्पष्टमिदं विज्ञायते यत् प्रत्येकम् वादे कश्चिद् दोषः कश्चिद्वाऽविरोधोऽवश्यमेव दृष्टिगोचरतां गतो भवतीति सुनिश्चितम्।

एभिः सर्वैरेव वादैः प्रक्रियाप्रकारतया तस्याऽद्वितीयतत्वस्यात्मभूतस्य ब्रह्मणो ज्ञानं नितान्तमावश्यकम् इत्यत्र नास्ति केषामपि विदुषां दार्शनिकानां वा विवादो विरोधो वा।

तस्य सच्चिदानन्दस्वरूपलक्षणलक्षितस्यात्मभूतस्याऽद्वितीयतत्वस्य ब्रह्मणो ज्ञानसाधनता सर्वेषु वादेषु समानैवेत्यतः प्रधानभूतस्य तस्याऽद्वितीयतत्वस्य ब्रह्मणो ज्ञानार्थमेव सर्वेषां वादानामुपादेयता उपकारिता चास्तीति तेषां परस्परमेकवाक्यताऽपि निर्वहतीति सर्वथाऽविरोधः।

एवं तत्वमसीति महावाक्यं जीवात्मपरमात्मनोरैक्यं बोधयतीत्यत्रापि सर्वेषामेव वादानां मतैक्यमनुभूयते। तत्र च वार्तिककारस्याऽनुयायिनोऽपि जहदजहल्लक्षणया तदैक्यं साधयन्ति।

संक्षेपशारीरिककाराः—श्रीवाचस्पतिमिश्रा अपि जहदजहल्लक्षणयाऽथवा भागत्यागलक्षणया जीवब्रह्मणोरैक्यं प्रतिपादयन्ति समर्थयन्ति च।

वेदान्तपरिभाषाकृतः खलु धर्मराजाध्वरीन्द्रमहोदया अपि लक्षणां विनैव तत्तद्वादाभिमतं मतं साधयन्ति।

विवरणकाराश्चापि मुख्यसामानाधिकरण्यं च अभेदसामानाधिकरण्यं च मन्यन्ते।

अतस्तेषु सर्वेष्वेव वादेषु प्रागुक्तेषु आपाततो विरोधे प्रतीयमानेऽपि अन्ततो स्वा तदैक्यप्रतिपादनपरत्वं निर्वहति तेषामिति नास्ति प्रतिबिम्बप्रभृतिवादेषु कश्चन-पारस्परिको विरोधः।

अस्मिन् विषये वार्तिकारस्येदमस्ति वचनं यत्[1]—

"यया यया भवेत् पुंसो व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता"॥

अर्थात् यया यया प्रक्रियया पुरुषस्य प्रत्यगात्मनि व्युत्पत्तिः अथवाऽपेक्षमता प्राप्ता भवेत् सैव प्रक्रिया साध्वी ज्ञेया। तथा श्रुतिविरुद्धार्थस्य परित्यागोऽपि नितान्तमावश्यकः।

1. अ० भा० वेदान्तसम्मेलनपत्रि —

वेदान्तसिद्धान्तमुक्तावलीकाराः श्रीप्रकाशानन्दयतिवरा दृष्टिसृष्टिवाददृष्ट्या सृष्टिविचारान्वितान् वादान् घोषयन्तो घोषयन्ति—

"कौन्तेय इव राधेयो जीवः स्वाविद्यया परः ।
नाऽऽभासो नाप्यवच्छिन्न इत्याहुरपरे बुधाः"[1] ॥

अस्यैव कथितसिद्धान्तस्य पुष्टिं विदधानाः श्रीस्वामिनिश्चलदासमहोदया अपि कथयन्ति—

ज्यूं अविकृत कौन्तेय में राधापुत्रप्रतीत ।
चिदानन्दघन ब्रह्म में जीवभाव तिहिं रीत ॥

अयमाशयः सर्वथाऽसङ्गभूते नित्यमुक्ते, तथा सच्चिदानन्दघने ब्रह्मणि कल्पितानामविद्यादीनां संसर्गतः प्रतिबिम्बताया अवच्छिन्नतायाश्च कदापि संभवो नास्ति । तथैवाऽविद्यायास्तत्कार्यस्य च चेतनभूतब्रह्मसमानसत्ताकत्वमेव नास्ति यतस्तयोः स्वसत्ताशून्यत्वात्, ब्रह्मसत्तातः केवलं सत्तावत्वात् । अतो ब्रह्मैव सर्वदाकालबच्छेदेनैकरूपमेकरसस्वरूपं चास्तीति तथाऽवच्छिन्नता स्वरूपाया प्रतिबिम्बतारूपतायाश्च जीवतायाः सत्त्वं सर्वथा असम्भवमेव, किन्तु कल्पिताऽज्ञानेन कल्पितसंसर्गवशादेव ब्रह्मणि जीवत्वादिकं प्रतीतमात्रं भवति । यथा अविकारिणि कुन्तीपुत्रे कर्णे राधापुत्रत्वप्रकारिका अर्थात् राधानाम्नीसूतपत्नीद्वारा पालितत्वादेव भ्रमात्मिका प्रतीतिर्जायमानासीत् । तथैव प्रकृतेऽपि विकारं विनैव विकाररहिते सर्वथा विकारिणि ब्रह्मणि प्रतिबिम्बत्वावच्छिन्नत्वरूपजीवत्वस्य केवलं भ्रममात्रमेव जायते ।

ब्रह्मैव स्वीया-विद्यया जीवभावापन्नं सत् प्रपञ्चात्मकं भूत्वा सर्वज्ञत्वादिधर्मसहितस्येश्वरस्य कल्पना करोति । अस्मिन् पक्षे जीवोऽपि कल्पित एव । इत्थं चाऽनाद्यविद्याया बलेन स्वकीयस्य ब्रह्मभावस्याऽऽवृतत्वात् तत्र जीवत्वप्रकारकं भ्रममात्रं भवति ।

तत्त्वमस्यादिमहावाक्यजन्यब्रह्मसाक्षात्कारतश्च जीवत्वप्रकारको भ्रमो निवर्तते । भ्रमकालेऽपि ब्रह्मणि नास्ति जीवत्वम् । यथा भ्रमकाले शुक्तौ नास्ति रजतत्वम्, रज्ज्वां वा नास्ति सर्पत्वम् । तथैव प्रकृतेऽपि सर्वथाऽविकृतं ब्रह्म नित्यं मुक्तं चिदानन्दरूपं सदवतिष्ठते ।

---

[1] अ०भा० वेदान्तसम्मेघनपत्रिकातः पृ० १८२

भगवता भाष्यकारेण श्रीवार्तिककारेण चाऽयमेव पक्षो बृहदारण्यकाख्याने कुन्तीपुत्रस्य कर्णस्य दृष्टान्तमादायैव प्रतिपादितः समर्थितश्च । अर्थात् यथा कुन्तीपुत्रस्य कर्णस्य हृदये हीनजातिसंसर्गवशादेव निकृष्टत्वप्रकारकभ्रमभावनाऽभवत् । यया च भावनया मलिनमानसः सन् नानाविद्याऽप्रकारविषयिणीं दुःखविषयिणीं चाऽनुभूतिं तवान् ।

परन्तु यावत्कालावच्छेदेनार्जुनप्रतिद्वन्द्वी कर्णः स्वविषये प्रमानुभूतिं प्राप्तवान् स्वस्वरूपोद्बोधनप्राप्तिपरायणश्च जातः, यदहं भगवतो भास्करस्यांशतः कुन्तीद्वारा समुत्पन्नोऽस्मीति सर्वथोच्चकुलोद्भवोऽहम्, तदा तस्य स्वीया निकृष्टत्वप्रकारिका भ्रमभावना सर्वथा निवृत्ताऽभूत् ।

तद्वदेव खलु सच्चिदानन्देतिस्वरूपलक्षणलक्षितं ब्रह्मापि अनाद्यविद्यासंसर्गवशादेव स्वीयब्रह्मभावस्याऽऽवरणात् जीवत्वप्रकारकभ्रमभावनाभावितंच तद् भवतीत्यतो नानाविधदुःखानुभूतिं च कुरुते । यथोक्तम्—

"राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवाऽऽत्मनोऽज्ञस्य तत्वमस्यादिवाक्यतः ॥

अर्थात् यथा व्याधकुले पालनपोषणतां गतस्य राजकुमारस्य स्वीयराजकुमारत्वप्रकारिकया स्मृत्या व्याधभावो निवृत्तो जातस्तथैवाऽज्ञस्याऽल्पज्ञस्य वा जीवस्य तत्वमस्यादिमहावाक्यजन्यया खण्डब्रह्माकाराकारितयाऽन्तःकरणवृत्या स्वस्वरूपस्मृत्या संसारित्वसम्पादकं तदज्ञानं निवर्तते, स्वस्वरूपानन्दावाप्तिश्च जायते ।

अत्र प्रदत्तदृष्टान्तस्याऽयमेवाशयः यत् मार्गविस्मृतिवशादेव वनं गतः कश्चिद् राजकुमारो व्याधगृहं सम्प्रविष्टस्तत्रैव च पुनरुषितवान् । व्याधोऽपि तमसहायं मत्वा स्वगृहे एव तस्मै निवासं दत्तवान्, स्नेहं चापि दत्तवान् । पुत्रवच्च परिपालयितुं परिपोषयितुं चाप्यारब्धवान् । राजकुमारस्याऽप्यन्तःकरणे व्याधविषयका एव संस्काराः सर्वतोभावेन व्याप्तिमन्तो जाताः । तेन च राजकुमारविषयकसंस्काराणां लुप्तत्वात् "नाहं राजकुमारः" इत्येवंविधा च विपरीतभावना प्रादुरभूत् । सोऽपि व्याधवंशावतंस चाऽऽत्मानं सर्वतोभावेन स्वीकृतवान् ।

तदनन्तरमितः प्राक्कालावच्छेदेन राजकुमारस्य कश्चित् परिचितो जनो राजकुमारं प्रति ब्रूते यत्त्वम् "राजकुमारोऽसि, न त्वं वर्तसे निकृष्टजातीयो व्याधपुत्रः इत्येवंरूपेण तस्य तदीयवंशस्य परिज्ञानं कारयन् निकृष्टकोटिकत्वप्रकारकज्ञानजन्यां तदीयां दुःखानुभूतिंच निवारयन् उत्तमजातित्वप्रकारकज्ञानजन्यां सुखानुभूतिंच

समुत्पादयन् आनन्दसन्दोहमहोदधौ च पातयति, तस्य चाऽऽनन्दानुभूतिं कारयति हीनजातिप्रयुक्तापमानं च विस्मारयति, स्वस्वरूपे च तं प्रतिष्ठापयति।

तथैवाऽऽत्मभूतं चेतनतत्त्वं ब्रह्म अपि "सर्वं खल्विदं ब्रह्म" "ब्रह्मैवेदं सर्वम्" "अहमेवाऽक्षरं ब्रह्म वासुदेवाख्यमद्वयम्" "अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः" "सच्चिदानन्दरूपमिदं सर्वम्" इत्यादिश्रुतिभिः प्रतिपादितं नित्य, शुद्ध, बुद्ध, मुक्ताऽद्वैतादिलक्षणलक्षितं स्वस्वरूपं स्वभावं वा सत्त्वादिगुणमयाऽनाद्यविद्याप्रभावेण सात्त्विकैः, राजसैः तामसैर्वा भावैर्विस्मृत्य जीवभावं जीवत्वम् समवाप्नोति, तज्जन्या च दुःखानुभूतिं प्राप्नोति। अत एव क्षुद्ररोगवत् आरोग्यवत्, भोजनादिजन्याऽऽनन्दवच्च शरीरेन्द्रियादिभ्यः स्वात्मनाऽऽत्मानं पार्थक्येन प्रत्यक्षीकुर्वाणो नहि कोऽपि दृष्टिगोचरतां गतोऽनुभूयते ऽहो महान् अत्यद्भुततरोऽयं विषयः।

मायया प्रभावितः खलु सर्वोऽप्ययं विषयः। अत एव मायाया दुर्जयत्वं लोकशास्त्रप्रसिद्धमिति सर्वेऽपि विवादं कुर्वन्ति वेत्तारः।

ब्रह्म ब्रह्मेति प्रोच्चारयन्तोऽपि माया तत्कार्यमेवानुभवन्ति सर्वतोभावेन सर्वेऽपि प्राणवन्तो जीवाः। ब्रह्मणः केवलं वाग्व्यवहारविषयत्वमेवाऽनुभूयते, न त्वन्तःकरणवृत्तिविषयत्वमपि सर्वेषां वाचि न मनसि पुनः कस्यापि पुण्यात्मनः इत्यभियुक्तोक्तेः।

अत एवाऽन्तःकरणवृत्तिविषयत्वाऽऽभावेन परमार्थभूते वस्तुस्वरूपे ब्रह्मणि चाऽनास्थावन्तो दुष्कर्मणा मोक्षे मोक्षसाधनीभूते च ज्ञाने श्रद्धाभक्तिविरहिताः सन्तः मौनपुन्येन जननमरणप्रवाहे पात्यमाना दुर्विदग्धास्ते जीवाः आनन्दैकरसं हस्तगतं मोक्षाख्यफलं तिरस्कृत्य नानायोनिषु नरके च भूयो भूयः पतनलक्षणमृत्युसंसारवर्त्मनि नितरां वर्तमानाः पुनः पुनः जायन्ते म्रियन्ते च।

अहो बत अज्ञानजन्यमवेदं दौर्विदग्ध्यमपारदुःखकारणम्। यथोक्तम्—

"अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि॥"

१. निरालम्बोप० १३
२. बृहदारण्यकोप० २/५/१
३. नारदपरिव्राजकोप० ३/२०
४. नृसिंहोत्तरतापनीयोप० ६
५. तत्रैव नृ० उ० उ० ७
६. गीता, अ० ९, श्लो० ३

कस्यचित् श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोः सकाशात् शास्त्रश्रवणाद्वा यावत्कालावच्छेदेन स्वस्वरूपविषयकं बोधं ज्ञानं वा नैव कर्तुं पारयति चेतनतत्त्वस्वरूपो जीवः। तावत्कालावच्छेदेन प्रागुल्लिखितश्रुतिचोदिता स्वीयामानन्दरूपता सत्यस्वरूपता, सर्वज्ञता सर्वसाक्षिता, सर्वप्रकाशकता, कूटस्थता, चिद्रूपता मेकरसता चापि नानुभवति।

श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोः सकाशात् शास्त्रश्रवणाद्वा स्वस्वरूपोद्बोधनता गतस्य तस्याऽव्यवहितोत्तरकालावच्छेदेनैव सर्वं स्वस्वरूपसाक्षात्कारणीभूतम् आत्मज्ञानरूपं तत्वज्ञानं प्रागुक्तं सर्वं सुसम्पन्नं भवतीत्यत्र नास्ति कोऽपि विवादो विरोधो वा।

अपि च स्वप्नद्रष्टा पुरुषो (जीव) यथा स्वयमेव स्वप्ने स्वस्मात् भिन्नसर्वज्ञत्वादिधर्मैर्युक्तं कमपि देवं कल्पयति, तस्य मनोयोगपूर्वकोपासनातोऽभ्युदयात्मकं फलमपि प्राप्नोति। तथैवाऽनाद्यविद्यापरपर्यायभूताया मायाया बीजनिद्राया प्रभावेण स्वीयव्यावहारिकजागृतावस्थायामपि कल्पितोपास्योपासकभावद्वारा फलमवाप्नोति।

अयमभिप्रायो यत् जीवस्य कृते यथाऽविद्याद्वारा कल्पिता एव गुरवः शास्त्राणि चोपदेशभूतानि भवन्ति। तथैव स्वप्नेऽपि कल्पिता एव जीवेश्वरादय उपास्योपासकभावमाश्रित्यैव फलप्राप्तिमन्तो भवन्ति, एवं फलदातृत्ववन्तश्च भवन्ति।

अस्मिन् पक्षे एक एव जीववाद, तथा एकजीवकल्पित ईश्वरोऽप्येक एव।

इदं सर्वमेव स्वीयाऽज्ञानकल्पितमिति न किमपि सत्। कल्पितत्वात् सर्वोऽपि मिथ्याभूत एवेति संसारोऽपि कल्पितः अतः सोऽपि मिथ्याभूत एवेति संसारस्याऽत्यन्ताभाव एव निश्चेतव्यः। उक्तञ्च—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता[1]॥

व्यासमहोदयेनाऽप्ययमेव पक्षः समर्थितः। तथाहि—

अज्ञानसंज्ञौ भवबन्धमोक्षौ—
द्वौ नाम नान्यौ स्त ऋततज्ञभावात्।
अजस्रचित्यात्मनि केवले परे—
विचार्यमाणे तरणाविवाहिनी[2]॥

अर्थात् अयमेवास्ति परमार्थता विचार—यत्तत्र नास्ति प्रलयः, नापि समुत्पत्तिः (सृष्टि) वा नापि च कश्चन बद्धः, साधकोऽपि नास्ति कश्चित् न च मुमुक्षुः नापि च मुक्त इति।

---

१. माण्डूक्यकारिका
२. भागवत १०/१४/२६

अयमेव विषयो भागवते व्यासेनापि पुष्टीकृतः यदिदं भवबन्धनं मोक्षश्चाऽनयोर्द्वयोरेवात्यन्ताभावो वर्तते । यतो भवबन्धमोक्षौ द्वावपि अज्ञानकल्पितौ स्तः । सत्यात्मकज्ञान स्वरूपपरमात्मनो भिन्नस्य कस्याप्यस्तित्वमेव नास्तीति संसारस्यात्यन्ताभावः सुस्पष्ट एव ।

यथा भगवति भास्करे नास्ति रात्रिदिवसयोः कोऽपि भेदः पार्थक्यं वा तयोः सत्त्वम् अस्तित्वं वेति । अर्थात् यथा भगवान् भास्करः सर्वथा वर्तते नित्यः स्वयम्प्रकाशस्वरूपश्च तत्र नास्ति परमार्थतो रात्रिदिवसयोर्गणना विभागश्च ।

तथैव चेतनभूतमद्वैतं तद् ब्रह्मापि नित्य, शुद्धं, बुद्धं, मुक्तं, स्वयम्प्रकाशस्वरूपं चाऽतो ब्रह्मणि परमार्थतो नास्ति संसारो मोक्षश्चापीति ।

अन्ततो गत्वा वयं परमपूज्यब्रह्मलीनवेदान्तकेशरिणां श्रीस्वामिनिर्मलपादानामस्मिन् विषये लेखात्मक शब्दभूतं प्रमाण पुष्टिकरणार्थं समुपस्थापयामः ।

कभी माया कभी पर्दा कभी जल्वा समझते हैं ।
न जाने लोग तुझको और भी क्या क्या समझते हैं ।
हकीकत तो बस इतनी है हकीकत खुद हकीकत है ।
तअज्जुब है इसे अहले खिरद क्या क्या समझते हैं[1] ।

अर्थात् कदाचिदाभासरूपेण तदात्मभूतं चेतनतत्त्वं विज्ञायते, कदाचिदावरणरूपेण, कदाचिद् विक्षेपरूपेण कदाचिच्च प्रतिबिम्बरूपेण एवं कदाचित् प्रकाशरूपेण ज्ञायते ।

एवमितोऽतिरिक्तान्यपि बहूनि तत्त्वस्वरूपज्ञानजनकीभूतानि रूपाणि रूपान्तराणि च बहवो विद्वांसो वर्णयन्ति निरूपयन्ति च, येषां विस्तरभयान्नोल्लेखोऽत्र विधीयते ।

तत्वतः सत्यन्त्विदमेवास्ति यत् सत्यमेव सत्यमस्ति, अद्वैतमेव सत्यम् ।

तच्च सत्यभूतम् आत्मस्वरूपं चेतनतत्त्वं नहि कदापि वेद्यं भवतीत्यपि सत्यम् । अपि च—

एक बात है अट पटी झटपट दर्शन होय ।
जो मन की खटपट मिटै चटपट दर्शन होय[2] ॥

(२) प्रतिबिम्बवाद-विवेचनं, अवच्छेदवाद-विचारश्च

प्रतिबिम्बः—प्रतिबिम्बनम्,(क्विप् ल्युट) बिम्बानुरूपप्रतिच्छाय.तदाणलक्षितम् ।

(१) प्रतिबिम्बः—प्रतिबिम्बनम्—अनुकरणम्, इमे सर्वेऽपि समानार्थकाः । यथा—दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् इति ।[3]

---

१. वेदान्त सम्मेलन पत्रिका
२. तत्रैव द्रष्टव्यम् ।
३ सा०दर्पण० परि० १०, श्लो० ६६८

(२) बिम्बानुरूपप्रतिच्छाया भवनम्, इत्यपिप्रतिबिम्बशब्दार्थं प्रस्फोरयन्ति मायावादिनो वेदान्तिनः। मायाङ्गीकर्तृ वेदान्तिमते जीवेश्वरयोर्बिम्बप्रतिबिम्बभावः कल्पितो भवतीत्यपि सुनिश्चितं विज्ञेयम्।

(३) उपाध्यन्तः स्थितिविभ्रमविषय एव प्रतिबिम्बशब्दार्थं इति च केचन विवरणानुसारिणो दार्शनिका वदन्ति। तथाहि—

"दर्पणाद्विपरावृत्तैर्निजैर्नयनरश्मिभिः ।
सन्निकृष्टं मुखं तत्रोपाध्यन्तः स्थितिविभ्रमः ॥
न दर्पणे मुखाध्यासः संस्कारादेरसम्भवात् ।
ममेदमिति भानाच्चेत्याहुर्विवरणानुगाः[1] ॥

अयमस्ति प्रतिबिम्बसिद्धान्तः यद् दर्पणे यदस्ति मुखस्य प्रतिबिम्बं दृश्यमानं तन्नास्ति मुखस्य मुद्रा, नापि च मुखस्यास्ति कश्चिच् चित्रविशेषः (छाप) इत्यर्थः। नापि च छायैव मुखप्रतिबिम्बशब्दार्थः।

एवं तत्र दर्पणावयवेन कस्यचिद् व्यावहारिकमुखस्योत्पत्तिर्जायते तदेवोत्पन्नं व्यावहारिकं मुखं प्रतिबिम्बशब्दार्थोऽस्तीत्यपि न व्याहर्तुं शक्यते, यत्र रज्ज्वामेव सर्पवद् अनिर्वचनीयो मुखाभासः समुत्पद्यते इति चेत्तदपि न युक्तम्, किन्तु दर्पणदर्शनप्रवर्तमानस्य पुरुषस्य स्वच्छदर्पणाद्विपरावृत्तैर्निजैर्नयनरश्मिभिः सन्निकृष्टं मुखमेव ग्रीवोपरिभागभूतं प्रकाशमानं भवतीत्येव दर्पणद्रष्टुर्भ्रान्तिर्भवति यदस्मिन् दर्पणे मदीयं मुखमिति।

नैतावन्मात्रमस्ति पर्याप्तम्, दर्पणस्याभिमुखेऽन्येऽपि ये केचन सन्ति सन्तिष्ठमाना व्यक्तिविशेषा वा पदार्था वा तेऽपि दर्पणप्रतिहतैर्नेत्ररश्मिभिः स्वस्वस्थाने दृष्टिगोचरतां गच्छन्ति।

दर्पणसन्निधानेन यद्यपि प्रत्यक्षन्तु ग्रीवास्थस्य मुखस्यैव जायते। तथापि ग्रीवास्थमुखे विपरीतधर्माणां देशाभिमुखत्व, बिम्बभिन्नत्व, दर्पणस्थत्व, प्रभृतीनां भ्रमो भवति।

अत एव खलु द्रष्टुर्मदीयं मुखं दर्पणे वर्तते, मदीयं मुखं पूर्वपश्चिमदिगभिमुखमस्ति। ग्रीवास्थं मुखं दर्पणस्थमुखाद् भिन्नम् अर्थाद् दर्पणे भासमानं मुखं मदीयमुखाद् भिन्नम्, इत्येव प्रकारेण स्वकीये एव मुखे बिम्बप्रतिबिम्बभावाः प्रतीयन्ते नान्यत्रेति।

तत्र च ग्रीवास्थमुखस्यैव सत्यत्वात् बिम्बप्रतिबिम्बयोः स्वरूपस्यापि ग्रीवास्थमुखाऽभिन्नत्वाच्च ग्रीवास्थलक्षणलक्षितं बिम्बमेव सत्यम्, ग्रीवास्थमुखे बिम्बत्व—प्रतिबिम्बत्व धर्माणामनिर्वचनीयोत्पत्तिमत्त्वेन मिथ्यात्वमेव निश्चीयते। अनिर्वचनीयबिम्बत्व प्रतिबिम्बत्वयोरधिष्ठानं तत्र दर्पणद्रष्टुः पुरुषस्य मुखमेवास्तीत्यत्र नास्ति केनतोऽपि कश्चन विवादः।

---

१. सिद्धान्तलेशसं० द्वि० परि० पृ० ३१७/१९-२०, प्रकाशित अच्युतग्रन्थकार्यालय, काशी।

अत एव बिम्बवत् प्रतिबिम्बस्वरूपमपि सत्यमेव तस्य बिम्बभिन्नत्वात्। केवलं तत्र बिम्बत्व-प्रतिबिम्बत्वधर्ममात्रमेव मिथ्या।

एतद्दृष्टान्तानुसारेणैव खल्वेका दर्पणभूता विद्या वर्तते, शुद्धचेतनस्य प्रतिबिम्बो जीवः, बिम्बस्थानीयश्च शुद्धचेतन ईश्वरः। अविद्यासन्निधानमात्रेण बिम्बभूते सत्यस्वरूपे एकस्मिन्नधिष्ठानभूते ईश्वरे जीवत्वस्य भ्रान्तिर्भवतीत्यन्यत्र विस्तरः।

तात्त्विकदृष्ट्या विचार्यमाणे यथा बिम्बरूप ईश्वरः सत्यः तथैव प्रतिबिम्बभूतो जीवोऽपि सत्य एवेति तत्र केवलं जीवधर्मा अल्पज्ञत्व, अनीश्वरत्व, संसारित्वप्रभृतयः सन्ति सर्वेऽपि धर्मा मिथ्याभूता एव।

अत्रेदमाशङ्क्यते यदा जीवेश्वरयोरविद्यारूप एक एवोपाधिस्तदा तु द्वयोरेवाऽल्पज्ञत्वं सर्वज्ञत्वं वा स्यात्। तथापि उपाधिधर्माः प्रतिबिम्बस्यैव पक्षपातिनो भवन्ति, अर्थात्ते धर्माः प्रतिबिम्बे एव वर्तन्ते, न तु बिम्बेऽपीति।

यथा जलाशये चांचल्यस्य जायमानत्वेऽपि जलगतचन्द्रप्रतिबिम्बं चंचलमवश्यं दृश्यते किन्तु आकाशगतबिम्बरूपचन्द्रः सर्वथा निश्चलतां गतोऽवलोक्यते।

एवमेव खलु दर्पणे यदि लघुत्वं वा दृश्यते तदैव दर्पणगतं लघुत्वमथवा महत्त्वं मुखेऽपि दृष्टिगोचरतां याति। यदि च दर्पणे मालिन्यादिदोषाणामस्तित्वमनुभूयते तदा प्रतिबिम्बेऽपि ते तथैवाऽनुभूयन्ते। किन्तु ग्रीवोपरिभागभूते बिम्बस्वरूपे मुखे ते नानुभूयन्ते।

एवमेवाऽज्ञाननिष्ठजन्यानि रूपितजन्यतावन्तोऽल्पज्ञत्व, अनीश्वरत्व, संसारित्वादयो धर्माः खलु प्रतिबिम्बभूते जीवे एव सन्तिष्ठन्ते नत्वीश्वरेऽपीति।

एतेषां सर्वेषामेव प्रतिबिम्बभूतजीवनिष्ठधर्माणामज्ञानजन्यत्वादज्ञानसत्ताधीन-सत्तावन्त एव सन्तिष्ठमाना भासमाना वा भवन्ति जीवे इत्यत्र नास्ति केषामपि विवादावसरः।

यथा दर्पणाऽभावे बिम्बप्रतिबिम्बयोः कल्पनाविहीनः सन्नेकं मुखमेवाऽवशिष्टं भवति, तथैव ज्ञानेनाऽज्ञाने विनष्टे सति जीवेश्वरयोर्विभागशून्यं केवलमद्वितीयं विशुद्धं चेतनभूतमात्मतत्त्वं ब्रह्मलक्षणलक्षितमेवाऽवशिष्यते, इयमेवास्ति वेदान्तसिद्धान्तस्य चरमा स्थितिः, अन्तिमो वा विनिर्णयः।

अत्राशङ्क्यते प्रतिबिम्बाधिष्ठानभूते देशे बिम्बभूतस्येश्वरस्य अस्तित्वाभावेन सर्वान्तर्यामित्वं न स्यात्। एवमीश्वरस्य सर्वान्तर्यामित्वबोधकश्रुतीनां प्रामाण्य-भङ्गप्रसङ्गश्च स्यात्, तथा च सर्वान्तर्यामित्वबोधकश्रुतिभिः विरोधश्च समापद्येत।

एवं स्थिते प्रकृतो नियमः परिच्छिन्नस्य बिम्बस्य विषये एवास्तीति परिच्छिन्नस्य [illegible], न त्वपरिच्छिन्नस्य [illegible] विषयेऽपीति। अतः प्रतिबिम्बदेशेऽपि ईश्वरस्य

सद्भावसत्वे नास्ति कश्चिद् दोषः।

पुनश्च कश्चिद् यदेवमाशङ्क्येत रूपरहितस्य चेतनस्य प्रतिबिम्बं कथं भविष्यति यतो यस्य रूप चक्षुषा विलोक्यते एवम्भूतस्यैव प्रस्फुटस्य सरूपस्य वस्तुनः रूपवति साकारे द्रव्ये प्रतिबिम्ब दृश्यते, नहि नीरूपस्य द्रव्यस्य नीरूपे द्रव्येऽपीति।

कथञ्चिन्नीरूपस्य द्रव्यस्याऽऽकाशस्य रूपवति जलादिद्रव्ये प्रतिबिम्बाङ्गीकारेऽपि नीरूपस्य नीरूपे सर्वथा प्रतिबिम्बाऽसम्भवात्। इत्थं च नीरूपस्य चेतनस्य नीरूपाया-मविद्याया कथमपि प्रतिबिम्बाऽसम्भवात्।

तन्न समीचीनम्, नीरूपस्यापि रूपस्य प्रतिबिम्बदर्शनात्। एव नीरूपस्य शब्दस्याऽपि आकाशे प्रतिध्वन्यात्मकप्रतिबिम्बदर्शनात्। अत्र प्रबलप्रमाणप्रामाण्य-माह—

"अत एव चोपमा सूर्यकादिवत्"[1]

अर्थाद् अत एव चाऽयमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रति-षेधेनोपदेश्योऽत एव चास्योपाधिनिमित्तमपारमार्थिकी विशेषवत्तामभिप्रेत्य जलसूर्य-कादिवदित्युपमोपादीयते। तथा चेत्यनेनोपनिषत्सु जलादिगतसूर्यप्रतिबिम्बवत् आत्मनो निर्वचन कृतम्। तथा च श्रुति —

यथा ह्ययज्योतिरात्मा विवस्वानपो भिन्नाबहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देव क्षेत्रेष्वेवमजोऽयमात्मा 'इति। एक एव हि भूतात्मा भूते भूते व्यवस्थित। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'।[2]

एक एव आत्माऽनेकमूर्तपिण्डेषु व्यवस्थित. सन् बहुधा दृश्यते, तथैव आकाशस्थोऽपि चन्द्रजलाशयभेदेन भेदवानिव लक्ष्यते।"

इम प्रतिबिम्बवादमाश्रित्य कृतस्यास्य विवेचनस्य वर्गीकरणं प्रायः बहु संख्याकेषु मिलति।

१—शुद्धचेतनाश्रिताया मूलप्रकृतौ यश्चेतनाश्रितः प्रतिबिम्बः स एव ईश्वरः।

२—आवरणशक्ति-विशिष्टमूलप्रकृत्यंशभूता विद्या कथ्यते।

३—प्रपञ्चोपादानभूता या प्रकृतिस्तस्या रूपद्वय कल्पितमस्ति "माया च अविद्या च स्वयमेव भवति"।

अस्मिन् रूपद्वये शुद्धसत्वप्रधाना माया भवति। रजोगुणतमोगुणाभिभूत-सत्त्वरूपा अविद्या कथ्यते। अथवा मलिनसत्वप्रधानाऽविद्या इति च कथ्यते। मायाया

१. ब्र० सू० ३/२/१८।
२. ब्र० बि० उ० १२।

प्रतिबिम्बभूत ईश्वरो निगद्यते । अविद्यायाश्च सन्ति प्रतिबिम्बभूता जीवाः ।

शुद्धसत्वप्रधानमायोपाधिवशादेव ईश्वरः सर्वज्ञः सर्वनियन्ता जगत्कारणमिति चोच्यते ।

मलिनसत्वप्रधानभूताऽविद्योपाधिवशाच्च जीवोऽल्पज्ञः इति चोच्यते ।

उपर्युक्तश्रुत्यनुसारं केचन विचारका एवं मन्यन्ते । यदियं प्रकृति. विक्षेपशक्ति-प्राधान्यात् माया इति च प्रोद्‌टङ्क्यते । आवरणशक्तिप्राधान्याच्चाऽविद्येति ।

विशुद्धसत्वप्रधानमायोपाधिरूपकारणवशादेव चाऽऽवरणाऽसत्वप्रयुक्त ईश्वरः सर्वज्ञो भवति । एतद्वैपरीत्याच्च जीवोऽल्पज्ञो भवति । तत्र संक्षेपशारीरककारा इत्थं वदन्ति—

"कार्योपाधिरयं जीव कारणोपाधिरीश्वरः"
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते[1] ॥"

एतच्छ्रुत्यनुसारमन्त.करणरूपकार्ये प्रतिबिम्बभूतश्चेतनो जीवसंज्ञया संज्ञितो भवति । जगत्कारणीभूतायां मायाया च प्रतिबिम्बतश्चेतन ईश्वरशब्देन व्यपदिश्यते ।

उपर्युक्तेषु चतुर्षु एव पक्षेषु बिम्बप्रतिबिम्बयोरभेद एवाऽङ्गीकृतो वर्तते । अस्मिन् प्रतिबिम्बवादपक्षे प्रतिबिम्बो नास्ति मिथ्याभूतोऽपितु तद्वृत्तिधर्मः प्रति-बिम्बत्वरूप एव मिथ्या ।

अज्ञानोपाध्यवच्छिन्न बिम्बचैतन्यमीश्वरः । एवमन्तःकरणावच्छिन्न, अन्तःकरण संस्कारावच्छिन्नाऽऽज्ञाने प्रतिबिम्बितं चैतन्य जीव इति चास्ति विवरणकारीयं स्वतन्त्रं स्वीयं मतम् ।

अज्ञानोपाध्यनवच्छिन्न' शुद्धचेतनो बिम्बचैतन्यरूप ईश्वरः । प्रतिबिम्बरूपश्च जीव इति ।

अस्मिन् प्रतिबिम्बवादेऽयमस्ति विचारणीयो विषयः—यत् अन्तःकरण, अन्तः-करणसंस्कारयोरन्यतरावच्छिन्नाऽज्ञाने प्रतिबिम्बित चैतन्यं जीव इति यदुक्त तस्याऽयमेवाऽशयः यत् सृष्टिकाले ज्ञानमन्तःकरणावच्छिन्नं भवति, प्रलयकाले चाऽन्त.करण संस्कारावच्छिन्नं तज्जायते, केवलमस्ति एतावास्तु विशेषः ।

अन्तःकरणस्य अन्तःकरणसंस्काराणा चाऽनेकत्वात् एतादृशोपाधिभेदभिन्नमेक-मेवाज्ञानं घटाकाश, पटाकाश, मठाकाशादिवन्नानात्वमवाप्नोति । अनेनैव प्रकारेणैका-ज्ञानपक्षेऽपि नानाजीववादः साधुः संगच्छते ।

अज्ञाने प्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धौ (अन्तःकरणे) च प्रतिबिम्बितं

---
१. शुकर उ० ३/१२

चैतन्यं जीवः। अज्ञानोपाधिविनिर्मुक्त बिम्बं शुद्धमित्युच्यते। इदमेवास्ति संक्षेप-शारीरिककारीयं मतम्।

जीवेश्वरयोर्द्वयोरेवाऽनुगतं साक्षिरूपं शुद्धचैतन्यमस्ति। अस्मिन् शारीरिक-कारमते जीवेश्वरौ द्वावेव स्तः प्रतिबिम्बभूतौ।

अपि चाऽस्मिन्नेव मते समष्टिरूपाऽज्ञाने प्रतिबिम्बितं चैतन्यमीश्वरः। व्यष्टि-रूपाऽज्ञानकार्यभूतासु अनेकबुद्धिषु (अन्तःकरणेषु) प्रतिबिम्बितं चैतन्य जीवः। अनयोर्द्वयोरेव पक्षयोर्बुद्धिभेदाज्जीवनानात्व सिद्धयति।

तत्र प्रथमपक्षे बुद्धेः (अन्तकरणस्य) संस्काराणा भेदो भवति, संस्काराणा भेदाच्च तादृशसंस्कारावच्छिन्नाऽज्ञानस्य भेदो जायते। तादृशसंस्कारावच्छिन्नाऽज्ञानभेदाच्च तादृशसंस्कारावच्छिन्नाऽज्ञाने प्रतिबिम्बितचैतन्यस्य भेदः। तथा चैवप्रकारेण जीवनानात्व सिद्धयति। यत. प्रतिबिम्बं बिम्बान्नास्ति भिन्नम्, अतः प्रतिबिम्बं बिम्बत्वेन रूपेण पारमार्थिकमेव। अस्मिन् पक्षे प्रतिबिम्बं जीवशब्दनाभिधीयताम्, ईश्वरशब्देन वेत्यव्यवदेतत्।

परन्तु केवले प्रतिबिम्बे जीवत्वम् अथवा ईश्वरत्व कदापि नेष्यते, किन्तु प्रति-बिम्बत्वविशिष्टे चेतने एव जीवत्वमीश्वरत्व मन्तव्यम्। यतः केवले प्रतिबिम्बे जीवत्वम् अथवा ईश्वरत्वं यदि भवेत्तदा "तत्, त्वम्" पदयोर्जहदजहल्लक्षणैव न स्यात् असंभवप्राया च स्यादित्यर्थ.। प्रतिबिम्बवादिनो ज्ञानस्यैकता मयदिज्ञानमस्त्येकमिति स्वीकुर्वन्ति वदन्ति च, विवदन्ते चाऽप्यत्र बहव। अय चास्ति विवाद. समस्तजीवानामज्ञानस्यैकत्वे सत्येकस्य जीवस्य ज्ञानित्वे सर्वेऽपि जीवा ज्ञानिनो भवेयुः अज्ञानित्वे चाऽज्ञानिन एव स्युरिति चाऽव्यवस्थापत्तिरूपो दोष. स्यात्।

अस्या अव्यवस्थापत्तेर्वारणमित्थं क्रियते प्रतिबिम्बवादिभिः श्रीप्रकाशात्म-स्वामिभिर्यथाऽनेकघटपटादिव्यक्तिनिष्ठया घटत्व, पटत्वादिरूपया जात्या घटपटादि-व्यक्तीना सर्वासामेव बोधो भवति। ततश्च केषाचिद् घट-पटादिव्यक्तीना विनाशानन्तर सैव घटत्वपटत्वादिरूपा जातिरविनष्टघटादिव्यक्तिषु सन्तिष्ठते।

तथैव प्रकृतेऽनेका ज्ञानिव्यक्तिषु सन्तिष्ठमानमेकमेवाऽज्ञान ज्ञानसम्पन्नान् ज्ञानिनो व्यक्तिविशेषान् विहाय तदितरेष्वज्ञानिषु व्यक्तिविशेषेष्वेव स्वस्थितिमापन्न भवतीति सर्वेऽपि जानन्ति तज्ज्ञाः विद्वांसः।

अत एकस्मिन् ज्ञानसम्पन्ने जातेऽपि सर्वे ज्ञानिनो नैव भवितुमर्हन्ति भवन्ति वा नापि भविष्यन्ति— यथोक्तवान् शारीरिककारः :—

"मनान सकलभ्रमोद्भवनकृत् पिण्डेषु सामान्यवत्।
जीवानां प्रतिबिम्बकल्पवपुषा बिम्बोपमे ब्रह्मणि ॥

विद्वांसं पुरुषं जहाति भजते विद्याविहीनं नरम् ।
नष्टाऽनष्टमिवात्मपिण्डमधुना जातिस्तदर्थं के जगुः ॥[1]

अर्थात् बिम्बोपमे ब्रह्मणि प्रतिबिम्बकल्पवपुषां जीवानाम् सकलभ्रमोद्भवनकृत् खलु अज्ञानं पिण्डेषु अनेकव्यक्तिषु, सामान्यवद् वेदितव्यम् । नष्टानष्टम् आत्मपिण्डम् विद्वांसं पुरुषं जहाति । विद्याविहीनंच नरं पुनः भजते-आश्रयति । अधुना जातिरिव तथा एके जगुः ।

द्वितीयं मतं वर्णयति—

प्रज्ञानानि बहूनसंख्यवपुषो जीवान् मुमुक्षूनपि—
ज्ञानाज्ञानसमाश्रयाननुयुग तेषां च निःश्रेयसम् ।
मायामीश्वरसंश्रयामनुगमात् संसारसंवर्तिनीं—
केचिद् दैवविघातविघ्नमनसः स्वीचक्रुरल्पश्रुता. ॥[2]

अर्थात् केचिद् दैवविघातविघ्नमनस. दैवमेव दुरदृष्टम्, दुरदृष्टकृतेन विघातेन प्रतिबन्धेन, विघ्नं वशीकृतं मनो येषान्ते इत्यर्थः । एवम्भूता अल्पश्रुताः । बहूनि, असंख्यवपुषो जीवान्, अज्ञानानि च स्वीकुर्वन्ति । ज्ञानाऽज्ञानसमाश्रयान्ज्ञानाश्रयाञ्ज्ञानिन, अज्ञानाश्रयान् अज्ञानिनः, मुमुक्षूश्च, असंख्यवपुषो जीवान्, स्वीचक्रुः । तेषां च जीवानामनुयुग, युगभेदेन । निःश्रेयसम्, स्वीचक्रुः । एवन्ते दैवविघातविघ्नमनसः, जीवाऽज्ञानेऽनुगतभूताम्, संसारप्रवर्तिनीम्, ईश्वरसंश्रयाच माया स्वीचक्रु. । इद चास्ति तेषां मतं ते अनेकानि अज्ञानानि, अनेकाश्च जीवान् स्वीकुर्वन्ति ।

इदमत्रावधेयमस्ति ग्रीवास्थिते मुखे बिम्बत्व, प्रतिबिम्बत्वयोर्धर्मयोर्मिथ्यात्वमङ्गीकृतमस्तीति प्रागेवोक्तमस्माभि । बिम्बत्व, प्रतिबिम्बत्वयोरनिर्वचनीयत्वमपि वक्तु शक्यते । वस्तुतः प्रतिबिम्बं बिम्बातिरिक्तं स्वीयं स्वतन्त्रं किमपि अस्तित्वमेव न धत्ते ।

यद्यपि दर्पणद्रष्टुर्मुखस्य, दर्पणगतमुखस्य च प्रतिबिम्बभूतस्य परस्परं नास्ति कोऽपि भेदः । बिम्बभूतस्य मुखस्य पूर्वाभिमुखदर्शनेन दर्पणगतप्रतिबिम्बभूतमुखस्य च पश्चिमाभिमुखदर्शनेनाऽवश्य भेदो भासमानो भवति, परन्तु सोऽस्ति पूर्वपश्चिमदिक्कृतत्वेनोपचारिको भेदो न तु वास्तविक इति ।

अपि च दर्पणे यन्मुख भासमानं भवति तन्मदीय मुखमिति द्रष्टाऽज्ञाह्याऽप्रामाण्यज्ञानास्कन्दितः सन् ब्रूते इत्थम्भूता प्रत्यभिज्ञाञ्च कुरुते, अतस्तत्र भेददृष्टिरविद्येयमित्येव कथनं समीचीनं प्रतिभाति ।

१. सक्षेपशारीरके अ० २, श्लो० १३२
२. तत्रैव, अ० २, श्लो० १३३

यतः ग्रीवास्थमुखातिरिक्तस्य प्रतिबिम्बभूतस्य दर्पणगतमुखस्योत्पत्तौ नास्ति किमपि साधनान्तरम्, अतोऽनयोर्भेदाङ्गीकारः सर्वथाऽनुचितो भ्रममूलकश्चेति पारिशेष्यादभेद एवाङ्गीकार्य इत्येव साम्प्रतं रोचते।

तत्र नास्ति दर्पणावयवेषु कश्चन भेदो नापि च भवितुमर्हति येन तादृशभेदावच्छिन्नास्ते दर्पणावयवा एवाऽतिरिक्तस्य प्रतिबिम्बभूतस्य मुखस्योत्पत्तौ हेतवो भवितुं शक्नुयुः।

प्रतिबिम्बस्य मिथ्यात्वनिरासः

प्रतिबिम्बस्य शुक्तिरजतवत् रज्जुसर्पवद् वा मिथ्यात्वं नैव वक्तुं शक्नुमः, यतः प्रतीयमानस्य वस्तुनो बाधानन्तरमेव मिथ्यात्वन्तस्य सिद्ध्यति नान्यथेति।

शुक्तिरजतस्थले, रज्जुसर्पस्थले वा "नेदं रजतम्" "नाऽयं सर्पः" इत्यादिरूपेण बाधदर्शनानन्तरं शुक्तौ रजतस्य रज्ज्वां सर्पस्य वा मिथ्यात्वं निश्चीयते। परन्तु दर्पणगते प्रतिबिम्बभूते मुखे "नास्तीदं मदीयं मुखम्" इत्यादिबाधाऽदर्शनात् कथं तस्य मिथ्यात्वं निश्चेतव्यम्। अपितु तत्र बिम्बप्रतिबिम्बभूतयोर्द्वयोरेव मुखयोरभेदप्रत्ययो जायतेऽतस्तत्र भेदोऽपि न वक्तुं शक्यते। यतस्तत्र योऽस्ति ग्रीवास्थो मुखविशेषः स एव खलु मुखविशेषः प्रतिबिम्बरूपेण दर्पणे दृश्यते नास्ति ततोऽतिरिक्तं किञ्चिदिति कथन्तत्र मिथ्यात्वभेदव्यावस्थापनस्थितिः सङ्गच्छते।

अतो जीवब्रह्मणोरैक्यं सर्वथा बाधितमेवेति तयोरैक्यं कथमपि नासङ्गतम् अस्ति, श्रुतिचोदितत्वात्। तथाहि—

"जीवो ब्रह्मैव नापरः"

"स जीवः केवलः शिवः"[1]

"जीव एव सदा ब्रह्म"[2]

"न तु तद्द्वितीयमस्ति"[3]

अपि च—

"निर्विकारे निराकारे निर्विशेषे भिदा कुतः"[4]

अन्योऽपि श्रुतिचोदितो जीवब्रह्मणोरभेदः सर्वथा सर्वत्रोपलभ्यते। तथाहि—

"अहं ब्रह्मास्मि"[5]

---

१. मैत्रेय्युपनि० २/१
२. तेजोबिन्दूप० ६/३८
३. बृहदार० उ० ४/४/२३
४. अध्यात्मोप० २२
५. बृहदारण्य० उ० १/४/१०

"अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्"[1]
"अहमेवाक्षरं ब्रह्म वासुदेवाख्यमव्ययम्"[2]
"अहमेव परं ब्रह्म"[3]

अपि च—

"इन्द्रो मायाभि: पुरुरूप ईयते"
"मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"
"तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्"
"एकं सद्विप्रा बहुधा वदन्ति"

इत्यादिश्रुतिभि: परस्यैव ब्रह्मणो मायया सविशेषत्वं सार्वात्म्यञ्च प्रतिपादितं भवति। तत्रेन्द्रादय: शिवादयः क्रतुयज्ञमन्त्रादयश्च जगच्च सर्वमप्यहमेवेति स्वस्थ-ब्रह्मणो विश्वतोमुखत्वसत्त्वतत्त्वं निरूपितम्। न ततोऽतिरिक्तं किमप्यस्ति। जीवोऽपि ब्रह्मैव, ईश्वरोऽपि ब्रह्मैव, किमधिकं ब्रूम इदं चराचरात्मकं सर्वमपि जगद् ब्रह्मैव।

एवं स्वधाशब्देन क्रियमाणं पितृभ्यः पार्वणश्राद्धादि तत् सर्वं स्वधाशब्दि-तमहमेवेति बोद्धव्यम्। एवं यत् प्राणिभिर्भुज्यते व्रीह्याद्योषधिभ्यः समुत्पन्नमन्नं तदौषधमहमेव।

भोज्यस्य ब्रह्मत्वे भोक्त्रादीनां ब्रह्मत्वमेवेति सुस्पष्टमेवेत्यत्र नास्ति कोऽपि विवादः।

येन देवताभ्य: पितृभ्यश्च स्वाहास्वधान्तेन हविर्दीयते स मन्त्रोऽप्यहमेवेति बोध्यम्। आज्यं चरु पुरोडाशादहमेव। अग्निरप्यहमेवेतिरीत्या सर्वमहमेव। तथाचोक्तम्—

"जगज्जीवेश्वरत्वादि सर्वं ब्रह्मैव केवलम्,
"इति स्वपूर्णताज्ञानं परमाद्वैतवेदनम्" ॥[4]
"न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयो: ।
प्रज्ञया यो विजानाति स जीवन्मुक्त उच्यते ॥[5]"

एवं पितामहोऽप्यक्षरसञ्ज्ञको मायोपाधिरीश्वरोऽहमेवास्मीति निर्विवादम्। धाता पोष्टाऽप्यहमेव। एवं यद्वेद्यभूतं शब्दस्पर्शरूपादिलक्षणं वस्तु तत् सर्वमहमेव।

---

१. श्रीमद्भाग० १२/१/११
२. नारदपरिव्राजकोप० ३/२०
३. तेजोबिन्दूप० ६/४४
४. सूतसंहिता
५. अध्यात्मोपनि० ४६

इत्यनेन द्वैत-भेद-द्वैताऽद्वैत-भेदाऽभेदनिरसनपूर्वकमद्वैतं ब्रह्म व्यवस्थाप्यते। यथा—

"ब्रह्मैवेदं विश्वमिदं वरिष्ठम्"[1]

"जगद्रूपतयाऽप्येतद् ब्रह्मैव प्रतिभासते"[2]

"आत्मैवेदं सर्वम्"[3]

"ब्रह्मैवेदं सर्वम्"[4]

"सच्चिदानन्दरूपमिदं सर्वम्"[5]

इत्यादिश्रुतिभिः सर्वाभिरेव ब्रह्मणो विश्वतोमुखत्वं सर्वात्मकत्वमद्वैतरूपत्वं च प्रतिपाद्यते। सच्चिदानन्द आनन्दकन्दो नन्दनन्दनः श्रीकृष्णचन्द्रो भगवान् गीतायाम् मतमिदं पुष्टीकृतवान्। यथा—

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम्।
मन्त्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतम्॥
पिताऽहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेव च॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन[6]!

इत्यादिभिः सर्वाभिरेव श्रुतिस्मृतिभिः ब्रह्मातिरिक्तस्य कस्यापि सत्त्वाभावात् सर्वं ब्रह्मैवेति प्रतिष्ठितम्। यतो ज्ञानयज्ञेन ये सन्ति ब्रह्मोपासनपरास्तेषां मुख्याधिकारिणां परमहंसानां यतीनां यतचेतसामेकत्वेनाऽभेदेन ब्रह्मैवाऽहम् इति स्वात्मिन्नत्वोपासनपरत्वेन "सर्वं खल्विदं ब्रह्म" इत्येव भासते।

इत्थं च प्रागुक्तवर्जितदिशा जीवस्यापि पारमार्थिकाऽबाधितवस्तुब्रह्मरूपत्वेन सत्यत्वमेव सिद्ध्यति।

तत्र द्वैताऽद्वैतप्रमाणानां विषयव्यवस्थितिविधाने द्वैतस्य भेदस्य तदवच्छिन्नस्य

---

१. मुण्डकोपनि० २/२२१
२. आत्मोपनि० २
३. छान्दोग्योप० ७/२५/२
४. बृहदारण्यकोप० २/५/१
५. नृसिंहोत्तरोपनि० ७
६. गीता अ० ९/१६-१९

च वस्तुत्वेन भासमानस्य मिथ्यात्वग्रहे स्वतः प्रामाण्यनिश्चलाः खलु श्रुतिस्मृतयो जीवस्य ब्रह्मरूपता कुतोऽप्यबाधात् साधयन्ति,। तत्र जीवस्य ब्रह्मरूपताया प्रतिबध्य-प्रतिबन्धकभावाऽसम्भवान्न काचित् क्षतिः।

तदेवोक्त श्रीहर्षपादैः —

> सत्यतासत्यपि ज्ञानमयं शब्दः करोति हि।
> अबाधात् प्रमामत्र स्वत. प्रामाण्यनिश्चलाम् ॥[1]

इत्थ चाऽप्रामाण्यज्ञापकाऽभावात् "जीवो ब्रह्मैव नापर." इति श्रुतिजन्या द्वैतब्रह्मविषयिणी प्रमा स्वतस्त्वप्रयुक्तेनाऽप्रामाण्यग्रहानास्कन्दितत्वेन विशिष्टा स्वत. प्रामाण्यप्रामाण्यनिश्चला सर्वथा प्रमाणत्वेन ज्ञापयितुमशक्या बुद्धिर्जायते। सा चानौचित्यापि तर्केण सर्वथा दुर्बाधाऽद्वयबुद्धिर्जीवब्रह्मणोरैक्य बोधयतीति जीवस्य मिथ्यात्व स्वत एव निरस्त भवति।

जीवस्य त्रैविध्यविवेचनम्—

१. पारमार्थिको जीवः
२ व्यावहारिको जीव.
३ प्रातिभासिको जीव

इत्येवरूपेण जीवस्य त्रैविध्य प्रतिपादित श्रूयते शास्त्रेषु सर्वत्रैव जीवेश्वरस्व रूप-विचारप्रस्तावे।

(१) तत्राऽन्तःकरणावच्छिन्न कूटस्थ चैत्य पारमार्थिको जीव कथ्यते।

(२) मायावृते कूटस्थे अर्थात् मायाया कल्पिताऽन्त करणे योऽस्ति चिदाभास. स व्यावहारिको जीव.।

(३) निद्रावृते व्यावहारिके जीवे कल्पितो यश्चिदाभास. स प्रातिभासिको जीव।

इत्थ च जलाशयतरङ्गबुद्बुदन्यायेनोपर्युपरि कल्पनात खलु जीवत्रैविध्य सुचारुतयाऽनुभवविषयीभूत सत् शास्त्रचर्चितमपि भवतीति प्रसिद्धम्। तथाहि—

> मायाच्छन्ने चिदाभास. कूटस्थे व्यावहारिकः।
> तस्मिन्निद्रावृते तादृक् जीवोऽन्य. प्रातिभासिक.॥
> जीवस्त्रिधैव दृग्दृश्यविवेके प्रतिपादिता.।
> इत्येते वर्णिता पक्षा प्रतिबिम्बेशवादिनाम्।[2]

---

१. खण्डनख० शारदा टीकायुते पृ० ८८, श्लो० ११

२. सिद्धान्तलेशस० प्र० परि० पृ० १००, श्लो० ३८-३९, अच्युतग्रन्थ० काशीस्थ. प्रकाशि०

एवमेव कूटस्थस्योपरि व्यावहारिकान्तःकरणे प्रतिबिम्बरूपेण समस्तव्यवहारकाले एको व्यावहारिको जीवः कल्प्यते।

एवं तस्योपर्यपि अस्ति एकोऽनुभूयमानः कल्पितो जीवः यश्च स्वप्नकाले वासनामयप्रातिभासिकरथतुरगादिवत् वासनामयाऽन्तःकरणे प्रतिबिम्बरूपेण प्रतिभासते। विषयश्चाऽयं दृग्दृश्यविवेके इत्थं सुस्पष्टीकृतः।

"अविच्छिन्नश्चिदाभासस्तृतीयः स्वप्नकल्पितः।
विशेषस्त्रिविधो जीवस्तत्राद्यः पारमार्थिकः॥
अवच्छेदः कल्पितः स्यात् अवच्छेद्यन्तु वास्तवम्।
तस्मिन् जीवत्वमारोपात् ब्रह्मत्वन्तु स्वभावतः॥
अवच्छिन्नस्य जीवस्य पूर्णेन ब्रह्मणैकताम्।
तत्त्वमस्यादिवाक्यानि जगुर्नेतरजीवयोः॥
ब्रह्मण्यवस्थिता माया विक्षेपावृतिरूपिणी।
आवृत्याखण्डता तस्मिन् जगज्जीवौ प्रकल्पयेत्॥
जीवो धीस्थश्चिदाभासो जगत् स्याद् भूतभौतिकम्।
अनादिकालमारभ्य मोक्षात्पूर्वमिदं द्वयम्।"[1]

अयं च प्रतिबिम्बवादः संक्षेपशारीरिककृता सता विदुषा समुद्भावितः सन्नधिकाधिकं खलु बहुजनचर्चितः श्रूयते वर्तते्ऽपि च।

अत एवाऽयं प्रतिबिम्बवादः पञ्चपादिकाविवरणकारस्य श्रीप्रकाशात्मस्वामिनोऽपि विशेषतः प्रसिद्धिं गतत्वेन वैशिष्ट्याभीष्टतयाऽभिमतोऽस्तीति सर्वेऽपि दार्शनिका जानन्ति।

अस्मिंश्च प्रतिबिम्बपक्षे बिम्बस्थानीयं चास्ति ब्रह्म तच्च सच्चिदानन्दात्मकस्वरूपलक्षणलक्षितम्। तत्र प्रतिबिम्बस्थानीयो जीवः, स चाऽल्पज्ञोऽविद्योपाधिकोऽनीश्वरत्वादिगुणकश्चेत्यपि विज्ञेयम्।

'अविद्यायां चिदाभासो जीवो बिम्बचिदीश्वरः।
स्वातन्त्र्याद्युपपत्तरित्याहुर्विवरणानुगाः॥'[2]

अत्र प्रतिबिम्बविषये श्रीशङ्कराचार्यपादा इत्थं प्रोट्टङ्कितवन्तः स्वीये भाष्ये—

"तदुच्यते वृद्धिह्रासभाक्त्वमिति" जलगतो हि सूर्यप्रतिबिम्बो जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे च भिद्यते, इत्येवं जलधर्मानुयायी भवति

१ सिद्धान्तलेश० प्र० परि० पृ० १०१, श्लो० ३२-३६
२ तत्रैव, पृ० १०२

न तु सूर्यस्य तथात्वमस्ति"[1]।

अपि च तत्रैव –

"यथा चोदकशरावादिकम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते"[2]

इतोऽस्तिरिक्तस्थलेऽपि यथा—

"अत्राऽस्मिन्नात्मनि हि निरुपाधिके जलसूर्यप्रतिबिम्बभेदा इवादित्ये प्राणाद्युपाधिकृता विशेषाः प्राणादिकर्मजनामधेया यथोक्तं ह्येत एकात्मभिन्नता भवन्ति प्रतिपादयन्तः[3]।

अन्यत्रापि च—

"वृद्धह्रासादिस्वभावानुविधायी हि स चन्द्रादिप्रतिबिम्ब इव"[4]

अयं च प्रतिबिम्बवादपक्षो वर्तते महानेव बलवत्तरः प्रसिद्धिं गतोऽनुभूयमानश्चेत्यत्र नास्ति कश्चन विवादः। अत एवाऽस्य विवेचनं सर्वत्रैव मिलति। यथा— कठोपनिषदि : ऐतरेयोपनिषदि, प्रश्नोपनिषदि, इत्यादिस्थलेषु बाहुल्येनोपलभ्यते।

नैतावन्मात्रमेव पर्याप्तमस्ति शतश्लोकीग्रन्थे, विवेकचूडामणिग्रन्थे, एवं प्रबोधसुधाकरप्रभृतिग्रन्थेष्वपि अयमेव प्रतिबिम्बवादपक्षोऽवलम्बितः। समर्थितश्च पुनः पंचपादिकायां पंचपादिकाविवरणप्रभृतिग्रन्थेषु।

तत्र जीवः प्रतिबिम्बभूतत्वेऽपि नास्ति सर्वेषामेव प्रत्यक्षगोचरीभूतः। स च जीवः "अहंकर्ता" "अहं भोक्ता" इत्यादिरूपेण कर्तृत्व भोक्तृत्वरूपेणाऽऽत्मनो रूपमर्थात् स्वस्वरूपं संस्थापयति सर्वेषां पुरस्तात्।

"अहं गच्छामि" "अहं पठामि" अर्थात् गमन, पठनप्रभृतिक्रियाणामहमेवास्मि कर्त्ता इत्यादिरूपेणाऽहंपदवाच्यताम् अहंपदाभिधेयतां वाऽऽत्मनि जीवे निर्धारयन्ति शास्त्रानुभवशालिनो विद्वांसः।

**अवच्छेदशब्दार्थविचारः**

अव् छिद् घञ् अर्थात् 'अव्' उपसर्गात् 'छिद्' धातोर्घञ् प्रत्ययेन अवच्छेद इति शब्दराशिः सिद्ध्यति। इत्थं च अवच्छिद्यतेऽनेनेति करणे 'घञ्' प्रत्ययं विधायावच्छेदशब्दार्थो निष्पन्नो भवति।

---

१. ब्र०सू० शा०भा० ३/२/२०
२ तत्रैव, २/३/४६
३. बृ०आ०उ०शा०भा० १/४/७
४. तत्रैव, ३/१/६

तत्राऽवच्छेदशब्दार्था विचार्यन्ते—

(१) प्रतियोगी 'अवच्छेदशब्दार्थः । तत्र प्रमाणमाह—

"अवच्छेदग्रहध्रौव्यात् अध्रौव्ये सिद्धसाधनात्"[1]

अवच्छेदग्रहस्य प्रतियोगिग्रहस्य[2]—

(२) खण्डो वा अंशो वेत्यपि अवच्छेदशब्दार्थः ।

(३) कैश्चिद् दार्शनिकवर्यैर्व्याप्तिरूपोऽप्यर्थोऽवच्छेदशब्देन गृह्यते । यथा पक्षतावच्छेदेकावच्छेदेन 'साध्यसिद्धावित्यत्र साध्यनिरूपिता पक्षतावच्छेदकनिष्ठा व्याप्ति ।

अत्रैव तुल्यवित्तिवेद्यन्यायेन व्यापकत्वमपि अवच्छेदशब्दार्थः कर्तुं शक्यते पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यसिद्धौ इति तत्र बोधो विधेय. ।

(४) इयत्ताकरणमपि अवच्छेदशब्दार्थो व्यधायि कैश्चिद् दार्शनिकैर्न्यायशास्त्रकोविदै । यथा—शाखावच्छेदेन कपिसयोग मूलावच्छेदेन च तदभावः ।

(५) एवमेव इयत्ताकरणसाधनमपि क्वचिदवच्छेदशब्दार्थः यथा—अग्रे वृक्षः कपिसयोगी न मूले इत्यादौ कपिसयोगादेरव्याप्यवृत्तित्वनियामको, वृक्षैकावयवो मूलअग्रादिप्रदेश. ।

यथा वा "इदानी चत्वरे गौर्नास्तीत्यादावेतत्कालोऽप्यवच्छेदो भवति। अस्मिन्नर्थे खलु अवच्छिद्यतेऽनेनेति करणरूपेऽर्थे "घञ्" प्रत्ययो नितान्तमावश्यक तेनावच्छेदशब्दो निष्पन्नो भवति ।

(६) क्वचिऽदवधारणमप्यवच्छेदशब्दार्थ. । यथा—शब्दार्थानामवच्छेदे (शब्दार्थस्यानवच्छेदे) विशेषस्मृतिहेतव इत्यादौ ।

एवमन्येऽपि बहवोऽर्था सन्ति अवच्छेदशब्दस्य ये च प्रकृतेऽनावश्यकत्वाद् बहुकालव्ययायाससाध्यत्वाच्च न प्रदर्श्यन्ते ।

भामतीकारवाचस्पतिमिश्रा अवच्छेदवादिन: —तेषामत्र विषयेऽयमस्ति विचारो मतविशेषो वा—

"अज्ञानविषयीकृत चैतन्यमीश्वर, अज्ञानाश्रयीभूत चैतन्य जीव । सर्वगतस्य चैतन्यस्यान्तःकरणादिनोपाधिनाऽवच्छेदस्यावश्यभावित्वात् तदवच्छिन्नो जीव । एवं समष्ट्यज्ञानात्मकमायारूपकारणोपाध्यवच्छिन्न ईश्वर. । घटसवृतमाकाश नीयमाने यथा—घटे घटो नीयते नाकाश तद्वज्जीवो नभोपम" । —भामती

1. न्या०कुसुमा० ३ स्त० श्लो० २२
2. तत्रैव, हरिदासटीका

अर्थादज्ञानस्य विषयीभूतं चैतन्यमस्तीश्वरः, एवमज्ञानस्याऽऽश्रयीभूतंच चैतन्यं जीव एतावांस्तु विशेषः। चैतन्यं सर्वगतम् अर्थाद् व्यापकम्। तच्चाऽन्तःकरणोपाधिना ऽवश्यमेवाऽवच्छेदं प्राप्नोति, तदेव चाऽन्तःकरणावच्छिन्नं चैतन्यं जीवः।

एवमेव समष्ट्यज्ञानभूतमायारूपकारणोपाधिनाऽवच्छिन्नं चैतन्यमीश्वरः, इति नान्तःकरणावच्छिन्नं तच्चैतन्यम् जीवस्यैव तदवच्छिन्नत्वात्।

अयमाशयः प्रतिबिम्बवाद, आभासवाद, प्रतिबिम्बवत् रूपरहितस्य चेतनस्य प्रतिबिम्बं कथमपि नाङ्गीकर्तुं शक्यते। सैद्धान्तिकेऽप्यध्वनि गतिश्चिन्त्यमीषा। यद्यपि रूपरहितस्याऽऽकाशस्य जलादौ प्रतिबिम्बं सुस्पष्टतया दृश्यते। तथापि आकाशे नीलताया आरोपितत्वात् तत्राऽऽरोपितनीलस्यैव प्रतिबिम्बं दृश्यते नाकाशस्य। इत्थंच कूप-तडागादिगतेऽपि जले खल्वाकाशस्यैव प्रतिबिम्बं दृष्टिगोचरीभूतं भवति। जलगते आकाशे नीलताया विशालतायाश्चाऽभावसत्वेऽपि "नील नभः" "नभो विशालम्" इत्यादि विशेषप्रतीतिदर्शनात् आरोपितनीलत्वविशिष्टस्य तथा तथाविधविशालत्वविशिष्टस्य चाऽऽकाशस्य प्रतिबिम्बमवश्यमेवाऽङ्गीकार्यम्।

नीरूपंचेदस्ति आकाशं तर्हि भवतु नीरूपमाकाशम्, आरोपितां नीलताम् आरोपितांच विशालतामादायैव प्राग्दर्शितप्रतीतीनामुपपादयितु शक्यत्वात् अतोऽवच्छेदवादी ब्रूते आकाशस्य प्रतिबिम्बं सर्वथा निराबाधमेव।

किन्तु वस्तुभूते चेतनतत्वे आरोपितनीलताया रूपताया, विशालतायाश्चाभावेन चेतनस्य प्रतिबिम्बं नहि कदापि भवितुमर्हति। चेतनस्य प्रतिबिम्ब नहि भवितुमर्हतीत्यस्यां शङ्कायां आपतेर्वा विरोधेऽयं तर्को दीयतेऽवच्छेदवादिविरोधिभिर्यद् यथा शब्दोऽस्ति स्वयं नीरूपस्तथापि प्रतिध्वनिरूपः प्रतिशब्दस्तस्य नीरूपस्य शब्दस्य प्रतिबिम्बं स्वीक्रियते।

अत एव शब्दजन्यस्य प्रतिबिम्बस्य प्रतिध्वनेर्वा श्रोतव्यत्वादेव श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयताऽभ्युपगम्यते। यथा रूपादीना प्रतिबिम्बत्वाद् दृश्यत्वादेव च चाक्षुषप्रत्यक्षविषयता निराबाधतयाऽनुभूयते।

तथैव नीरूपशब्दवत् तथाविधाऽऽकाशवच्च नीरूपस्य चेतनस्यापि प्रतिबिम्ब मन्तःकरणे भवितुमर्हतीत्यत्र नास्ति कोऽपि विचारावकाशः।

अत्राऽवच्छेदवादी स्वीयं विरोधं प्रकटयति आकाशे योऽस्ति प्रतिध्वनिरूपः प्रतिशब्दो भासमानस्तस्य प्रतिध्वनिरूपस्य प्रतिशब्दस्य शब्दप्रतिबिम्बरूपतां नैव व्याहर्तुं शक्नुमः, यतस्तस्य प्रतिध्वनिरूपशब्दस्य शब्दप्रतिबिम्बरूपताऽङ्गीकारे आकाशवर्तिशब्दस्याऽभावः सर्वदा स्यात् स्यास्यति चेदापत्तिः स्यात्। यतः खलु भेरीदण्डादिसंयोगजन्यस्य शब्दविशेषस्यैव प्रतिध्वनिरूपशब्दकारणत्वं निर्धार्यते।

भेरीदण्डादिसंयोगजन्यस्य च शब्दस्य पंचीकरणन्यायप्रकारेण पार्थिवत्वमपि स्वीक्रियते। तेन च पार्थिवशब्देन पाषाणाद्यवच्छिन्नाऽऽकाशे प्रतिध्वनिरूपः शब्दो जायते। अयंच प्रतिध्वनिभूतो भूतशब्दो नास्ति प्रतिबिम्बभूत, यतोऽस्य प्रतिध्वनिरूप-शब्दस्य निमित्तकारणमस्ति पार्थिवशब्दः, अतोऽयं प्रतिध्वनिरूपः शब्दो वर्तते तत्पार्थिवध्वनिसम.। एवं स्थिते प्रतिध्वनिरूपस्य शब्दस्य नहि कथमपि कदापि कुतोऽपि प्रतिबिम्बरूपताऽङ्गीकर्तुं शक्यते।

अपि च श्रीविद्यारण्यस्वामिपादाः "प्रतिध्वनिभूतो भूतशब्दोऽस्ति पार्थिवध्वनेरनिर्वचनीयप्रतिबिम्बस्वरूप." इति वदन्ति। आकाशं चास्ति व्यावहारिकसत्ताकं, तथा सति तदीयो गुणः प्रातिभासिको नहि कदापि क्वापि कथमपि भवितुमर्हति। इत्थं चाऽयं प्रतिध्वनिशब्द आकाशगुणोऽपि न स्यात् नापि च भवितुं प्रभविष्यति।

श्री विद्यारण्यस्वामिपादाः स्वयं ब्रुवते—

"प्रतिध्वनिर्वियच्छब्दः"

अर्थात् प्रतिध्वनिरस्ति आकाशस्य शब्दात्मको गुणः। अत एव प्रतिध्वनिशब्दस्य नास्ति प्रतिबिम्बम्। यदि च विवरणकारमतानुसारं बिम्बप्रतिबिम्बयोरभेदः स्वीक्रियते तदा प्रतिध्वनेः पार्थिवध्वनेः प्रतिबिम्बरूपत्वात् स्वीयबिम्बाभिन्नत्वात् प्रतिध्वनिरपि पार्थिवगुण एव स्यात्। तत्रेदमस्ति कारणं यत् बिम्बरूपो ध्वनिः पार्थिवः अतः प्रतिध्वनेः शब्दस्य प्रतिबिम्बरूपताऽङ्गीकारे प्रतिध्वनिः कथमपि गगनगुणो नैव भवितुमर्हति।

नीरूपस्य प्रतिबिम्बाभाव उच्यते—

पुनर्नीरूपस्य प्रतिबिम्बसम्भवाऽभावो निरूप्यते यद् आकाशस्य ध्वनिरूपः शब्द प्रतिध्वनिरेवास्तीति पंचदश्या द्वितीये भूतविवेकप्रकरणे श्रीविद्यारण्यस्वामिपादैः स्वयमेव प्रतिपादितम्। यथा—

"वायोरस्ति सी-सी" इत्याख्य. शब्दात्मको गुण, अग्नेश्चाऽप्यस्ति ध्वनिशब्दो 'भुग्-भुग्' इत्याख्य शब्द। एवं जलस्य 'बुल-बुल' शब्द इति, पृथिव्याश्चास्ति 'कड-कड' शब्द इति, तथैवाऽऽकाशस्यापि ध्वनिशब्दोऽस्ति प्रतिध्वनिरूप इति।

यदि च प्रतिध्वने. प्रतिबिम्बरूपता स्वीक्रियते तदाऽऽकाशस्य ध्वनिराहित्यमपि सहैव स्वीक्रियताम्। किन्तु नास्ति शास्त्रसम्मतमिदं कथनम्।

आकाशवर्तिशब्दस्योपादान कारणमाकाशम्। एवमेव भेर्यादिषु योऽस्ति जायमानः पार्थिवध्वनिरूप शब्दात्मको गुण सोऽस्ति प्रतिध्वनेर्निमित्तकारणम्।

एतादृशीं दृष्टिं हृदि निधायैवाऽस्वच्छेदवादी ब्रूते यत् रूपरहितस्य (नीरूपस्य) प्रतिबिम्बं नहि कदापि सम्भवोऽस्तीति बोध्यम्।

"नीलं नभः" विशालं नभः "इत्यादिप्रतीतिमाश्रित्यैव प्राक् नीरूपस्याऽऽकाशस्य प्रतिबिम्बसंभवापत्तिर्दत्ता । तद्दृष्टान्तानुसारेणैव चेतनतत्त्वेऽपीयमेवाऽऽपत्तिर्विशेषतः सुदृढीकृता । परन्तु तन्निराकरोति प्रतिबिम्बवादी यत् कूपवर्तिनि आकाशे कूपजलावच्छिन्ने वाऽऽकाशे नीलताया विशालतायाश्चाऽभावेन यथा नीरूपस्यैवाऽऽकाशस्य तत्र प्रतिबिम्बं भवति, तथैव प्रकृतेऽपि चेतनतत्त्वे इयमेव गतिरनुसरणीयेति प्रतिबिम्बवादिनः कथनमिदं "तुष्यतु दुर्जनः" इति न्यायेन कथचित् सुसङ्गतत्वेऽपि अङ्गीक्रियमाणेऽपि वा रूपरहितोपाधौ अन्तःकरणे विद्याया चाऽपि रूपरहितत्वेन नीरूपस्य चेतनतत्वस्य नास्ति कदापि प्रतिबिम्बसंभवः, उभयोरेवात्र नीरूपत्वात् ।

अतोऽन्त.करणावच्छिन्नश्चेतनो जीवः, तदनवच्छिन्नचेतनश्चास्तीश्वर इत्येव स्वीकर्तव्यम् । आहोस्विदविद्यावच्छिन्नश्चेतनश्चेश्वर इत्येव वक्तव्यमङ्गीकार्यं चेत्यकामेनापि भवताऽवच्छेदवाद एव स्वीकार्यं अतो नास्ति प्रतिबिम्बितश्चेतनः ।

अत्रेद विचारणीयमस्ति यद् अन्तःकरणाऽवच्छिन्नस्य चेतनस्येश्वरत्वे तदङ्गीकारे वा ब्रह्माण्डतो वाह्यदेशस्थे चेतने एवेश्वरत्वमभ्युपेयम् यतो ब्रह्माण्डे तु अनन्तानां जीवानामनन्तान्येवान्त.करणानि सन्ति व्याप्तिमन्ति तस्माद् ब्रह्माण्डमध्यवर्तिनि प्रदेशेऽन्तःकरणानवच्छिन्नचेतनस्यास्तित्व सर्वथा भवितुमशक्यमेवेति तत्रेश्वराऽभाव एव स्यात् । तथा सति च—

"यो विज्ञाने तिष्ठन् विज्ञानादन्तरोयं विज्ञानं न वेद यस्य ज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः"[1]

अर्थात् योऽस्ति विज्ञानपदजीवात्मनि सन्तिष्ठमान. यस्यास्ति च जीवात्मैव स्वयं शरीरम्, जीवात्मा यं विज्ञानस्वरूपं चेतनं न जानाति, यश्च विज्ञानमन्तरो यमयति, स एवाऽमरणशीलो जन्माऽन्तर्यामीश्वरः ।

अपि चाऽयमेव पक्षः स्वयं भगवता श्रीकृष्णेनापि समर्थितो व्यवस्थापितश्च—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥"[2]

अर्थात ईश्वरः ईशानशीलः सर्वलोकनियन्ता परमेश्वरः सूत्रधारी यन्त्रारूढानि सर्वभूतानि ब्रह्मादिस्तम्बान्तानि वासनालक्षणलक्षितया स्वीयया मायया विशेषतवस्था स्वस्वकर्मसु प्रवर्तयन् हृदयरूपप्रदेशे अर्थाद् बुद्धिगुहाया सन्निष्ठते विशेषतो नान्यत्र । अथवाऽत्र विषये इदमपि वक्तु शक्यते । यत्—

'.एष एव साधु कर्म कारयति'यम्" इति, यः सर्वभूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतानि अन्तरो

१. बृहदार० उ० ३/७/२२
२. गीता १८/६१

यमयति "इति श्रवणाद् शरीरस्वरूपेषु यन्त्रेषु आत्मत्वाभिमानेनाधिष्ठितानि यानि भूतानि तानि सर्वाणि भ्रामयन्नीश्वरः सर्वभूतानां हृद्देशे सन्तिष्ठमान आनन्दतादात्म्य-मनुभवति इति भाव.।

इत्थं चाऽन्त.करणानवच्छिन्नश्चेतन ईश्वरः "इति पक्षस्य लक्षणस्य वा समादरणीयताया शास्त्रप्रतिपादितमीश्वरस्याऽन्तर्यामित्वमेव भज्येत। यतोऽन्त.करणानवच्छिन्नचेतनस्तु अन्त करणबाह्यप्रदेशे एव खलु स्वांस्थितिमापन्न. स्यात्। तथा सति च ब्रह्माण्डतो बाह्यदेशस्थे चेतनतत्त्वे एवेश्वरता स्यात्। यतस्तावद् ब्रह्माण्डे तु अनन्तानां जीवानामनन्तानि अन्त करणानि व्याप्तानि सन्तीत्यतो ब्रह्माण्डमध्येऽन्त.करणानवच्छिन्नस्य चेतनस्य सर्वथा भवितुमशक्यत्वेनास्य लक्षणस्याव्याप्तिदोषग्रस्तत्वेन -मायावच्छिन्नचेतनस्यैवेश्वरत्वमङ्गीकार्यम्। तेनेश्वरस्याऽन्तर्यामित्वं साधु सङ्गच्छते, यतः मायोपाधेः सर्वगतत्वात्।

एवं जीवचेतनतत्त्वपक्षेऽपि यदि "अन्त करणावच्छिन्नश्चेतनो जीवः" इत्येतावन्मात्रमेव जीवलक्षणं स्यात्तदाऽन्त.करणस्योत्पत्तिविनाशवत्वेन कृतस्य कर्मणः फलनाशोऽकृतकर्मणश्च फलावाप्तिः स्यात्। अतोऽत्रापि एतद्दोषनिराकरणार्थमविद्यावच्छिन्नश्चेतनो जीव" एतल्लक्षणमेव कर्तव्यम्, नत्वन्त करणावच्छिन्नश्चेतनो जीव इति। अवच्छेदवादे प्रमाणं च—

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपम ॥[1]

अपि च ब्रह्मबिन्दूपनिषदि—

घटसम्भृतमाकाशं लीयमाने घटे यथा।
घटो लीयते नाकाशं तद्वज्जीवो नभोपम. ॥[2]

अर्थात् यथा घटे नीयमाने सति घटावच्छिन्नम् आकाशं न नीयते, केवलं घट एव नीयते तथैव जीवोऽप्याकाशतुल्य एव, अर्थात् सोऽपि अवच्छिन्नचैतन्य एव अर्थात् जीवोऽप्यविद्यावच्छिन्नचैतन्यस्वरूप. तत्रापि उपाधेरेव गमनं जायते। एवं विनाशोऽप्युपाधेरेव भवति न तु चैतन्यस्येति तु परमार्थ.।

इत्थं चाऽविद्यामायाप्रभृतीनामुपाधीनां चैतन्यावच्छेदरूपत्वात् मायावच्छिन्नं चैतन्यमीश्वर. अविद्यावच्छिन्नं चैतन्यं च जीव इत्येवेश्वरजीवयोर्लक्षणद्वयं सुसम्पन्नं भवति।

एतेन खल्वच्छेदवाद एव सुदृढीकृतः सुस्पष्टीकृतश्च स्वयमेव जायते, अर्थादेव तस्मिन् वादे सुदृढत्वमायाति।

---

१. त्रिपुरतापिन्युपनिषत्
२. ब्रह्मबिन्दूपनि०

तात्त्विकदृष्ट्या विचार्यमाणे जीवेश्वरयोर्नास्ति कोऽपि भेदः। केवलमुपाधिभेदमादायैवाऽनयोर्भेदः प्रवर्तते। उक्तं च—

मयि जीवत्वमीशत्वं कल्पितं वस्तुतो नहि"।[1]

अपि च—

मायातत्कार्यविलये नेश्वरत्वं न जीवता[2]—

अन्यच्च—

घटाकाशमठाकाशौ यथाऽऽकाशप्रभेदतः।
कल्पितौ परमौ जीवशिवरूपेण कल्पितौ॥[3]

अपि च श्रीरामपूर्वतापनीयोपनिषदि अपि अयमेव भावो दर्शितः—
यथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना

चिन्मयस्याऽद्वितीयस्य निष्कलस्याशरीरिणः
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना॥[4]

इत्थं च चैतन्यस्याऽविद्याऽन्तःकरणोपाधिभिरवच्छेदमात्रस्य जायमानत्वादवच्छेदवादमाश्रित्यापि जीवेश्वरयोरभेदः प्रमाणपुष्टत्वेन सुस्पष्ट एवेति नात्र विचारशङ्कावकाशः।

अवच्छेदवादे जीवेश्वरयोरभेदः प्रकारान्तरेण साध्यते—

"तस्मादात्मप्रकाशप्रकृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम्।
एवं लौकिकानन्द एतस्य मात्रेति युज्यतेऽवच्छेदात्[5]॥"

तत्रैव च पुनः—

"स्वच्छे परिशुद्धे स्वरूपे जीवोऽवतिष्ठते। अविद्ययैव ब्रह्मणो जीवो विभक्तः, तन्निवृत्तौ ब्रह्मस्वरूप एव भवति। यथा घटादिभेदे तदाकाश परिशुद्धं परमाकाशमेव तिष्ठति"[6]।

एवंच तस्मादेवैकस्मादद्वितीयब्रह्मणो मायोपाधिवशात् समस्तोऽप्ययं चराचरात्मकः प्रपंचोऽपरिच्छिन्नात् परिच्छिद्यते। यथा घट-पटादिरूपोपाधिवशादेव

१. सरस्वतीरहस्योपनि० ३३
२. वराहोपनि० २/५२
३. रुद्रहृदयोनि० ४२
४. श्रीरामपर्वतापनीयोप० १/७
५. ब्रह्मसिद्धि का० १ पृ० ५
६. इदमपि तत्रैव पृ० १२

खल्वपरिच्छिन्नात् महाकाशात् घटाकाश, पटाकाश, मठाकाशादय परिच्छिन्ना भवन्ति। तथा चोक्तम्—

"सत्यमेवैतत् पर एवात्मा देहेन्द्रियमनोबुद्ध्यादिभि परिच्छिद्यमानो वालै शारीर इत्युपचर्यते। यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभ परिच्छिन्नवदवभासते तद्वत्"[1]।

अस्मिन्नवच्छेदवादप्रकरणे श्रीवाचस्पतिमिश्रपादाना सुस्पष्टीकरणमितोऽतिरिक्तमपि भामत्यामित्थ मिलति, यद्—

'यथा घटाकाशो नाम न परमाकाशादन्य, अथ चान्य इव यावद्घटमनुवर्तते। न चासौ दुर्विवेचनस्तदुपाधेर्घटस्य विविक्तत्वात्। एवमनाद्यनिर्वचनीयाऽविद्योपाधान, कल्पितो जीव न वस्तुत परमात्मनो भिद्यते तदुपाध्युद्भवाभिभवाभ्या च उदभूत इव अभिभूत इव प्रतीयते"[2]।

अत्र भामत्या पठितेन 'कल्प" इति पदेन 'सादृश्य" रूपाऽर्थाऽभिधानेन सादृश्यस्य च भेदघटितत्वेन प्रतिबिम्बरूपोऽर्थो निराकृतो भवतीति प्रकृतेऽवच्छेदवाद एवाऽऽदरणीय पौन पुन्येनैत्यभिहितवान् वाचस्पतिमिश्र।

'जीवेशावाभासेन करोति' इत्यादिश्रुतिपठितेन आभासशब्देनापि अवच्छिन्नरूपोऽथ मोहाऽभिधीयते न तु प्रतिबिम्बरूपोऽर्थ इति अवच्छेदवादिनामभिप्राय। अतोऽवच्छेदवाददृष्ट्या जीवो घटाकाशतुल्यत्वेनोपाध्यवच्छिन्न एवेति मन्तव्यम् न तु प्रतिबिम्ब इति।

---

१ ब्र०सू०शां०भा० १/२/६

२ रचनानुपपत्त्यधिकरणभामत्यां द्रष्टव्यम् २/२/१

# जैनदर्शने माया

जैनदर्शने जैनदार्शनिकाः खलु मायामविद्या, मिथ्याप्रतिभास (मिथ्याज्ञान) शब्देनाऽपि व्याहरन्ति व्यवहरन्ति च। अतो वेदान्तदर्शने यां मायां समुद्गिरन्ति वेदान्तिनः सैव माया जैनदर्शने जैनदार्शनिकैरज्ञान, मिथ्याज्ञानशब्दैरभिधीयते। किन्तु वेदान्तदर्शने *यथा मायाया मायापर्यायभूताया अविद्याया वा वस्तुत्वेनाऽस्ति* समुल्लेखस्तथा जैनदर्शने तस्या अवस्तुत्वं नाङ्गीक्रियते। तथा चोक्तम्—

"वस्त्वेवाऽवस्तुतां याति प्रक्रियाया विपर्ययात्"[1]

अर्थात् *प्रक्रियाया वैपरीत्येनऽवस्त्वेवावस्तुता याति—गच्छति। यथा घटः* स्वरूपतः सन्नपि रूपान्तरेण पटत्व, मठत्वादिना तत्रैवाऽस्ति तस्यास्तित्वाभावोऽपि स्वीकृतः। अर्थात् घटत्वावच्छिन्नाऽऽधेयतानिरूपिताऽधिकरणतावति घटवति देशे घटत्वेन घटस्याऽस्तित्वसत्वेऽपि तत्रैव पटत्वेन रूपान्तरेण तदभावोऽप्यस्त्येवेत्यतो जैनदार्शनिकानामेकदेशावच्छेदेन, एककालावच्छेदेन च भावाऽभावयोरेकत्र समावेशे नास्ति कोऽपि विरोधो दोषो वेति स्वयमेव विचारयन्तु भवन्तः।

एवमेवैकं वस्तु वस्त्वन्तरापेक्षयाऽवश्यमेवास्त्यवस्तुभूतम्, परन्तु सर्वथा वस्तु-नामकं किमऽपि नास्तीति सुनिश्चितमेव। अर्थात् घटत्वावच्छिन्नतया भासमानो घटोऽ-स्ति सर्वथा वस्तुभूतः। पटत्वावच्छिन्नतया भासमानश्च स एव घटोऽस्ति नितान्तम-वस्तुभूतः।

यदि च घट-घटाभावयोर्वस्तुत्वाऽवस्तुत्वयोश्च परस्परविरुद्धत्वात् कथमेकस्मि-न्नधिकरणे तौ संस्थातुमर्हत इत्युच्यते चेत्तदा नेदमापत्तिदानं समीचीनं प्रतिभाति, यतोऽ-भाववाचकोऽपि शब्दो भावभूतमर्थं ब्रूते। यथा कश्चिद् विपश्चिदित्थं ब्रूत "अब्राह्मण-मानयेति" तदा तत्राऽब्राह्मणशब्दो ब्राह्मणभिन्नवाचकः सन्नपि ब्राह्मणभिन्नं क्षत्रियवैश्य-प्रभृतिभावभूतमर्थं बोधयतीति जैनदार्शनिकानां भावाऽभावयोर्नास्ति कश्चन विरोध इति सिद्धान्तो वा कथनं वा साधु सगच्छते। इत्थं च जैनदृष्ट्या किमपि वस्तु सर्वथा नास्ति भावभूतम् यत एवमभ्युपगमे स्वरूपवत् पररूपेणापि वस्तुनो भावप्रसङ्गभङ्गो न स्यात्, तस्य पररूपेणापि भावत्वस्याऽऽपत्तिः सुदुर्वव भविष्यति।

---

1. आप्तमी० ४८

नापि चैतन्मते किमपि वस्तु अभावभूतमेवाऽस्ति, यत एवमङ्गीकरणे पररूपवत् स्वरूपेणापि अभावप्रसङ्गभङ्गो न भवेत् अर्थात्तस्य स्वरूपेणाप्यभावत्वस्याऽऽपत्ति सुस्थिरा स्यात्। तत्रैष्टापत्तौ जैनदर्शनास्याऽपि सिद्धान्तापत्ति स्यात्।

यदि च स्वरूपेण भाव एव पररूपेण अभाव एव पररूपेण चाऽभाव एव स्वरूपेण भाव इत्युच्यते चेत्तदा नैतत् कथनमपि समीचीन प्रतिभाति। यतो भावाऽभावयोर्निमित्ताना सर्वथा भिन्नत्वात्, निमित्तभेद एव नैमित्तिकभेदप्रयोजक। यथा घटस्य ये सन्ति दण्ड, चक्र, चीवराद्यो निमित्तभूता पदार्थास्तेषा भेदेन घटो पटाद् भिद्यते स्पष्टमेतत्। एव पटादिस्थलेऽप्यूहनीयम्।

एव यथैकस्मिन् वस्तुनि एकत्वसख्या परनिरपेक्षतया व्यवह्रियते व्याह्रियते च। द्वित्वसख्या च परसापेक्षतया व्यवह्रियते। अत एवैकत्वसख्यातो द्वित्वसख्या सर्वथा भिन्ना वर्तते इत्यस्ति सार्वजनीनो विषय।

तथैवैकस्मिन् वस्तुनि भावाभावयार्भेदो भवति। एव यथा सख्यावतो सख्या न भिद्यते तथैव भावाऽभावावपि वस्तुनो न भिद्येते, यतस्तयास्तथाऽभ्युपगमे वस्तुनो निस्वभावताया प्रसङ्ग स्यादिति अनेकान्तवादिनो वदन्ति।

### अविद्याऽज्ञानयोर्विचार

अत्राऽविद्याऽज्ञानयोरन्तर्भूतो योऽस्ति नञ् स यदि प्रसज्यप्रतिषेधरूपस्तदाऽविद्याऽज्ञानयोर्ज्ञानाऽभावरूपोऽर्थो बोद्धव्य। यदि च पर्युदासरूपो नञ् एवाऽस्ति खल्वविद्याऽज्ञानघटकीभूतस्तदाऽविद्याऽज्ञानयोर्मिथ्याज्ञानरूपाऽर्थो विज्ञय। प्रकृते कीदृशो नञर्थो गृह्यतामिति विचार्यताम्।

यदि च प्रकृतेऽज्ञानस्य प्रसज्यप्रतिषेधाऽभिन्नो ज्ञानाऽभावरूपोऽर्थो गृह्यते तादृशस्य च ज्ञानाभावरूपस्याऽज्ञानस्याऽवश्यमेव च अहेतुत्वेन कस्यापि योगिनो वा महायोगिनो वा तपस्विनो वा ऋषेर्वा पूर्णज्ञानसम्पन्नता न स्यात्, नापि च भवितुमर्हति। यत• पूर्णज्ञानसम्पत्ते प्राक्कालावच्छेदेनाऽशेषज्ञानाऽभावस्य विद्यमानत्वादित्युक्त प्रागेव।

यदि च स्तोकतत्त्वाभ्यासेनापि पूर्णज्ञान भवितुमर्हतीत्युच्यते। तन्न समीचीनम् यत स्तोकज्ञानापेक्षया शेषज्ञानाभावरूपाऽज्ञानस्य सद्भावेन बन्धप्रसङ्गो दुर्निवारऽ एवेति मन्तव्यम्।

एव स्थिते खल्वागामिनो बन्धस्य निरोधाऽसभवेन 'बन्धहेत्वभावनिर्जराभ्या कृत्स्नकर्मविप्रमोक्षण मोक्ष" इति सूत्रोक्त आत्यन्तिककर्मक्षणरूपो मोक्ष कदापि नहि भवितुमर्हति।

यदि च स्तोकतत्वज्ञानेनापि बह्वज्ञानं प्रतिहतशक्तिकं भवतीत्युच्यते तदेवाऽज्ञाननिमित्तको बन्धो नैव जायते । किन्तु कथनमिदं नैव समीचीनं प्रतिभाति, यतो ज्ञाननिमित्तको बन्धः सार्वजनीन इति सिद्धान्तभङ्गप्रसङ्गः स्यात् ।

यदि च पुनरशेषज्ञानाऽभावरूपाज्ञानतो बन्धो जायते स्तोकज्ञानमिश्रिताऽज्ञानतो बन्धो नैव जायते इत्युच्यते । तदपि न साम्प्रतं प्रतिभाति, यत एवमङ्गीकारे सर्वदा-कालावच्छेदेन बन्धो विलुप्येत, अर्थात् बन्धाऽभावस्य प्रसङ्ग एव स्यात् ।

अयमाशयः सर्वेषामेव प्राणिनां किंचिज्ज्ञानन्तु सर्वदैव सन्तिष्ठमानं भवतीत्यत्र नास्ति कापि विप्रतिपत्तिः। एवं स्थिते स्तोकतत्वज्ञानेन मोक्षो भवतीति पक्षो यथा नास्ति श्रेयस्करस्तथैव ज्ञानाभावरूपाऽज्ञानतोऽवश्यमेव बन्धो जायतेऽयमपि पक्षो न समीचीनः ।

मिथ्याज्ञानलक्षणाऽज्ञानतोऽवश्यमेव बन्धो भवतीत्येवं स्वीक्रियमाणे पूर्णज्ञानाभा-भावस्य प्रसङ्गः समागच्छति । यतस्तत्वज्ञानेन नानाऽविद्यानामाहार्यविपर्ययाविज्ञानाना विनाशेऽपि सहजविपर्ययात्मकस्य ज्ञानस्य विनाशो नैव सम्भवतेऽतः पूर्णज्ञानोत्पत्ति-प्राक्क्षणावच्छेदेन बन्धस्याऽस्तित्वमवश्यमेवाऽङ्गीकरणीयम् । तथा च सति तादृशबन्ध-मूलकमिथ्याज्ञानोद्भूतिसत्वप्रयुक्ताया: कैवल्योद्भूतेर्नास्ति कदापि संभव इत्यत्रास्ति खलु सर्वेषामेव शास्त्राणां शास्त्रज्ञानां च प्रामाण्यमैकमत्यंच ।

तथा केवलमागमबलेनेव तत्वज्ञानोद्भूतिर्जायते इति कथनं चास्ति सर्वथाऽप्रामा-णिकं यतो ज्ञानविषयीभूतानां पदार्थानामनन्तत्वात् ते ज्ञेयभूताः प्रभूताः पदार्था आगमजन्यज्ञानेन नहि विषयीकर्तुं शक्यन्ते । यतः समस्तमिथ्याज्ञानाऽज्ञानविनाशमन्तरा कैवल्यप्रयोजकीभूतस्य ज्ञानस्याऽऽविर्भावस्य नहि कदापि संभवो भवितुं प्रभवति ।

इत्थं च जैनदर्शने माया नास्ति केवलमविद्यारूपा, अज्ञानरूपा वा किन्तु एक-स्मिन्नेवाऽऽत्मरूपे पदार्थे काम, क्रोधादिकषायरूपमोहसाहचर्यावच्छिन्नं मिथ्याज्ञान-मेवास्ति अतत्वज्ञानम् । तदेव चाज्ञानमात्मनो बन्धकारणम् । यथोक्तम्—

"सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बन्धः" ।[1]

अर्थात् कषायेन सहितः सकषायस्तस्य भावस्तत्वं तस्मादित्यर्थः ।

यथा मानव उदराग्नेराशयाऽनुरूपमाहारं पानादिकं च क्षुत्पिपासाशान्तिसाधनभूतं पदार्थं गृह्णाति । तथैव जीवोऽपि तीव्र मन्द, मध्यमकषायस्याशयानुरूपाणि कर्माणि गृह्णाति ।

एवं स्थिते तत्राऽयं प्रश्नः समुत्तिष्ठते यद् आत्मा त्वस्ति सर्वथा मूर्त्तमूर्तं द्रव्यम् । कमपि विषयभूतं पदार्थं समादातुं ग्रहीतुं वा तस्य गृहीतुर्हस्तपादादिरूपा अवयवाः

१. तत्वार्थसूत्रम् ८

समवेक्षिता भवन्ति, आत्मनश्च निरवयवत्वात् हस्तपादादिरूपाऽवयवशून्यत्वात् कथं कर्माणि कर्तुं ग्रहीतुं वा सामर्थ्यसम्पन्नो भवितुमर्हति । अत एव 'जीव' पदं दत्तम् । यो जीवति, स जीवः, अर्थात् शरीरावच्छिन्नः संसारी आत्मा जीवः । स एव हस्त, पादादि-रूपाऽवयवसहित आदान, प्रदान प्रभृतिकर्माणि प्रकुरुते इति नास्ति कर्मविधानानुपपत्तिरूपो दोषः ।

यद्यपि तत्त्वार्थसूत्र "नामकग्रन्थघटकीभूतेऽष्टमसूत्रे" "कर्मयोग्यान्" इति लघुनिर्देशमकृत्वा, अर्थात् 'कर्मयोग्यान्' इति पदमनुक्त्वा तत्रैव सूत्रे कर्मणो योग्यान्' इति कथमुपन्यस्तम् ?

अत्रेदं समाहितं भवति यत् सूत्रे समस्तं पदमनुपन्यस्याऽसम वस्तपदोपन्यासः केवल वाक्यान्तरज्ञापनायैव कृतः । तच्च वाक्यान्तरमिदमस्ति "कर्मणो जीवः सकषायो भवति," अर्थात् वाक्यान्तरघटकीभूतं" कर्मणा इतिपदं चास्ति हेतुनिर्देशपरम् । अर्थात् कर्मरूपः जीवः कर्मरहितः स कषायादिदोषैर्नहि लिप्तो भवति । जीवकर्मणोरनादिसम्बन्धवत्वात् । तथा च कर्मरूपकारणाभावात् कामक्रोधादिरूपकषायात्मकदोषरूपकार्याभावोऽवगम्यते । एतेनाऽमूर्तं जीव मूर्तं कर्म कथं बध्नातीति शङ्कापि निराकृता भवति ।

यदि जीवकर्मणोः सम्बन्धस्याऽनादित्वं नाऽभ्युपगम्यते, कर्मजन्यस्य जीवनिष्ठस्य च बन्धस्य सादित्वं स्वीक्रियते तदा मुक्तजीववदात्यन्तिकशुद्धजीवस्यापि बन्धाभावः प्रसज्येत् ।

यदि जीवकर्मणोः सम्बन्धस्याऽनादित्वं नाऽभ्युपगम्यते, कर्मजन्यस्य जीवनिष्ठस्य च बन्धस्य सादित्व स्वीक्रियते तदा मुक्तजीववदात्यन्तिकशुद्धजीवस्यापि बन्धाभावः प्रसज्येत ।

इदानीं सूत्रघटकीभूत "कर्मणो योग्यान् पुद्गलानादत्ते" इति वाक्यान्तरं विचार्यते, अर्थात् कर्मणो योग्यान् पुद्गलान् गृह्णाति । अत्राऽस्ति पुद्गलकर्मणोस्तादात्म्यम् । जैनदर्शने पौद्गलिकानि कर्माणि जीव प्रति स्वत एवाऽऽकृष्टानि भवन्ति, जीवस्य कषायरूपपरिणामाना निमित्त प्राप्य जीवेन सह बद्धानि तानि पौद्गलिकानि कर्माणि जायन्ते । सोपातक्रमवच्च क्रमवन्ति तानि भवन्ति येन क्रमेण बद्धो जीवस्तेषां कर्मणां फलमहर्निशमनिशं समनुभवन्नेकमपि क्षण विश्रान्ति शान्ति च लभते ।

अत एव जैनदर्शने कर्मबन्धस्य द्वौ विकल्पौ जायेते भावकर्म (१), द्रव्यकर्म च (२) ।

(१) जीवेन सह बद्धकर्मणामुदयागते सति जीवस्य यानि भवन्ति रागद्वेषरूप-परिणामभूतानि कर्माणि तानि भावकर्माणि कथ्यन्ते ।

(२) एवं भावकर्मणा निमित्त प्राप्य जीवेन बद्धानि पौद्गलिककर्माणि सन्ति द्रव्यकर्माणि ।

उदाहरणार्थं यथा कर्मपरमाणवो वर्तन्ते सर्वथा धूलिसमाः। रागद्वेषौ च तैलतुल्यौ स्त इति सर्वेऽपि जैनदार्शनिका विदाङ्कुर्वन्ति।

यथा कश्चन मानवः स्वकीये शरीरे तैलमर्दनं विधाय व्यायामशालायां गमनानन्तरं प्रतिदिनं व्यायामं विधत्ते, तदा शरीरं धूल्या लिप्तं जायते।

यदि च स एव व्यायामशीलो मानवस्तैलं न स्पृशति अर्थात्तैलमर्दनमकृत्वैव व्यायामं कर्तुकामो व्यायामशालां गच्छति। तदानीं मल्लयुद्धवेलायां तदीय शरीरं धूल्या निर्लिप्तमेव सन्तिष्ठते। एतावता प्रबन्धेनेदं निश्चीयते प्रमीयते यन्मल्लयुद्धस्थलीयधूलिलिप्तत्वे तैलमर्दनं (तैलस्पर्शः) एव प्रधानं कारणम्।

एवमेव प्रकृतेऽपि जीवस्य भावभूतानि कर्माणि अथवा रागद्वेषादिरूपाश्च माया एव संसारकारणमस्तीति जैनदार्शनिका वदन्ति, अस्ति चाऽयं सिद्धान्तः। तेषामेव भावभूतकर्मणां बलेनाऽयं जीवः सांसारिकविषयैर्विषयजन्याभिश्च वासनाभिर्बध्यते। येनाऽयं जीवो मृत्युसंसारवर्त्मनि खल्वहर्निशं चरणविचरणं विदधानो नहि कदापि विश्रमसुखशय्यायां शेते। एताभिरेव विषयवासनाभिर्मोहगर्ते निपतितो जीवः प्रियया सह चतुरङ्घ्रिः सन् पशुवद् व्यवहरति। कदाचित्तनये जनिते षट्चरणः सन् षट्पदवद् व्यवहरति। एवं तनये तनये जनितेऽष्टपदे सति मकरीकृमिवदितश्चेतश्च विचरन् स्वीयं जीवनं दुःखसन्तानसङ्कुलसरित्तरङ्गेष्ववगाहमानो यापयति। नहि कदाचित् कुत्रचित् कथंचित् केनचित् कस्मिंश्चिद् सजने निर्जने वा स्थाने सुखं शान्तिं च लभते।

अपारसंसारकारणीभूतोऽयं प्राङ्निरूपितो मोहो जैनदर्शने द्वैविध्येन वर्णितः।

१. दर्शनमोहः

२. चरित्रमोहश्च,

दर्शनमोहरूपकारणवशादेवाऽयं जीवः स्वीयं यथार्थस्वरूपमपि नैव परिचिनोति, अत एवाऽऽत्मानं दुनोति सुनोति च। तादृशमोहरूपकारणवशादेवाऽयं जीव आसुरीमेव समुन्नतिं समुन्नतित्वेन मन्यमानः कुलपरम्परानुवर्तमानाचारपरिवर्जनं विदधानः, कुरङ्गमातङ्गमीन, भृङ्ग, वत् स्वीय जीवनयापनकारणसामग्रीमुपाददानः, काम्ययोस्तयोरर्थकामयोः स्वरूपनिष्पत्तिं प्रकुर्वाणोऽवतिष्ठते। किमधिकं स्वयं वयं ब्रूमः—आधुनिकनवनवाधिभौतिकनवनवकौतूहलावलोकनकुतूहलित्वप्रदर्शनपरायणः पाञ्चभौतिककलेवरधारिरूपेण सन्तिष्ठमानो मोहमहामोहजन्यविषयाघामहापाशजटिलजालबद्धतां नयमानः यत् किं किं नाचरति, कस्मिन् कस्मिन् देशे विदेशे वा कुरङ्ग, मातङ्ग, पतङ्ग प्रभृतिषु नानाविधयोनिषु भूयो भूयो न भ्रमति विचरति चरति वा भवाब्धिं तर्तुं कामयमानोऽपि तत्पारं गन्तुं नैव प्रभवति।

अहो नाटकमात्रमिदं केवलं दर्शनमोहस्य चारित्रमोहस्य वा उभयोरेव वेति तज्जन्याः खल्विमे समुन्नतवैजयन्तीविचित्राः प्रासादाः उन्नतकुचकलशभारमन्थराश्च कामिन्यः केषां न विदुषां चतुरचेतसां वा तदतिरिक्तानां वा चेतसि चमत्कारमादधानाय परितापाय वा न प्रभवन्तीति स्वज्ञानाधीनेच्छाविषयतया स्वयमेव विचार्यताम् ।

श्रीशङ्करावतारभूताः प्रभूता श्रीमच्छङ्कराचार्यपादा अपि स्वीये बन्धप्रकरणे स्वयमेव मायापरपर्यायस्वरूपस्याऽज्ञानस्य मिथ्याज्ञानशब्दाभिधेयस्य जैनदर्शनानुरूपं तस्य स्वरूपं व्याख्यातवन्तः । तथाहि—

> "बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरङ्कुरो
> राग· पल्लवमम्बु कर्म तु वपुः स्कन्धोऽसवः शाखिकाः ।
> अग्राणीन्द्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलम्
> नानाकर्मसमुद्भवं बहुविधं भोक्ताऽत्र जीवः खगः ॥[1]

अर्थात् संसारस्वरूपस्य वृक्षस्य बीजं मायापरपर्यायभूतं मिथ्याज्ञानरूपमज्ञानम्, गौरोऽहम्, श्यामोऽहम् कृशोऽहम्, स्थूलोऽहम् इत्याकारिका देहात्मबुद्धिरेव तस्य वृक्षस्यास्ति अङ्कुर·, तस्मिंश्च संसाररूपे जायमानो राग· पल्लवम्, संसारवृक्षे कृतं कर्मास्ति जलम्, शरीरं चास्ति स्तम्भः, प्राणश्च शाखाः इन्द्रियाणि सन्ति चोपशाखाः पुष्पाणि, नानाविधकर्मसमुद्भवं दुःखं चास्ति फलम्, तथा जीवस्वरूपः खगः (पक्षी) चास्ति भोक्ता इति ।

अस्यैव मोहस्य महामोहस्य साहाय्येन ज्ञानं भवति खल्वज्ञानम्, अस्य समापने सत्येव सम्यग्दर्शनस्याऽभिव्यक्तिर्जायते, तदव्यवहितोत्तरक्षणावच्छेदेनैव च मिथ्याज्ञानं जायते । तदानीन्तनकालावच्छेदेनैव खलु पदार्थाना प्रमात्मिका प्रतीतिर्भवति । जीवश्चाऽस्मात् असारसंसारसागरात्तर्तुं कामयते प्रयतते वा ।

सम्यग्दर्शनमन्तरा न तु ज्ञानमेव सम्यग् भवति, नापि च खल्वाचरणमेव सम्यग् जायते । एतावता प्रबन्धेनेदमेव निश्चीयते यज्जैनदर्शने सम्यग्दर्शनविरोधिमिथ्याज्ञानमेव चास्ति माया । वेदान्तदर्शने ज्ञानं मायेतिवत् ।

अस्यैव मायापरपर्यायभूतस्य प्रभूतस्य मिथ्याज्ञानस्य प्रभावादेवाऽयं जीवः सांसारिकं सुखाभासं सुखत्वेनाऽनुभवति । सांसारिकस्य सुखस्य सुखाभासरूपतया नास्ति कदाचित् कथञ्चित्तस्य याथार्थ्यमिति । अस्यैव मिथ्याज्ञानस्याऽयमस्ति भावभूतः प्रभावः, येनाऽयं जीवः शरीरात्मनोरैक्यं "स्थूलोऽहम्" "कृशोऽहम्" इत्यादिप्रायुक्तप्रत्ययानुसारमसार समनुभवति । शरीरस्य विनाशं स्वात्मविनाशं, शरीरस्य जननं स्वकीयं जननं मन्यमानोऽयं जीवः खलु हर्षविषादौ समनुभवति, येनाऽऽत्मान (स्वम्) बध्नाति ।

---

१. विवेकचूडामणिः पृ० ४९-५०

जैनदर्शने च केवलं सन्ति स्वीकृतानि षड् द्रव्याणि ।

१. जीवः—सांसारिकसुखदुःखादिभोक्ता,

२. पुद्गलः—द्रव्यमूर्तिकः, रूप-रस-गन्ध-स्पर्श, चतुर्गुणयुक्तः,

३. धर्मः—जीवस्योर्ध्वगतिकारकः, पुण्यपदाभिधेयः,

४. अधर्मः—जीवस्याऽधोगतिकर्त्ता, पापपदवाच्यः,

५ आकाशम्—शब्दस्याऽऽश्रयीभूतो द्रव्यविशेष.,

६. कालः—ज्येष्ठत्व कनिष्ठत्वप्रकारकधीहेतुभूतो द्रव्यविशेषः ।

एतेषु षड्द्रव्येषु जीवोऽस्ति केवल चेतनो द्रव्यविशेष शेषाणि तु द्रव्याणि सर्वाण्येव सन्ति जडभूतानि द्रव्याणि, तत्रापि पुद्गलोऽस्ति केवलं द्रव्यमूर्तिको जडभूतो द्रव्यविशेषः । अस्मिन् पुद्गलद्रव्ये रूप-रस-गन्ध स्पर्शाश्चत्वारो गुणा वर्तन्ते, तथा चैतादृशप्रागुक्तचतुर्गुणवत्त्वमेव पुद्गलस्य लक्षणम् । अत एव पृथिवी जल-वायवश्चत्वारि द्रव्याणि अस्मिन्नेव पुद्गलद्रव्येऽन्तर्भवन्ति । जीवपुद्गलयोर्योऽस्ति पारस्परिको बन्धः स एवास्ति संसारः । अस्यैव च तादृशबन्धस्वरूपस्य संसारस्य योऽस्ति खल्वात्यन्तिको भावः स एव मोक्षः ।

मोक्षक्रमः

संसारिजीवस्याऽनादिबन्धहेतुभूताऽज्ञानपर्यवसितमिथ्याज्ञानोपाधिकारणवशादेव परिणामाः सुस्निग्धा भवन्ति । तैश्च परिणामैर्नवीनकर्मबन्धा जायन्ते । तादृशकर्मबन्धबद्धो हि जीवः पुनर्नरकादिलोकेषु भृङ्ग, पतङ्गादियोनिषु च जन्मवान् गतिमाश्च भवति ।

जन्मना च पुनः शरीरं गृह्णाति । शरीरे खल्विन्द्रियाणि भवन्ति, इन्द्रियैश्च विषयाणामुपभोग विधत्ते जीवः । विषयाणामुपभोगेन रागद्वेषादयो दोषाः समुत्पद्यन्ते । तत्रापि रुचिकरविषयैश्च रागो जायते, अरुचिकरैश्च विषयैः द्वेषो भवति ।

रागद्वेषादिभिश्च पुनः स्निग्धाः परिणामाः भवन्ति । एवं क्रमेण संसारिजीवस्य परस्परं कार्यकारणभूतजीवपुद्गलपरिणामस्वरूपकर्मकलापस्तावदहर्निशमनिशमविच्छिन्नप्रयासायासेन परिवर्तनता गच्छतीत्यनुभवामः ।

पुद्गलपरिणामनिमित्तेन च जीवस्य परिणामा जायन्ते । जीवपरिणामनिमित्तेन च पुनः पुद्गलपरिणामाः सम्पद्यन्ते । अनेनैव मूलभूतेन पदार्थद्वयेन च सप्तपदार्थानां निष्पत्तिर्जायते ।

ते च सप्तपदार्थाः पुण्य, पाप, आस्रव, बन्ध, संवर, निर्जराख्याः सन्ति षड् भावभूताः । सप्तमस्त्वस्ति अभावभूतो मोक्ष इति । एते च सप्तपदार्था जीवा जीव-

रूपाऽतिरिक्तपदार्थद्वयसाहचर्यावच्छिन्नाः सन्तः पदार्थानां नवत्वसंख्यावन्तो नवपदार्था भवन्ति तथा च पुण्यपापयोर्द्वयोः पदार्थयोरास्रवबन्धाऽन्तर्भावेन सप्तैव पदार्थाः सन्तीति सिद्ध्यति । एतेषामेव सप्तपदार्थानां यथार्थं श्रद्धानमेवास्ति सम्यग्दर्शनम् ।

तात्त्विकदृष्ट्या विचार्यमाणे तत्वभूता अर्थात् सारभूताः पदार्थाः सप्तैव सन्ति न न्यूना नाप्यतिरिक्ता इति । शुद्धजीवस्य वास्तविकं स्वरूपं जीवतत्वमस्ति । पौद्गलिककर्मणश्च वास्तविकं स्वरूपम् अजीवतत्वं वर्तते ।

आगमनमास्रवः अर्थात् जीवस्य कया क्रियया पौद्गलिककर्माणि आकृष्टानि भूत्वा जीवं प्रति समागच्छन्ति तेषां कर्मणामागमनमेवाऽस्ति खल्वास्रव इति ।

एवं कया रीत्या केन क्रमेण वा केनोपायेन वा द्रव्यद्वयं परस्परं बन्धनतां प्रयातीत्येवास्ति बन्धतत्त्वम् ।

तथाऽस्याऽऽस्रवस्याऽवरोधनरहस्यमेवास्ति खलु संवरतत्त्वम् ।

एवं पूर्वबद्धकर्मणा क्रमेण जीवतो (जीवात्मनः) योऽस्ति सर्वथा पृथग्भावः स एव पृथग्भावो निर्जरातत्त्वेनोच्यते, अर्थात्तदेव जीवात्मनः कर्मणा पार्थक्यं निर्जरातत्त्वम् ।

एवं तादृशकर्मणा जीवात्मनो योऽस्ति सर्वथा पृथग्भावः—पार्थक्यं, स एवाऽभावभूतः सप्तमपदार्थो मोक्षः ।

इमानि सर्वाण्येव तत्वानि तात्त्विकदृष्ट्या सन्ति सर्वथा तस्या एव मायायाः प्रागुक्ताया उपजभूतानीति । यतस्तावन्निश्चयात्मिकाया दृष्टौ प्रागुक्तानां पदार्थानां जीवरूपता वाऽस्ति, अजीवरूपता वा वर्तते नास्तीतोऽतिरिक्ता गतिः । अतोऽनयोर्द्वयोरेव पदार्थयोरेते प्रागुक्ताः पदार्था अन्तर्भाव्यन्ते ।

अयमभिप्रायः यदिमे पुण्य, पाप, आस्रव, बन्धादयः पदार्था नहि सन्ति केवल जीवस्य विकारभूताः किन्तु एते सप्तपदार्थाः केवलमेकस्याऽजीवस्य विकारभूताः सन्तो जीवे विकार समुत्पादयन्ति, अर्थात् जीवविकारकारणीभूता भवन्तीति भावः ।

पारमार्थिकदृष्ट्या यदा जीवः पुद्गलस्वरूप पार्थक्येन पश्यति तदा सप्तानामेतेषां पुण्यपापादीनां किमपि अस्तित्वं नहि भासमानं भवति, केवलमेतेषां निमित्तनैमित्तिकभाव एव सर्वथाऽनुभूयते ।

यदा तु पारमार्थिकदृष्ट्या जायमानविचारतो निमित्तनैमित्तिकभावो विनष्टस्तदा जीवपुद्गलयोर्भेदभावोऽपि समाप्नोति ततश्च नातिरिक्तः कश्चन द्वितीयः पदार्थः सिद्ध्यति ।

तदानीं केवलमेकमात्रं द्रव्यभूतमेव वस्तु सन्तिष्ठते, तस्यैवाऽस्तित्वं वास्तविक

वर्णितवन्तो जैनदर्शने जैनदार्शनिकाः। तस्य च द्रव्यस्य निजभावा द्रव्येण सह द्रव्ये एव वर्तन्ते।

नैमित्तिकभावास्तु सर्वथा समाप्तिं विलयं यान्तीति तेषामभाव एव सिद्ध्यति अवशिष्यते। अतः पारमार्थिकदृष्ट्यैव जीवे विज्ञाते सति सम्यग्दर्शनमवाप्यते। सम्यग्दर्शनस्य प्राप्तौ सत्यामेव मिथ्यादर्शनरूपाया भवभूताया अनादिमायायाः सर्वथा समाप्तिः-अन्तो जायते।

परन्तु मिथ्यादर्शनरूपाया मायायाः समाप्तौ सत्यामपि मोक्षप्राप्तिर्न जायते, किन्तु मोक्षद्वारे संलग्नस्य महामोहरूपस्याऽवरोधकस्य "सील" पदाभिधेयस्य निरावणं भवति। मोक्षद्वाराऽवरोधकेमहामोहाऽन्धकारे निराकृते सति मोक्षमार्गं आलोकरूपेण पुरस्तादागच्छति। तदानीं सर्वासु दिक्षु सर्वतोभावेन प्रकाश एव दृष्टिगोचरतां याति। मायाजालं भ्रमजालं वा सर्वथा छिन्नं भिन्नं वा भवति अर्थात् सर्वथा सर्वतोभावेन विनाशं गच्छति, ध्वंसप्रतियोगि सत् प्रागभावप्रतियोगि च भवति।

एतावता प्रबन्धेनाऽयमेव निष्कर्षो निर्गतः यदिदानीन्तनकालपर्यन्तं सर्वमार्गः कर्ममार्ग आसीत् इदानीं च स एव मार्गो ज्ञानमार्गो जातः।

कर्ममार्गे कर्मधारा प्रवाहिताऽऽसीत्, इदानीं च ज्ञानमार्गे मोक्षमार्गे वाऽऽलोकधारा ज्ञानधारा वा प्रवाहिता जाता।

तदानीं ज्ञानधारा तिरोहिताऽभवत् इदानीं च प्राक्तनकालावच्छेदेन वर्तमाना अस्तित्वमापन्ना, सा कर्मधारा मूलावच्छेदेन शाखावच्छेदेन सर्वावयवावच्छेदेन जगत्त्वावच्छेदेनापि च समाप्तिमगाविति च शास्त्रप्रामाण्यानुरोधेन सिद्ध्यति। ज्ञानधारायाः शुष्कता यतोऽयं प्राक्तनकालावच्छिन्नः प्रवाहः पुनरपि शनैः शनैःशनैरूपतोन्मुखता-मगात्। यथा—

"आत्मा ज्ञानं स्वयं ज्ञानं ज्ञानादन्यत् करोति किम्"।

श्रुतिः

अर्थात् आत्मा ज्ञानं स्वयमस्ति ज्ञानस्वरूपम्, ज्ञानादन्यन्नहि किमपि कर्तव्यमस्तीति सर्वमेव ज्ञाने परिसमाप्यतेऽतो ज्ञानभावनायां सर्वथा रमणमेवास्ति मोक्षोपायः। तच्च रमणं सर्वासां कर्तृत्वभोक्तृत्वाऽऽदिभावनानां परित्यागानन्तरमेव जायते।

अद्वैतवेदान्तदर्शनेऽप्यद्वैतवेदान्तदार्शनिकाः ज्ञानस्यैव माहात्म्यं दर्शितवन्तो निरूपितवन्तश्च। यथा गीतायाम्—

"सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि"[1]

---

१—गी० ४।३६

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन !"[1]

अपि च पुनस्तत्रैव—

"ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति"[2]

एवं नन्दकपाणिर्नन्दनन्दनो भगवान् श्रीकृष्णचन्द्रस्तमेव पक्षं पुनर्द्रढयति समर्थयति च—

"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥"[3]

अतो ज्ञानवानेव महान् यतिर्योगी वा शतकोटिकल्पार्जितं सर्वपापं तरतीत्यसारसंसारसागरं तर्तुमिच्छावतो यतेर्योगिनो वा ज्ञानमेव सम्पादनीयम्। अत्र व्यतिरेकेण दृष्टान्तमाह—सागरसन्तरणे नौकावत् ज्ञानं पापविनाशने नहि बहुकालं प्रतीक्षते किन्तु क्षणेनैव सर्वं पापं समूलमुन्मूलयतीति नात्र विचिकित्सावसरः।

तेनैव सर्वेऽपि विपरीतप्रत्यया सर्वथा विनश्यन्तीत्यत्र शास्त्रमेव प्रमाणम्। ज्ञानं लब्ध्वाऽऽत्मसाक्षात्कारवान् यतिर्योगी वा ज्ञानलाभोत्तरक्षणावच्छेदेनैव परां संशयविपरीतभावनाभिः सर्वथा विनिर्मुक्तामविद्या तत्कार्याभासशून्यां निरतिशयसुखस्वरूपां शान्तिं विदेहात्मिका मुक्तिञ्च प्राप्नोतीत्यात्मानं विज्ञाय पुनरिह नैव किमपि ज्ञातव्यमवशिष्यते इति तु परमार्थः

अपि च सूतसंहिताकारोऽपि तमेव ज्ञानपक्षं पुनर्द्रढयति—

"तमोनिवृत्तौ सूर्यस्तु यथा नान्यदपेक्षते।
तथाऽज्ञाननिवृत्तौ तु ज्ञानं नान्यदपेक्षते ॥"[4]

व्यासोऽपि ब्रूते—

"तपस्तीर्थं जपो दानं पवित्राणीतराणि च।
नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥"[5]

अर्थात् भगवतो भास्करस्यैकमात्रं प्राथमिकं वा माध्यमिकं वा तुरीयं फलमस्ति तमोनिवृत्तिरूपमिति ज्ञानस्यापि तथैव तथाविधं फलमस्ति अज्ञाननिवृत्तिलक्षणमित्यतस्तपो वा तीर्थं वा जपो वा दानं वा यज्ञो वा योगो वा भक्तिर्वा सांख्यप्रभृति-

---

१. गीता श्लो० ३७
२. तत्रैव श्लो० ३९
३. तत्रैव अ० ७, श्लो० २
४. सूतसंहिता, ज्ञानोपक्रमप्रक०
५. श्रीमद्भाग० ११। १२।४

साधनानि वा नहि साक्षात् मुक्तिस्वरूपाऽलङ्कारप्राप्तिसाधनानि भवितुमर्हन्ति । तानि च खलु साधनानि मस्त, विक्षेपप्रभृतिदोषशमनार्थमेवाऽपेक्षितानि भवितुं प्रभवन्ति ।

तुरीयपुरुषार्थस्वरूपफललक्षणात्मिकायाः सिद्धिस्वरूपाया मुक्तेस्तु साक्षात् साधकं ज्ञानमेवास्तीति सर्वेऽपि दार्शनिका विदाङ्कुर्वन्ति । अतः सा सिद्धिर्ज्ञानकलया समलङ्कृता सत्येव शोभते नान्यथा । एवमेवाऽयमेव पक्ष उपनिषत्स्वपि स्वीकृतो वर्तते—

"रज्ज्वज्ञानात् क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी ।
भाति तद्वच्चितिः साक्षाद् विश्वाकारेण केवला ॥"[1]

अत्र चितिर्ज्ञानम् । यतः "प्रज्ञानं ब्रह्म"[2]

एवमन्यत्रापि—

"सत्यं ज्ञानमनन्तं ब्रह्म"[3]

"ज्ञात्वा देवं सर्वपाशापहानिः"[4]

"ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये"[5]

"ज्ञानान्मुक्तिः"[6]

"ज्ञानेनैव हि संसारविनाशो नैव कर्मणा"[7]

इत्यादौ सर्वत्र श्रुतिस्मृत्यादिषु चितिस्वरूपं यद् ब्रह्म तादृशब्रह्मविषयकमाहोस्विद् ब्रह्मरूपं ज्ञानमेव चितिशब्देन ज्ञानशब्देन चोच्यते । तादृशं नित्यफलदं ब्रह्मरूपं ज्ञानं समवाप्यैव जीवो मोक्षं लभते । यतो ब्रह्मरूपे ज्ञाने सम्प्राप्ते सर्वमेव कर्म चिताऽचितरूपं प्रवृत्तमप्रवृत्तञ्च निरवशेषयतो समाप्तिं गच्छति ।

भगवतो भास्करस्य प्रकाशेन यथा तमः सर्वथा निर्मूलं भवति तथैव ब्रह्मसाक्षात्कारस्वरूपाऽऽत्मज्ञाने जाते इदं सर्वमेव दृश्यं चराचरात्मकं जगदपि समूलमुन्मूलितं भवतीति तदव्यवहितोत्तरक्षणावच्छेदेनैव च मुक्तिसिद्धौ सत्यां पुनर्जन्मकथा कुत इति

१. योगशिखोपनि० ४।४।२
२. ऐतरेयोप० ३।१।३
३. तैत्तिरीयोप० २।१
४. श्वेताश्वत० १।११
५. कैवल्योप ३।८
६. सांख्यदर्शनम् ३/३०

देहपातानन्तरमेव योगी वा भवेत् ज्ञानयोगी वा गृहस्थो वा यतिर्वा तपस्वी वा यः कोऽपि भवेत् स एवातीवदुर्लभतरं मोक्षं समवाप्नोतीत्याशयेन इत्याशयं वा मनसि निधाय जैनदार्शनिका इत्थं ब्रुवते यत्—

"आत्मा ज्ञानं स्वयं ज्ञानं ज्ञानादन्यत् करोति किम्"[1]

इत्यनया जैनदर्शनोक्तकारिकयाऽप्यात्मन एव पारमार्थिकज्ञानरूपता सिद्धयति। तेनैव च ज्ञानेन मोक्ष इत्येव खलु जैनदार्शनिका अपि वदन्ति।

---

१ षड् चि

# मायायाः सहितः शैव-काश्मीर शैव सिद्धान्तः

इदानीं शैव-काश्मीर शैव सिद्धान्ते मायाया विचारो विधीयते । यथा सांख्यदर्शने—

"प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः ।"

इत्यादिना सृष्टेः समुत्पादनार्थं मायापर्यायभूतायाः प्रभूतायाः प्रकृतेरावश्यकता दर्शिता ईश्वरकृष्णेन । सा च प्रकृतिः स्वयमेव ईश्वरं विनैव समस्तं चराचरात्मकं विश्वं जनयति जीवात्मस्थानीय पुरुष संयोगात् । चैतन्याभिमानान्यथानुपपत्त्या एकमात्रं जीवपदाभिधेयः पुरुषोऽपेक्ष्यते नान्यथेति ।

परन्तु शैवसिद्धान्तः सर्वथा आंशिकं कमपि एतत्सिद्धान्तविरोधमाचरति, यतः शैवसिद्धान्ते मायायाश्चेतनाशून्यत्वेन जडत्वमङ्गीकृतमस्ति । यथा अद्वैतसिद्धान्तवादि वेदान्तिनोऽपि मायायाः चैतन्यराहित्यावच्छिन्नत्वेन जडत्वमङ्गी कुर्वन्ति । अत्रार्थे प्रकृतेरपि जडतया सांख्यमतेन समानत्वेऽपि सेश्वर—निरीश्वरवादयोः सर्वथा भिन्नत्वेन संयोगस्य कथमपि अपलपितुमशक्यत्वात् ।

अयमभिप्रायः-शैवदर्शनस्येयमविद्यापरपर्यायभूता माया स्वातन्त्र्येण किमपि कार्यम् जगदुत्पादरूपम् आहोस्वित् तत्सम्बन्धितं कमपि विकासं नैव कर्तुं शक्नोति शक्ष्यति वेति विचारणीयोयं विषयः । अतोऽस्मिन् शैवसिद्धान्ते परमशिवनिरूपितवाच्यतां गतः शिव एव स्वीयशक्तिमाध्यमेन मायाशक्ति द्वारा चराचरात्मकं जगदिदं रचयति, अथवा अस्या जडभूतायाः सृष्टेर्विकासं विधत्ते । यतो मायायामीश्वरमन्तरा चैतन्याभिमानोपपत्तेरस्तित्वं सर्वथा असम्भवदोषग्रस्तमेव, अतः चैतन्याभिमानोपपत्तिमन्तरा तत्र मायायां कदाचित्, कथञ्चित्, कुतश्चित् केनचित् नास्ति गतिप्रगतिप्रभृतिक्रिया-सम्भवः ।

स च ईश्वरः शिवः स्वयमेव ब्रह्मरूपः । तच्च ब्रह्म सच्चिदानन्देति स्वरूपलक्षण-लक्षितं, स्वरूपतो द्वैताद्वैतविवर्जितं, भावाभावविनिर्मुक्तं, नामोत्पत्तिरहितं तद्ब्रह्म परमशम्भ्वाह्वयमिति माधवा अपि समुद्गिरन्ति । तथाचोक्तम्—

"अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥"

अपि च—

भावाभावविनिर्मुक्तं नाशोत्पत्तिविवर्जितम् ।
सर्वसंकल्पनातीतं परब्रह्म तदुच्यते ॥

अन्यच्चापि—

सम तुल्यमित्युक्त तस्य चक्रे रस स्मृत. ।
समरस त्वेकभावत्वमेतेनात्मनि भण्यते ॥

(पश्यन्तु "शिवप्रकाशम्" पृ० २४)

काश्मीर शैवदर्शनेऽपि मायाया खलु स्वीकारो वा प्रतिपादन वा विचारजात वा केवल सृष्टिविकासार्थमेवाङ्गीकृतमस्तीति मन्तव्यम्। परन्तु माया विषयीकुर्वाणा-अवधारणा उभय च पक्षयो विभिन्ना एव सन्ति अतोहेतो, काश्मीरशैवदर्शने तथा शैवदर्शने सैद्धान्तिको मतभेद सर्वथा समुपस्थितो भवति स चाऽय सैद्धान्तिको मतभेद काश्मीरशैवदर्शने मायाया अङ्गीकार शिवस्य 'परिग्रहशक्ति' रूपे वर्तते । सा च शक्ति स्वरूपत शक्तिमच्छिवयत् चैतन्यावच्छिन्ना वर्तते, तथा शक्तिमताशिवेन सह तस्या शिवशक्तेरस्ति सर्वथाऽभेद "शक्तिशक्तिमतोरभेदात्" इति तेषा सिद्धान्तादित्यत्र नास्ति कोऽपिवादोविवादोवेति ।

यद्यपि शैवदार्शनिकदृष्टिकोणतोऽपि सिद्धान्तत सा माया सच्चिदानन्दस्वरूपा-न्तरावच्छिन्नाङ्गीकृता वर्तते इति प्रतिपादित तत्रैव ।

तथापि एतावास्तुविशेष यदस्मिन् शैवसिद्धान्ते सा माया स्वरूपत जाड्यधर्मा-वच्छिन्ना सत्यपि पारमार्थिकदृष्ट्या विचार्यमाणे शिवशक्तिस्वरूपा सा माया शिवाद् भेदमापन्ना सत्यपि शिवेन सह अभेदसम्बन्ध तस्या शैवसिद्धान्ते अङ्गीकृतो वर्तते, अर्थात् भेदसहिष्णुरभेद एवात्र अस्मिन् सिद्धान्ते समभ्युपगतो वर्तते । न केवल सर्वथा अभेद', अत्यन्ताभेदो वा स्वीक्रियते । शैवदर्शनसिद्धान्ते शिवशक्तिमायानिरूपित स्वा-मित्वरूप ' शिवनिष्ठ सम्बन्ध शैवानामभिमतो वर्तते । अतएव शैवा शिवस्य चिद्रूपता शिवशक्तिमायायाश्च अचिद्रूपता प्रोट्टङ्कयन्त उभयत्र विभाजन विदधते । अत्रावधेय-मस्ति यत विश्वोत्तीर्णाऽम्या विश्वमयावस्थाऽन्त समवाप्तस्य तस्य स्वतन्त्रचिद्घनस्य संवित्स्वरूपस्य परमशिवस्यैव सर्जनात्मकविश्वमयरूप शिवतत्त्वमस्तीति शैवा स्वीकुर्वन्ति ।

अन्यच्च शिवतत्त्वसन्निधानेनैव मायाया सृष्टेराहोस्वित् सृष्टिविकासस्य कारण-तया आगमन भवति यद्यपि अमुमेव पक्षमाश्रित्य मायामेवाऽस्य चराचरात्मकस्य विश्वस्य प्रथमकारणत्वेन अथवा उपादानकारणत्वेन अभ्युपगच्छन्ति शैवा । तथापि सैद्धान्तिक [illegible]

अतएव सर्वमेव विवेचनीयम् वस्तुतत्त्वम् शिवतत्त्वमेवाऽस्ति । शिवतत्त्वतो भेदमापन्नं कस्यापि वस्तुनोऽस्तित्वमेव नास्ति यतः तस्य शिवतत्त्वस्याऽसङ्गत्वात् अर्थात् सङ्गविवर्जितत्वात् शिवमन्तरा वस्त्वन्तरस्याऽस्तित्वमेव नास्ति । तदेवाऽन्यत्रापि प्रस्टीकृतमस्ति । यथोक्तं —

"तदेकोऽवशिष्टः शिवः केवलोऽहम् ।"

( सि० बिन्दु )

इदमपि पद्यात्मकं वाक्यं तस्य शिवतत्त्वस्य सङ्गवर्जितत्वरूपमसङ्गत्वम् प्रमाप-यति । अतएव अन्यत्र सर्वत्र "शिवोऽहम्" "शिवोऽहम्" अस्यैव शैवदर्शने समुल्लेखो-ऽधिकांशतो मिलति । तत्र "अस्मि" आदि क्रियायाः कथमपि समुल्लेखो नास्ति । यतः "अस्मि" इति क्रियापदस्य सन्निधानेन समुल्लेखनेन वा सम्बन्धस्यास्तित्वस्य द्योति-तत्वेन शिवस्याऽसङ्गत्वमेव व्याहन्येत ।

इत्थञ्च शैवसिद्धान्ते मायायाः स्वरूपविषयिणी विचारधारा अधिकांशतः काश्मीरशैवदर्शनस्य समानैव । केवलं कञ्चिदेवांशमादाय आंशिको भेदः । स चाऽय-मेवास्ति भेदः यत् काश्मीरशैवदर्शने माया स्वयं शिवतत्त्वमाश्रित्य सन्तिष्ठते, स्वातन्त्र्येण मायायाः किमप्यस्तित्वमेव नास्ति । तथा माया शिवशक्तेरस्ति काचिदवस्थाविशेषः इत्यपि काश्मीरदार्शनिका वदन्ति विवदन्ते चात्र बहवः । शैवदर्शनस्येदमेस्ति कथनं यत् माया स्वास्तित्व संपत्तये शिवतत्त्वं नापेक्षते, परन्तु शिवशक्तिमन्तरा सा माया निष्क्रियत्वमापन्ना सन्तिष्ठते । अतः स्वात्मनिष्क्रियत्वं सम्पादयितुमेव चेयं माया शिवतत्त्वमाश्रयति ।

इतोऽतिरिक्तं शैवदार्शनिका मायानिष्ठं सत्तात्वमनुभवन्तीत्यतो मायायाः सत्त्वेनात्र निर्वक्तुं शक्यते, न तु अद्वैतवेदान्तवत् सदसद्विलक्षणत्वेनाऽनिर्वचनीयत्वं तस्या वक्तुं युज्यते । ब्रह्माण्डपर्यन्तमखिलस्यैव चराचरात्मकस्य जगतः कर्तृत्वं कारणत्वञ्चैत-न्मते मायानिष्ठमेव ।

## मायाया भेदसहितो विकासः

विश्वविकासस्य सृष्टिविकासस्य च तथाऽवान्तरभूतानां प्रभूतानां सर्वेषामेव विकासनामपीयमेवास्ति जननी विकासोन्मुखस्पन्दलक्षिता माया । चराचरात्मक-जगद्रूपदर्शीभूतानां समस्तानां तत्त्वानां विकासो मायातो यज्जायते सोऽपि स्पन्दना-परिच्छिन्नमायात एव भवति । तत्र स्पन्दनमस्या नयात्मकमेव तत्र स्पन्दस्य,

अवस्थानवस्य चोपपादनमग्रे विधास्ये । शैवदर्शने चास्या मायाया भेदद्वयावच्छिन्नत्वे न विभागोजात । तथाहि—

1—शुद्धा माया।

2— अशुद्धा माया।

1 शुद्धा माया  यत्र 'शुद्धा माया' इति शब्दस्याऽन्वितार्थकत्वेन तद् वाच्यीभूता सा माया सर्वमेव परिशुद्ध सात्त्विक कार्यं जनयतीत्यत सात्त्विककार्यजननीत्युच्यते ।

तथाचोक्तम् यागादेव फल तद्धिशक्तिद्वारेण सिद्धयति ।

"सूक्ष्मशक्त्यात्मक वा तत् फलमेवोपजायते ।"

( तन्त्रवार्तिके पृ० २०७ )

अर्थात् यावत्काल परिशुद्धिगत किमपि यागादिकर्म कमप्यपूर्वं नोत्पादयति नापि जनयिष्यति वा तावत्काल तस्य यागादिकर्मण क्षिप्र विनष्टत्वेनास्थिरत्वात् कालान्तरभाविस्वर्गादि रूपफलजनकत्व तादृशकर्मणो न स्यात् अतस्तादृशपरमपवित्र-सात्त्विकयागादिकर्मजन्यसात्त्विकफलोपलब्धये तादृशाऽपूर्वाङ्गीकारो नितान्तमावश्यक इत्यञ्च तादृशसात्त्विकयागादिकर्मणामनुष्ठानाम्, तज्जन्या तथाविधफलाऽवाप्तिश्चैकमात्र शैवसिद्धान्त शुद्धमायात एव जायते इत्यत्र नास्तिकोऽपि विचिकित्सावसर इति ।

अयमेव पक्ष समर्थित श्री शङ्कराचार्येणापि । तथाहि—"नचानुत्पाद्य किमपि अपूर्वं कर्म विनश्यत् कालान्तरित फल दातु शक्नोति अत कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्था अपूर्वनामास्तीति तर्क्यते ।"

(शा० भा० ३/२/४०)

अतएव शाङ्करमतानुयायिनोऽद्वैतवेदान्तिन इमा शुद्धा माया विशुद्धकार्यजननी स्वीकृतवान् न माया कदापि अशुद्धकर्माणि मलान्वितांश्च पदार्थान् जनयति । इयमेव शुद्धा माया जीवाना कृते पूर्णं ज्ञान सात्त्विकञ्च सुख प्रयच्छति । इयमेव खलु "बिन्दु" शब्देनाप्युच्यते ।

(पश्यन्तु शिवप्रकाशम् पृ० २२)
(शिवज्ञान सिद्धियर—११)

नैतावन्मात्र पञ्चानामपि प्रश्नोपनिषद्भाष्येऽपि अस्यैव विषयस्य पुष्टीकरण प्रकारान्तरेण मिलति । तथाहि—"चैतन्याव्यतिरेकेणैव हि कला जायमानास्तिष्ठन्त्य प्रलीयमानाश्च सर्वदा लक्ष्यन्ते"।

( प्र० उ० भा० ६/२ )

इयमेव शुद्धा माया शैवदर्शने शिवशक्ति समुद्गिरन्ति शैवा । इयमेव च शिवस्य कलात्मिका शक्तिरपि कथ्यते । इयमेव शक्ति शैवसिद्धान्ते सच्चिदानन्दघन-शङ्करानन्दभूतस्य प्रभूतस्य तस्य महेश्वरस्य शिवस्य परिग्रहशक्तिरपि गीयते । इत्थञ्च सोपानक्रमेण परम्परया शुद्धमायया सह सर्वथाऽभेदमापन्ना सतीय परिग्रहशक्तिरपि सर्वतोभावेन च सर्वदा परिशुद्धिपरिपूर्णानि सात्त्विकान्येव अनित्यानि कृत्यानि सम्पादयति ।

पश्यन्तु—"शिवज्ञानसिद्धिम्"

पृ० ५२-११

भर्तृहरिणा स्वय सात्त्विककार्यसम्पादनपरो नर सुकृतसज्ञया सज्ञित सम्भूषितश्च । तस्य च जरामरणज भयम्, जननीजठरेशयनजन्यश्च सन्तापो वा नहि तेन विधीयते इत्युक्तवान् हि । उक्तञ्च—

"जयन्ति ते सुकृतिनो रससिद्धा कवीश्वरा ।
नास्ति येषा यश काये जरामरणज भयम् ॥"

## अशुद्ध मायाया विवेचनम्

अस्याश्चाऽशुद्धाया मायाया "अशुद्धमाये"ति नामकरण वस्तुत शैवदर्शनशास्त्र-सम्मतमेव प्रतीयते, यत अधिकाशतो जना अहर्निशमनिश दूषितकार्यकारण प्रवृत्तिशीला असद्भावनाभावितान्त करणा एव खलु दृष्टिगोचरता गता समनुभयन्ते । तेषा जननी-येयमशुद्धा माया इति । अत एव शैवदार्शनिका खल्वेनाम् 'अधोमायाम्' "मायायाश्छा-याम्" इत्यादिशब्दैर्व्याहरन्ति व्यवहरन्ति च ।

इयमेवाऽशुद्धा माया, अधर्म, अन्याय, अनौचित्य, मिथ्यावाद, निन्दावाद, पशुत्व-प्रभृतीना जननीत्वेन मूलभत स्रोतो वर्तते । अतएवोपर्युक्त सज्ञाप्रदान सर्वथा समीचीन-मेव । यच्च सज्ञाप्रदानमधिकारता नितान्तमनावश्यक हेयञ्च ।

तथाचोक्तम्—

"मिथ्याज्ञानमधर्मश्च शक्तिर्हेतुश्च्युतिस्तथा ।
पशुत्व मूल पञ्चैते तन्त्रे हेयाधिकारत ॥" वर्णकारिका—८

इयमेवाऽशुद्धामाया समस्तस्याऽपूर्णज्ञानस्य एव तत्सवलिताना पदार्थाना तथा-ऽशुद्ध-अशुद्धतर-अशुद्धतमप्रपञ्चस्य, एव तथाविधस्य तद्रूपावच्छिन्नस्य चराचरात्मकस्य विश्वस्याऽपि इयमेवास्ति जननीत्यपि नून विचार्यताम् ।

अत एव कलाप्रभृतिनरान्ताना याऽस्ति अधिष्ठातृस्वैर मायाख्य महामाया, या मूलोदिता माया इयमेवाऽशुद्धा माया वर्तते ।

तथाहि—"कलावीन तत्त्वानामविवेको माया ।"

( शिवसूत्रम्-१७ )

एव तस्या विशुद्धमायायाश्च कारिकारूपेण कारिकाकारः खलु लक्षणमिद प्रोक्तवान्—

"माया च वस्तुरूपा मूल एिश्वस्य नित्या सा ।"

( तत्त्वप्रकाशिका का० ९ )

इयञ्च विशुद्धमायाऽशुद्धमायातो विपरीतकार्यजनकत्वेन पूर्णज्ञानस्य, विशुद्धज्ञानस्य, सात्त्विकज्ञानस्य, सत्यज्ञानस्य तथा तथाविधस्यैक्यव्यवहारस्य एव विशुद्धप्रपञ्चप्रभृतिसात्त्विककार्याणा जननीत्वेन जन्मदात्री । अपरञ्चास्या महत्त्वम्—

"न शिवेन विना देवी न देव्या न विना शिव. ।
नानयोरन्तर किञ्चित् चन्द्रचन्द्रिकयोरिव ।।"

( शिवप्रकाश.— )

उभयत्र मायायामिदमेवास्ति वैजात्यम् अस्माभिर्यन्दर्शितम् । यद्यपि घटत्वेन रूपेण यथा सर्वेषु घटेषु साम्य समनुभूयते एव पटत्वेन रूपेण सर्वेऽपि सन्ति नील-पीतपटादयः समाना एव । तथैव प्रकृतेऽपि मायात्वेन कथन्तत्र वैजात्य प्रोट्टङ्कितम् ।

तथापि समाधत्ते यत् घटत्व-पटत्वादिरूपेण सकलघटपटादीना ज्ञातत्वेऽपि साम्यसत्त्वेऽपि नीलघटत्व, पीतघटत्वादिरूपविशेषधर्मेण तेषामज्ञातत्वेन वैजात्य सुस्पष्टमेव । अन्यथा प्रमेयत्वेन रूपेण सकलानामेव प्रमेयभूताना पदार्थाना चराचरात्मकस्यास्य सर्वस्यापि जगतश्च ज्ञायमानत्वेन सर्वेऽपि सर्वज्ञा. स्युरिति जीवानामसर्वज्ञता समनुभूय विशेषरूपेणापि कार्यकारणभावोऽपि विशेषत. समादरणीय एव ।

इत्यञ्च विशेषधर्मेण स्वरूपादिना च वैजात्यस्य वैषम्यस्य च सुस्पष्टमनुभूयमानत्वेन नहि कथञ्चित् कदाचित् साम्य वक्तु शक्यते ।

एव स्थितेऽस्या एवाऽशुद्धाया मायाया अस्य भौतिकजगत उपादानकारणीभूतत्वेन जननीत्वस्य प्रागुक्तप्रायत्वात् । तथा इयमेव खलु अशुद्धामाया भौतिकजगदन्तर्गत-भौतिकेन्द्रियाणा तथा तथाविधशरीराणाम्, एव भोगसाधनीभूत पृथिवी, जल, तेजोवाय्वादिविषयाणा तथा सर्वेषामेव सकलाङ्गविकलाङ्गानामपि जन्मदात्री तत्त्वेन वा जननीत्यपि वक्तु शक्यते ।

अस्या एव मायाया साहाय्यबलेनैव स परब्रह्मपरमेश्वरः सदाशिवोऽपि काल, कला, कलाकौशलानियतिप्रभृतीना कृते जन्म प्रयच्छति। एतेषामेव तत्त्वाना साहाय्य-बलेनेयं माया समस्तं व्यस्तं वा जगद् व्याप्नोति मोहगर्ते च निपातयति, कदाचित् विषादयति क्वाचिन्निर्मलयति, कदाचिच्चाऽसदविषयेषु रमण भ्रमणञ्चकारयतीत्यत एव पूर्वोक्तशिवप्रकाशोक्त वैजात्यमत्र साधु सङ्गच्छते। इदमत्रावधेयमन्यदप्यस्ति यत् शिवशक्तिस्वरूपविषये शैवदार्शनिकसिद्धान्ते शिवशक्तिस्तादृश एव स्वरूपोवर्णितो वर्तते ! यश्च स्वरूपः काश्मीरशैवदर्शने शिवशक्तेः स्वरूपो वर्णितो वर्तते।

एतावांस्तु विशेषः यत् शैवदर्शने केवल शिवस्य तत्त्वं स्वीक्रियमाणेऽपि पति, पशु, पाश, स्वरूपाणा प्रधाणा तत्त्वाना शिवतत्त्वातिरिक्तानामङ्गीकारस्यापि अति-रिक्तत्वेन कल्प्यामानत्वात् शाश्वतरूपेण चत्वार्येव तत्त्वानि समभ्युपगतानि भवन्ति।

पश्यन्तु—"शैवपरिभाषाम्" पृ० २८

एतेषु सर्वेष्वपि तत्त्वेषु "पाति"=रक्षतीति पतिः इत्यनया यौगिकव्युत्पत्त्या शैवसिद्धान्ते स एव "सच्चिदानन्द" इति स्वरूपलक्षणलक्षितः परब्रह्मपरमेश्वरः शिव एव "पति" शब्देनोच्यते।

अतएवाऽस्मिन् शैवसिद्धान्ते शिव एवाऽस्य स्थावर-जङ्गम-स्वरूपस्य विश्वस्य रक्षाकरणाद्धेतोः विश्वपति=जगत्पति सर्वशक्तिमान्=जगन्नियन्ता, प्रभृतिशब्दैर्व्या-ह्रियते व्यवह्रियते च।

इत्थञ्चैतेषु प्रागुक्ततत्त्वेषु 'पति' शब्दनिरूपिताऽभिधेयता गतं तत्त्वं शिवतत्त्व-मित्यभिधीयते। इदमेव खलु तत्त्व सर्वोच्चकोटिकं तत्त्वम्, स्थावरजङ्गमलक्षणलक्षित-स्यास्य जगतः पालकत्वं, रक्षकत्वं स्वामित्वञ्च बिभर्ति। स च शिवः सर्वभूतसयोगित्वेन स्वनिष्ठं वैभवं दर्शयति, सर्वत्र च स्वय स्वास्तित्व प्रकाशयति। स चास्ति स्वतन्त्रः शाश्वतः, ध्वंसाप्रतियोगी च। तत्त्वातीतः सन् सत्-चित्-आनन्दघनस्वरूप शुद्धो-ऽस्तीति।

'पाशुपतमतम्'।

अस्य पशुपतिसम्बन्धित्वेनाङ्गीकृतस्य पाशुपतमतस्य प्रवर्तकत्वेनाऽस्ति सशा-सशितो नकुलीशः आहोस्वित्लकुलीशः। शिवपुराणपटकीभूतेन कारवणमाहात्म्येनेदं विज्ञायते तदेतस्य 'पाशुपत' सम्प्रदायप्रवर्तकस्य 'नकुलीश' नामक स्थानमासीत्।

राजपूताना, गुजरातप्रभृतिप्रदेशेषु नकुलीशस्य मूर्तयो मिलन्तीति श्रूयते। येषां मस्तिष्कप्रदेशः केशैः समावृतः सन् सन्निविष्टते स्म तथा दक्षिणहस्ते बीजपूरस्य फलानि

सन्ति । एव वामकरे लगुडो वा दण्डो वा शोभते । लगुडधारणकारणवशादेव नकुली-शस्य लकुलीशस्य वाऽपर नामकरण 'लगुडेश' इति जातम् ।

भगवत श्री शङ्करस्याऽष्टादशावतारेषु 'नकुलीश' इति प्रथमाऽवतारो जात । तत्राऽष्टादशावताराणामिमानि सन्ति नामधेयानि —

१ लकुलीश,
२ कौशिक,
३ गार्ग्य,
४ मैत्र्य,
५ कौरुष,
६ ईशान,,
७ पारगार्य,
८ कपिलाण्ड,
९, मनुष्यक,
१० अपरकुशिक,
११ अत्रि,
१२ पिङ्गलाक्ष,
१३ पुष्पक,
१४ बृहदार्य,
१५ अगस्ति,
१६ सन्तान,
१७ राशीकर
१८ विद्यागुरु नामधेयास्ते सन्ति ।

चिक्रमद्वितीयस्य राज्यकाले एकषष्टि ६१ गुप्तसवत् (३८०) ईशवीयस्येको शिलालेखो महत्त्वपूर्ण मथुरात प्राप्ताश्च यतो मिलित । यस्मिन् शिलालेखे उदिता चार्यनामक पाशुपत द्वारा गुरुर्मा दरे उपमितेश्वर कपिलेश्वर' नामक शिवलिङ्गाना स्थापनाया सुस्पष्टरूपेणोल्लेखो वर्तते ।

तत्र उदिताचार्यः स्वं भगवत्कुशिकतो दशमावतारं बोधयामास । तत्रापि कुशिकस्य गुरुर्लकुलीश आसीदित्यपि श्रूयते ! इत्थञ्च नकुलीशस्य समयः पञ्चोत्तरशतईशवीयस्य सन्निधावस्तीति श्रूयते, निश्चितोऽपि प्रायः स एवेति । अयञ्च स एव समयो वर्तते यस्मिन् समये कुषाणनरेशस्य हुविष्कस्य सिक्कानामुपरि लगुडधारिणः श्री शिवस्य मूर्तयो मिलन्ति ।

पाशुपतमतावलम्बिना विदुषा सम्बन्धी न्याय-वैशेषिकैर्विद्वद्भिः सह नितान्त घनिष्ठतमऽस्तीति निश्चितमेतत् । 'गुणरत्न' नामको दार्शनिको नैयायिकान् शैवशब्देन, वैशेषिकाश्च पाशुपतनाम्ना निर्दिष्टवान् । न्यायवार्तिककारः श्रीउद्योतकरोऽपि पाशुपताचार्योपाधिभूषणभूषितः सन्नेव स्वात्मनः परिचय दत्तवान् । कदाचित् समयेऽस्यैवमतस्य पश्चिमे भारते विशेषप्रचारस्तथाऽतीव ख्यातिश्चासीत् ।

## 'पाशुपत साहित्यम्'

"चिन्तां प्रकृतसिद्धार्थामुपोद्‌घातं विदुर्बुधाः" ।

इत्युपोद्‌घातसङ्गतिवशादेवेदानी मया किञ्चित् पाशुपतसाहित्यं निरूप्यते । इदञ्च पाशुपतसाहित्यं न्यूनतममेवोपलभ्यते । माधवाचार्येणापि 'सर्वदर्शनसंग्रह' नामके ग्रन्थे 'नकुलीशपाशुपत' नाम्ना अस्यैव मतस्याऽऽध्यात्मिक सिद्धान्तानां वर्णनं कृतमिति ज्ञायते । जैनग्रन्थेषु राजशेखरसारिणा स्वीये 'षड्दर्शनसमुच्चय' नामके ग्रन्थे योगमतेनाप्यस्यैव पाशुपते मतस्य समुल्लेखो व्यधायि ।

न्यायसारग्रन्थरचयिता काश्मीर-भासर्वज्ञस्य ८०० पृष्ठसमन्वितायां "गणिकारिकायां" पाशुपतानां सिद्धान्तः संक्षेपेण मिलति । अस्या एव गणकारिकायाः विस्तारं गता 'रत्नटीका' व्याख्या तात्त्विकादृष्टिकोणतो वर्तते रत्नरूपा, यस्याष्टीकाया अस्ति कश्चिद् विपश्चिल्लेखकोऽज्ञातनामा । येन च खलु लेखकेन "सत्कार्य-विचार" नामकग्रन्थस्य रचना विदधता लेखकेन तत्रापि पाशुपतमतस्यास्य पर्याप्तमात्रया पुष्टिर्व्यधायि ।

एतेषां पाशुपतमतानां मूलग्रन्थो महेश्वररचितः 'पाशुपतसूत्रम्' नामाऽनन्तशयनमालान्तर्गत नं० १४३ संख्या के कौन्डीन्यकृत "पञ्चार्थीभाष्येण" सहैव सौभाग्यवशादिदानीमेव प्रकाशितो जातः । एवं सर्वदर्शनसंग्रहप्रभृतिग्रन्थेष्वपि अस्य पाशुपतमतस्य पर्याप्तं विशदीकृतं विवेचनं प्रामाणिकत्वेनोपलभ्यते ।

## — शैवसैद्धान्तिकदृष्टिकोणविचारः —

शैवसिद्धान्तस्य प्रचारस्त्वाधिक्येन दक्षिणदेशान्तर्गततमिलप्रदेशे वर्तते । अतञ्च प्रदेशः शैवधर्मस्य प्रधानभूतो दुर्गः । अत्र च प्रदेशे शिवभक्तिभावभावितान्तःकरणः खलु

वभक्ता भूतभावनस्य भगवतः श्रीशङ्करस्य समाराधनपराः सन्तः एव भक्तिरसप्रपूरित-
भ्यभूतानां स्तोत्राणां तथा तत्सिद्धान्तप्रतिपादनपराणां ग्रन्थानां निर्माणं स्वीयतमिल-
भाषायां कृतवन्तस्ते च ग्रन्था श्रुतिसमानसमादरणीयतां भजन्ते ।

एतेषु शैवभक्तेषु चतुरशीति (८४) परिमितसङ्ख्याकाः सन्तः शैवा आसन् ।
तत्रापि च चत्वारः प्रमुखा आचार्या जाता एके सन्त अप्पार नामानः, अपरे च "सन्त-
ज्ञानसम्बन्धनामधेयाः, तथा सन्तसुन्दराभिधानः, एवं सन्तमणिक्कवाचक' नामपदं
वाच्यतां गताः ।

इमे च भूतभावनस्य भगवतो भवस्य भक्तिभावनाभावितान्तःकरणाः सन्तः खलु
यानि शैवतन्त्रान्तर्गततत्त्वानि प्रचारितवन्तस्तानि सर्वाण्येवसंस्कृतं शनैः शनैः प्राकाश्यं
नेतुं कामयमानास्ते कानिचित् प्रकाशितवन्तः । एते चागमाः सर्वेऽपि शैवसिद्धान्तनाम्ना
सन्ति प्रसिद्धिं गताः । एतानि खल्वाष्टाविंशतितन्त्राणि स्वयमेव भगवान् शङ्करः
स्वीयपञ्चाननद्वाराऽऽविर्भावितवानिति सुस्पष्टीकृतं मिलति तन्त्रालोक' नामके ग्रन्थे ।
परमशिवभक्तो जयरथः स्तन्त्रालोकटीकायामेतेषां तन्त्राणां नामोल्लेखं कृतवान् ।
एतेषु कतिपयतन्त्राणि सन्ति द्वैतमूलकानि तन्त्राणि । तान्येव च तन्त्राणि प्रणवादि-
दशप्रभृतिशिवानध्याययामास परमः शिवः ।

तथा तत्रैवाष्टाविंशतितन्त्रेषु अवशिष्टानि १८ अष्टादशतन्त्राणि सन्ति द्वैता-
द्वैतप्रधानानि रुद्रतन्त्राणि । अर्थात् अष्टादशतन्त्राणि प्रधानरूपेण द्वैताद्वैतं प्रतिपाद-
यन्ति । एतानि च तन्त्राणि परमशिवः अघोरादि अष्टादशरुद्राणां कृतेऽध्यापयाबभूव
प्रवरो ज्योतिषाम् इति चापि साहित्य दर्शितं सङ्गतिवशात् ।

## — वीरशैवमतम् —

वीरशैवमतानुयायिनो वीरशैवा लिङ्गात् नाम्ना जङ्गम नाम्ना च प्रोच्यन्ते ।
एतेषामाचारविचाराश्च सर्वथा भेदभिन्ना एव प्रतीयन्ते । इमे वीरशैवाः जातिव्यवस्था-
परम्परामभूतां प्रभूतां वर्णव्यवस्थां नाङ्गीकुर्वन्ति । यद्यपि वीरशैवसम्प्रदायस्याऽऽद्यप्रवर्तका
अपि महेश्वरपदाभिधेयं शिवमनन्यत्वेन चिन्तयन्तः शिवभक्ता ब्राह्मणा एवाऽऽसन् । इमे
च वीरशैवा भगवतः शङ्करस्य शङ्करस्य लिङ्गात्मिकां मूर्तिं सर्वदा स्वीयकण्ठस्थाने
संस्थाप्यन्ते ।

तत्त्वतो विचार्यमाणेऽस्माकं भारत देशे "नैको मुनिर्यस्य वचः प्रमाणम्" इति
महाभारतवचनानुसारं वेदागमप्रभृतिशास्त्रसम्मतानि बहूनि सन्ति धर्म, कर्म, निरूपण-
पराणि दर्शनानि । तत्र शक्तिविशिष्टाद्वैत (वीरशैव) वेदान्तस्यापि वर्तते खलु प्रमुखं
स्थानम् ।

अस्य मूलभूतसंस्थापकत्वेन कलियुगे पञ्चाऽऽचार्या एव सन्ति। तेषाञ्च नामानि—

१. रेवणाराध्यः,
२. मरुलाराध्यः,
३. एकोरामाराध्यः,
४. पण्डिताराध्यः,
५. विश्वाराध्यः एतानि सन्ति।

अस्य शक्तिविशिष्टाद्वैतवीरशैववेदान्तस्य प्रचारार्थं पञ्चविधानि सन्ति सिद्ध-पीठस्थानानि। यथा १—कर्नाटके 'रम्भापुरी', २—मध्यप्रदेशे "उज्जैननगरी", ३—उत्तर प्रदेशे "केदारेश्वरः", ४—आन्ध्रप्रदेशे "श्री शैलः", तथा ५—उत्तर प्रदेशे "काशी-वाराणसी"। अद्यतन कालावच्छेदेनापि सन्तीमानि सिद्धपीठस्थानानि। पुण्यतमक्षेत्रे श्री काशीक्षेत्रे च विश्वाराध्यस्य वर्तमानं यत् ज्ञानसिंहासनं तत् जङ्गम-वाडीमठनाम्ना सुप्रसिद्धिं गतमस्तीति सर्वेऽपि विदाङ्कुर्वन्ति।

एतच्च वीरसम्प्रदायसम्बद्धं दर्शनं शिवाद्वैतं, द्वैताद्वैतं, विशेषाद्वैतं, शक्ति-विशिष्टाद्वैतमेव, विशेषतोऽधिकं प्रचलितमस्ति।

"शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ शक्तिविशिष्टौ=शिवजीवौ, तयोरद्वैतं=शक्तिविशिष्टाद्वैतम्" एतद्व्युत्पत्त्यनुसारं सर्वज्ञत्व,सर्वकर्तृत्व, सर्वनियन्तृत्व, सर्वशक्तिमत्त्व, प्रभृतिसूक्ष्मचिदचितशक्तिविशिष्टः शिवः। एवमल्पज्ञत्व, अल्पकर्तृत्व, प्रभृतिस्थूलचिदचित् शक्तिविशिष्टो जीवश्च वर्तेते।

अनयोः शिवजीवयोरभेदं अभेदव्याप्यं वाद्वैतं बोधको यः सिद्धान्तः स एव शक्तिविशिष्टाद्वैतसिद्धान्तः कथ्यते। 'भ्रमरकीट' न्यायेनाऽयं सिद्धान्तः समुपपाद्यते। यथा भ्रमरात् सर्वथा भिन्नकीटविशेषो जीवः नैरन्तर्येण भ्रमरध्यानपरो भूत्वा भ्रमरो भवति, तथैव सर्वथा शिवाद् भिन्नोऽयं जीवोऽपि नैरन्तर्येण शिवध्यानपरायणः सर्वथा शिवस्वरूपतां गच्छति।

अस्मिन् सिद्धान्ते शिव, जीव, शक्तिस्वरूपास्त्रय एव पदार्थाः स्वीक्रियन्ते। तथापि च शक्तेर्मातुः पार्वत्या मायास्वरूपत्वात्तस्या एव प्रकृतशोधग्रन्थनिरूपितविषमता स्वीक्रियते। इमे भारतीयाः शक्तिविशिष्टाद्वैतवेदान्तशास्त्रवेत्तारो वीरशैवदार्शनिका बहुवैचित्र्यमयप्रपञ्चं समुत्पादयितुं खलु उमामेव जगन्मातरं सहकारिशक्तिस्वरूपत्वेना-

प्र वीरशैवदर्शने तत्सिद्धान्ते वा निर्गुणरूपत्वावच्छिन्नोऽपिऽङ्गीकृतां तां मायां वर्णितवन्तः। अतएव प्राणिनामुपरि सर्वतोभावेनाऽनुग्रहार्थं शक्तिविशिष्टाद्वैतस्य तस्य ईश्वरपदाभिधेयस्य परमेश्वरस्याप्यङ्गीकारो नितान्तमावश्यकः।

अयमेव च परमतत्त्वस्वरूपः सकल, निष्कल, शब्दनिरूपितवाच्यता गतः परब्रह्मपरमेश्वराभिन्नोऽनन्यत्वेन निर्गुणरूपता धत्ते। एवं तस्या एव मायाशक्तेर्विकासेन च सगुणस्वरूपता गच्छति।

अद्वैतवेदान्तशास्त्रेऽपि निर्गुणब्रह्मैव अस्या मायाशक्तेः सङ्कोचेन निर्विशेषरूपतां भजते। परन्त्व परमशिवः सूक्ष्मरूपेण शक्तितत्त्वस्य विद्यमानत्वेन सविशेष एव सन्तिष्ठते। एतावानेवास्ति विशेषोऽस्य सिद्धान्तस्य।

आकाशे यथाऽस्ति व्यापनात्मिका शक्तिः, वायौ चास्ति स्पन्दनात्मिका शक्तिः, एवमग्नौ वर्तते दहनात्मिका शक्तिस्तथैव सांसारिकेष्वपि सर्वेषु पदार्थेषु कार्योत्पादकत्वेन सन्तिष्ठमाना काचिच्छक्तिरवश्यमेवाऽनुभूयते। एवंस्थिते यदा प्रपञ्चान्तर्गतेषु सर्वेष्वपि पदार्थेषु काचिच्छक्तिरस्तीति सुनिश्चितन्तदा तादृशप्रपञ्चात्मकं जगदुत्पादकोऽपि शिवः शक्तिविशिष्ट एवास्तीति मन्तव्यम्।

अन्ये केचन कवीश्वराः सिद्धेश्वराख्येनामधुद्धा माया मोहिनी, ठगनी, प्रचण्डपाटस्वरीत्यादि वाग्जालेन भूषयन्ति दूषयन्ति च।

यथा चन्द्रे चन्द्रिकास्वरूपा तदीया शक्तिरविनाभावं भाविता सती सन्तिष्ठते, यथा च पुष्पे सुगन्धात्मिका शक्तिः स्वयमेव सन्तिष्ठमानानुभूयते, यथा जलेऽविनाभावरूपेण वर्तमाना शैत्यात्मिका शक्तिरपि सर्वैरेव प्रमीयते गीयते च। तथैव परब्रह्मपरमेश्वराभिन्ने शिवेऽपि तदीया मायास्वरूपा शक्तिस्तथाविधरूपाऽविच्छिन्नाऽविच्छिन्ना सती सन्तिष्ठमाना सनुभूयते।

अस्याश्च मायाशक्तेः सामान्यतोऽवस्था द्वयमेवाङ्गीकृतमस्ति। तत्र चैका शक्तिः :—

(१) अविभागपरामर्शरूपा,

(२) विभागपरामर्शात्मिका च द्वितीया।

तत्रापि च प्रपञ्चात्मक जगदुत्पत्तेः पूर्वकालावच्छेदेन सत्, चित्, आनन्दात्मकस्वरूपलक्षणालक्षिते परशिवे वर्तमानायास्तदीयमायाशक्तेर्यास्थितिर्दशा चास्ति तादृशस्थित्यवच्छिन्ना मायाशक्तिः प्राथमिक अविभागपरामर्शरूपाऽवस्था समन्विता वर्तते।

यदा च भक्तिनिरूपितवात्सल्यभावितो भगवान् शिवः सृष्टिं विधातुं कामयते तदा तदीया शक्तिः इच्छाशक्तिरूपेण, ज्ञानशक्तिरूपेण, क्रियाशक्तिरूपेण च विभक्ता

सत्त्वादिगुणैर्वियोगं लभमाना च सती माया भवतीति सुनिश्चितम् । इयमेव तस्य परशिवस्य विभागपरामर्शदशात्मिका द्वितीया शक्तिः ।

शिवशक्त्योः परस्परं नात्यन्तभेदः, नाप्यत्यन्ताभेदः, किन्तु तत्र शिवशक्त्योः सम्बन्धः—भेदाभेदरूप, अर्थात् भेदाभेदात्मकस्तादात्म्यसम्बन्ध एव कल्प्यते ।

शिवस्यैवं शक्तिर्यद्यप्येका, तथापि प्रयोजनवशात् सा शक्तिः षड्विधा वर्तते । तथाहि—

१—चिच्छक्तिः,

२—पराशक्तिः,

३—आदिशक्तिः,

४—इच्छाशक्तिः,

५—ज्ञानशक्तिः,

६—क्रियाशक्तिश्चेत्यन्योन्यभेदावच्छिन्नास्ताः षड्विधाः सन्तीति नाप्यधिका नापि न्यूना इति ।

सृष्टिरचनाकाले चाऽयमेव शक्तिविशिष्टः परशिवः पृथिवीतः परशिवपर्यन्तभूतेषु षट्त्रिंशत्तत्त्वेषु (३६ तत्त्वेषु) तथैव परिणमते यथा सुवर्णमाभूषणरूपेण, पयश्च दधिरूपेण, वाराणसेयराजकीयसंस्कृतमहाविद्यालयश्च सम्पूर्णानन्द संस्कृतविश्वविद्यालयरूपेणेति ।

अयमेव परिणामः खलु अविकृतपरिणामवादो व्याह्रियते व्यवह्रियते च, अनारोपितरूपश्च तत्त्वमुच्यते । अतः षट्त्रिंशत्तत्त्वात्मिकेयं सृष्टिः सर्वाप्याभूषणवदेव परशिवस्यैव चास्ति परिणामभूतेत्यन्यत्र विस्तरः । अतोऽयं प्रपञ्चः सर्वोऽप्यस्ति परमात्मतत्त्वरूप एव । अत एवोक्तम्—

"सर्वं शिवमयं जगत् ।"

अपि च लीलाताण्डवपण्डितोऽयं परशिवः सच्चिदानन्दस्वरूपोऽपि स्वीयविनोदार्थमेव स्वयं जीवरूपेण प्रपञ्चरूपेण च परिणमते । अग्नेर्विस्फुलिङ्गवत् सर्वेऽपि जीवात्मानः सन्ति तस्यैवांशभूता इति ।

यथा कूर्मः स्वीयकरचरणादिस्वरूपान् अंशान् निजेच्छानुरूपं स्वयमेव विकसितान् तान् विदधानः सन् विहरति । विहारस्याऽनिच्छासत्त्वप्रयुक्तत्वे च पुनः स्वयमेव तान् तान् सङ्कोचयति, अर्थात् सङ्कुचितान् तान् विधाय सन्तिष्ठते ।

सर्वथाऽमृततत्त्वभूत. प्रभूतः परब्रह्मपरमेश्वराभिन्न. परशिव. स्वीयशक्तिविकास-सत्त्वदशायामनन्तानां जीवाणां स्वरूपेण विभाजनसत्त्वेऽपि लीलाताण्डवनिरूपित पाण्डित्यसद्भावेन क्रीडति=जगल्लक्षणलक्षिता जगदात्मिका लीला विधत्ते दर्शयति च।

पुनश्च तस्याः स्वीयमायास्वरूपाया. शक्तेः सकोच विधाय प्रचलिता दर्शिता वा ता स्वीया लीला समाप्नोति, स्वयमेव च केवल परशिव सन्तिष्ठते।

इयमेव च परशिवस्य लीला, शक्ते.=मायाशक्तेः सकोच-विकासौ एव चेमौ सृष्टिप्रलयौ कथ्येते। एतेषा वीरशैवाना वेदान्तिना नये शक्तेः सङ्कोच विकासातिरिक्तत्वेन सृष्टिप्रलययोर्नास्ति किमपि सत्त्वम् अस्तित्वम् इत्यपि विदाङ्कुर्वन्ति भवन्तः।

इत्थञ्चाऽनन्तगुणगणयुतस्याऽनन्तसामर्थ्यसम्पन्नस्य च तस्य परशिवस्य साक्षात्कारार्थं सर्वंन परमात्म=परशिव, बुद्धिविधानमेव शक्तिविशिष्टाद्वैतवेदान्तस्यास्ति परम लक्ष्यमिति।

इदमत्रावधेयमस्ति श्रीशङ्कराचार्यस्याऽयमस्ति अद्वैतमार्गः सर्वथा त्यागप्रधान.। अतएवाऽयमार्गं कर्ममार्गत उपरतो भूत्वा ब्रह्मवादस्य सस्थापन विधत्ते तदेव समुपदिशति च।

## — वीरशैवमतेन शक्ति विचारः —

इदानीमत्र शक्तितत्त्व विचार्यते किमिद शक्तितत्त्वम् ? उच्यते परमशिवापरपर्यायभूते परशिवस्वरूपे ब्रह्मणि अपार्थक्येन यादृश तत्त्व विशेषणीभूय सन्तिष्ठते तदेव तत्त्व शक्तितत्त्व गीयते।

"शक्तिविशिष्टाद्वैत" मते या चास्ति शक्ति. सा "सूक्ष्मचिदचिद्विशिष्टा-शक्ति" "स्थूलचिदचिद्विशिष्टा शक्ति" श्चेति नाम्ना द्वैविध्य भजते। अत्र च प्रथम-शक्त्या "परशिवस्य" ग्रहण भवति। द्वितीयशक्त्या च जीवो बुध्यते। 'शक्तिविशिष्टाद्वैते' तिपद विग्रहणेन च शक्तिविशिष्टपरमात्म, जीवात्मनोरैक्यमेव बुध्यते।

अत्र च परमात्मनो भिन्नाशक्तिः, शक्तितो भिन्नो वा परमात्मेति भेदपक्षो प्राङ्गीक्रियतेऽपि तु ऐक्यपक्ष एव श्रेयान्। चराचरात्मक जगदिद परमात्मनो यास्ति प्राङ्निरूपिता शक्तिस्तादृशशक्तिरूपमेव। अग्नौ सन्निविष्ठा यो दाहजनकीभूत-शक्तिस्ता दृशशक्तिवत्, चन्द्रनिष्ठचन्द्रिकावच्च, पुष्प पुष्पनिष्ठगन्धवच्च, परमात्मन-स्तदीयशक्तेश्चास्ति परस्पर सर्वथाऽभेद "शक्तिशक्तिमतोरभेदात्" इति च तत् [illegible]।"

एवञ्च विशेषणीभूता धर्मरूपा शक्तिर्धर्मिस्वरूप "परशिव" तत्त्वतो नहि कदाचित् कथञ्चित् कुतश्चित् केनचिच्च भिद्यते भेत्तुं वा शक्यते। शक्तितत्त्वमारभ्य पृथिवीतत्त्वपर्यन्तं सकलमेव चराचरात्मकं जगदिदं तत् एव परशिवतत्त्वतः समुत्पन्नं भवतीत्यनेन जगतोऽनित्यत्वमपि विज्ञेयम्। इत्थञ्च शिव, शिवशक्त्योश्चास्ति परस्परमभेदसम्बन्धः। इयञ्च शक्तिस्तस्मिन् "परशिवस्वरूपे ब्रह्मणि परमगुप्तरीत्या सन्तिष्ठते, तस्य शिवस्य अदृश्यत्वात् अतीन्द्रियत्वाच्च।

एतेन वीरशैवसिद्धान्ते शिवशक्त्योश्चाऽन्योन्यमविनाभावरूपः सम्बन्धः= समवायसम्बन्धोऽस्तीति निश्चीयते। यस्य सम्बन्धस्य कथञ्चित् कदाचित् पार्थक्यं न भवेत्, नापि भवितुं शक्नुयात् स सम्बन्धो नित्यसम्बन्धः, भगवतो भास्करस्य प्रभावत्, चन्द्र-चन्द्रिकावच्च। अतएव शक्तिविशिष्टाद्वैतमते ब्रह्मणा स्वीयशक्त्या सह नित्य सम्बन्धो विज्ञेयः, अङ्गीक्रियते च। परब्रह्मस्थिता विमर्शशक्तिरेव सूक्ष्मचिदचात्मिका शक्तिः कथ्यते। याचास्ति परब्रह्मनिष्ठा चिच्छक्तिः सा सर्वज्ञतारूपा। एवं या चास्ति सूक्ष्माऽचिच्छक्तिः सा सर्वकर्तृत्वरूपेति विज्ञेयम्। अनयोर्द्वयोरेव शक्त्योराश्रयरूपा इच्छाशक्तिरेव विमर्शशक्तिरूपा निगद्यते। इयञ्च विमर्शशक्तिः सत्त्वरजस्तमोगुणसमन्विता सती सन्तिष्ठते।, तत्रापि च तमोगुणप्रधानभूतेयं शक्तिर्जडस्वरूपा माया निरुच्यते। यथा भगवतो भास्करस्य किरणानि सूर्यकान्तमणि संयोगाऽव्यवहितोत्तरकालावच्छेदेनैवाऽग्निकणानां रूपं धारयन्ति येनाग्निस्वरूपता गच्छन्तीत्यर्थः।

तथैवेयं शिवस्य विमर्शशक्तिर्जडभूतायां मायाशक्तौ प्रतिस्फुरणात्मिकया गत्या प्रविश्य सुख, दुःख, मोहान् जनयित्री त्रिगुणात्मिका प्रकृतिरेव जायते कथ्यते च। वीरशैवाचार्यमते इयमेव प्रकृतिश्चित्तशब्देनोच्यते। अतएवतन्मते चित्तशक्तिविशिष्टशिवप्रकाशशिवांश एव जीवः समुदगीयते। संक्षेपेण वीरशैवमतानुसारमिदमेवास्ति शक्तेः स्वरूपम्।

## — जगद्विचारः —

वीरशैवमतानुसारं चराचरात्मकं सर्वमेव जगत् सत्यमस्ति। वीरशैवानामिदमस्ति कथनं यत् शक्तिविशिष्टपरशिवब्रह्मणा जायमानं चराचरात्मकं सर्वं जगदिदं नास्ति मिथ्याभूतम्, अपि तु तत् सत्यमेव। यथाचोक्तम्—

'तस्माद् यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः॥'

इत्यादिप्रबलतमप्रमाणेन जगतः परमार्थिकत्वं=सत्यत्वं निश्चीयते। श्रीरेणुकाचार्येणापि अगस्त्यमहर्षिपादं समुपदिष्टावता जगतो नित्यत्वं सत्यत्वं च प्रत्यपादि। महर्षेः सदुपदेशात्मककथनस्येदमेवास्ति तात्पर्यं यत् यथा पुष्पगन्धयोर्नास्ति कोऽपि भेदः' यतः पुष्पतो गन्धस्य सर्वथाऽपृथक्त्वात्। एवं चन्द्रचन्द्रिकयोरिव वा सर्वथा शक्तिमत श्री शिवादुत्पन्नस्य जगतः सर्वथाऽभिन्नत्वेन सत्यत्वं नित्यत्वञ्च विज्ञेयम्।

इत्थञ्च वयं स्वयमनुभवामो यत् यत्र खलु भगवतो शङ्करस्याऽद्वैतवादः ब्रह्मणः सत्यत्वं प्रतिपादयति जगतश्च मिथ्यात्वं निरूपयति, "ब्रह्म सत्यं जगन्मिथ्या" इति च तत्पुष्टिकरं श्रुतिवाक्यं समुपस्थापयति समुपदिशति च तत्रैव वीरशैवमतं ब्रह्मण = शिवस्य सत्यत्वमभिधत्ते जगतोऽपि च सत्यत्वमेव ब्रूते, एतावांस्तु विशेषः, यद् वेदान्त-दर्शने यादृशं ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वरूपं सत्यत्वं स्वीक्रियते, नहि तथाविधं सत्यत्वमत्राङ्गीकृतमस्ति । अत्र तु नैयायिक-वैशेषिकवदेव घट-पटादि सत्यपदार्थनिष्ठसत्यत्ववत् सत्यत्वमभ्युपगम्यते । यथोक्तं—

> 'तस्माद् यन्नास्ति नास्त्येव—
> यत्त्वस्ति परमार्थतः" ।

## — शैवमतेन जीवविचारः —

वीरशैवमते जीवस्य शिवांशरूपता प्रतिपादिता भवति । यस्मिन् मते शिवस्य जीवानाञ्च पारस्परिको भेदाऽभेदो = भेदसहिष्णुरभेदः, प्रतिपादितो वर्तते । यथा— अग्नेस्तत् कणानाञ्चास्ति पारस्परिको भेदः । यतोऽग्नौ तदुत्पन्नकणेषु च नास्ति खल्वात्यन्तिको भेदः, नापि च आत्यन्तिकोऽभेदः एवेति भेदाभेदयोरङ्गीक्रियते ।

तथैव शक्तिमतः शिवाद् आविर्भूतेषु शिवांशस्वरूपेषु जीवेषु शिवे चापि नास्ति कोऽपि आत्यन्तिको भेदस्तथाविधोऽभेदोवेत्यत् एवेदं भेदाभेदमतं भेदाभेदवादियतं वोच्यते ।

अथाऽग्निनो सर्वथाऽभेदाङ्गीकारे वह्निवत् वह्निकणेष्वपि पाकादिक्रियायाः सिद्धिः स्यात् परन्तु नैवं समनुभूयते । आत्यन्तिकभेदे स्वीक्रियमाणे च वह्निप्रतियोगिकाऽऽत्यन्तिकभेदवति जले यथा शैत्यमनुभूयते तथैवाऽऽत्यन्तिकभेदावच्छिन्नेषु कणेष्वपि शैत्यं समनुभूयेत ।

तद्वदेव हि शिव-शिवांशयोः पारस्परिकाऽऽत्यन्तिकाऽभेदेऽभ्युपगम्यमाने शिववत् शिवांशभूतेषु तेषु जीवेष्वपि सर्वज्ञत्व, सर्वकर्तृत्व प्रभृतीनां गुणानां धर्माणां च बलादङ्गीकारः स्यात् यदि चोभयत्र शिवशिवांशयोरात्यन्तिको भेदः स्वीक्रियते तदा शिव-प्रतियोगिकाऽऽत्यन्तिकभेदवति घट पटादौ यथा ज्ञानाभावः समनुभूयते तथैवाऽऽत्यन्तिक-भेदावच्छिन्नेषु सकलेषु जीवेष्वपि ज्ञानाऽभाव आपद्येत । परन्तु जीवेषु नहि तथात्वमनुभूयते, ज्ञानस्यैव तत्रानुभूयमानत्वात् ।

अतएव वीरशैवाचार्यास्तत्र शिवे शिवांशभूतेषु च जीवेषु पारमार्थिकं भेदाभेदं स्वीकृतवन्तः भेदसहिष्णुमभेदं वाऽभ्युपगतवन्तः । अतएव च भेदाभेदो द्वैताद्वैत शब्देनापि कथ्यते ।

## — "पशु" शब्दार्थ-विचार —

अणु, परिछिन्नरूपया सीमितशक्त्या समन्वितो हि क्षेत्रज्ञो जीव एव पशुपदजन्य-बोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यवान् भवतीत्यत्र नास्ति लेशतोऽपि कश्चिद् विवाद । स च पशुशब्दाभिधेयो जीवचार्वाकवत् नास्ति देहरूप, नापि च नैयायिक वैशेषिकवत प्रकाश्य, नापि च जैनिनामिव सर्वथाऽव्यापक, अपि तु प्रकाश्य-रूपता गत सन् व्यापको जीवो नानात्व धत्ते ।

एव साख्यपुरुषवत् अकर्तापि नास्ति, केवल बन्धनलक्षणलक्षित "पाश,' क्षयानन्तर शिवत्वप्राप्तौ सत्यामेव तस्मिन् जीवे निरतिशयज्ञानशक्तेस्तथाविधायाश्च क्रियाशक्ते समुदयो जायते । अतएव सैद्धान्तिकदृष्ट्या जीवस्तत्तत्कार्यं निरूपिता कर्तृता भजते नाऽकर्तृत्व तस्य ।

बन्धनशब्दाभिधेय भूताना पाशाना तारतम्यवशात् पशोस्त्रैविध्यमङ्गीकृत-मस्ति ।

१—विज्ञानाकलरूप,

२—प्रलयाकलरूप,

३—सकलश्चेति ।

येषा जीवऽपरपर्यायभूताना पशूना विज्ञानेन, योगेन, सन्यासेन वा आहोस्वित् भोगमात्रेण कर्माणि क्षीणता गच्छन्ति, पुनश्च कर्मक्षयानन्तर तेषा जीवपदाभिधेयपशूना शरीरबन्धोदयो नहि कदाचित्, कथञ्चित् जायते इति ते पशव = समास कलुप, असमासकलुप, भेदेन द्विविधास्ते भवन्ति । यदा चैतेषा जीवाना मल पक्वभूतो भवति, तदा परमशिव स्वीयेनाऽनुग्रहेण तेभ्य पशुभ्य 'विद्येश्वर" पद प्रयच्छति । अतस्तन्त्र-शास्त्रे ते विद्येश्वरा —

१—अनन्त,

२—सूक्ष्म,

३—शिवोत्तम,

४—एकनेत्र,

५—एकरुद्र,

६—त्रिमूर्ति,

७—श्रीकण्ठ,

८—शिखण्डि, भेदभाजोऽष्टसख्याका भवन्ति ।

## — पति शब्दार्थ विवेचनम् —

एतच्छैवसिद्धान्तानुसार त्रय पदार्था निरूप्यन्ते । (१) पति = शिव, (२) पशु = जीव, (३) पाशश्च = मलमायादिचतुष्टयरूपो बन्धनरूपस्तृतीय पदार्थ ।

द्वादशोऽध्याय

# बौद्धानां मायावादः

'श्रीशङ्कराचार्यश्चास्ति प्रच्छन्नो बौद्ध" इति प्राचीनाचार्यचरणोक्तिरपि खलूपनिषदा प्रभाव सूचयति, यथा ब्रह्माद्वैतसिद्धान्तवादेऽद्वैतब्रह्मणो विवर्तभूत प्रभूतमिदमस्ति मायाकल्पित ससारापरपर्यायात्मक जगदिति। तथैव शून्याऽद्वैतवादे, विज्ञानाद्वैतवादे चाप्यन्यान्य ब्रह्माऽद्वयवादसिद्धान्तसाम्यदर्शनात् प्रक्रियासाम्यदर्शनाच्च सवदाच भेदस्याऽननुभवेनाऽभेद सिद्धयति।

तादृशमेव साम्यमाश्रित्य नव्यप्राचीना सर्वेऽपि शास्त्रवेत्तार शास्त्रिणा नूनमिदन्त्वावच्छिन्नविषयताक प्रमात्मक ज्ञान प्रकुर्वन्ति, यत् माध्यमिकाभिमत शून्यवादस्य, यत् माध्यमिकाभिमत शून्यवादस्य, योगाचाराभिमतविज्ञानाऽद्वयवादस्यैव चास्ति रूपान्तर खल्वौपनिषदो निर्विशेष, निष्कल निरञ्जनब्रह्माऽद्वैतसिद्धान्त।

आहोस्वित् प्रतियोग्यनुयोगिवैपरीत्यक्रमानुसारतापक्षमाश्रित्येदमपि वक्तु शक्यते यत् औपनिषन्निर्विशेष, निष्कल, ब्रह्माऽद्वैतसिद्धान्तस्यैवाऽपर नाम, रूप वा रूपान्तर वा चास्ति माध्यमिकाभिमतश्चतुष्कोटिविनिमुक्त शून्याऽद्वैतवादसिद्धान्त, तथा योगाचाराऽङ्गीकृतो विज्ञानाऽद्वैतवादश्च।

अत एतावता प्रबन्धेनेदमेवायाति यद् योगाचाराभिमत विज्ञानवादसमानोऽस्य वेदान्तसम्मत ब्रह्माऽद्वैतसिद्धान्त इत्यत्र नहि कापि विचिकित्सा कार्या। यत समानत्वस्य सादृश्यरूपत्वेन सादृश्यस्य भेदघटितत्वेनोभयत्र प्रागुक्तदिशा साम्यकथन सर्वथा साधुसङ्गच्छते।

अपि च ब्रह्माद्वैतवादेन योगाचाराभिमतविज्ञानाद्वैतवादस्य पौनपुन्येन सादृश्य समनभूयैव श्री यमुनाचार्य इत्थ खलु समब्रवीत् यथा अनादि अविद्यावशाच्च समारोपिता वास्तवग्राह्यग्राहक विकल्पोल्लेखिनी स्वयप्रकाशा सन्विदेव परमार्थ सती सैव आत्मेति सौगता प्रकटा प्रच्छन्नाश्च। सिद्धित्रये पृ० १६।

एवमेव निर्विशेषाऽद्वैतवादिनोऽपि वेदान्तिनोऽपि स्वप्रकाशचिदात्मने" इति न्यायेन ज्ञानस्वरूपायाऽऽत्मन परब्रह्मपरमेश्वरस्य स्वयप्रकाशतापक्ष स्वीकृतवन्त। यथा—

"भानुवत् स्वयम्प्रतिभातत्वात् सर्वजगदवभासकत्वेन श्रुतौ प्रसिद्धत्वात्"।

श्रुतिश्च—

'तमेव भान्तमनुभाति सर्वम्।
तस्य भासा सर्वमिद विभाति॥' वेदान्तसि० मु० पृ० ७५

# बौद्धानां मायावादः

अपि च निर्विशेषब्रह्माऽद्वैतवादिवेदान्तसिद्धान्तोपरि नागार्जुन, आर्यदेवप्रभृति-माध्यमिकमतस्य विज्ञानरूपात्मनो स्वयं प्रकाशतावादियोगाचारमतस्य चास्ति तत्र महान् प्रभावः । तेषाञ्चास्ति पारस्परिकमैकमत्यमित्यपि समर्थयन्ति भूयासो विद्वासो दार्शनिका इति । यथा दर्शनशास्त्रकोविदाः श्री टी०आर०वी० मूर्तिमहाभागाः, काशी हि०वि०वि० वाराणसेयाः खल्वित्थं ब्रुवन्ति यत् निर्विशेष, निर्गुण, ब्रह्माऽद्वैतवादेन सह योगाचार-मतस्य माध्यमिकमतस्य चास्ति सर्वथा ऐक्यमत्यमित्यनेनैतत् सम्भाव्य ते यत् श्री शङ्कराचार्यः स्वयं बौद्ध आसीत् । अयमेव पक्ष. समर्थितः डा० श्री वी०एन० सिंहमहो-दयेनापीति मन्तव्यम् । एवमन्येऽपि दार्शनिका दासगुप्तमहोदयप्रभृतयोऽपीममेव पक्ष समर्थितवन्तः इति ।

एव ब्रह्माद्वैतसिद्धान्तवादिना वेदान्तिना नये यदस्ति नित्यम्, विशुद्धम्, शुद्धम्, स्वयप्रकाशस्वरूपमात्माब्रह्म तदेव विज्ञानात्मवादियोगाचारमते विज्ञानस्वरूपमात्माऽपि स्वयप्रकाश. नित्यः शुद्धो बुद्ध इति विज्ञेयम् ।

तथा निष्कल, निर्गुण, ब्रह्माऽद्वैतवादिना नये दृश्यमानमिदं चराचरात्मक जगदस्ति तथा मायाविनिर्मित मायाकल्पितम् । तथैव निरीश्वरवादिना बौद्धाना नागार्जुन-आर्यदेव प्रभृतीना दार्शनिक विदुषा नयेऽपि जगदस्ति खल्वविद्याऽपरपर्यायभूतसंवृति परिकल्पितम्, अर्थात् अविद्या परिकल्पितमिति भाव. । यतः

"समन्ताद् वरणं संवृति, अज्ञानं हि संवृतिरुच्यते" ।

मध्यकवृत्ति., पृ० ४९२

अज्ञानाञ्चाऽविद्या इति, सा च महामोह । यथोक्तम्—

"अविज्जा ह्य महामोहो येनेद संसित चिरम्" ।

सुत्तनिपाते ३ महावग्गो, ३८ द्वयतानुपस्सनासुत्त, पृ० १५८

इत्यनेनापि प्रमाणभूतेन वाक्येन महामोहापरपर्यायभूतस्याऽज्ञानस्याऽविद्यारूपता सिद्ध्यति । इत्थञ्चाऽविद्यासंवृत्योः समानार्थकत्व सुस्पष्टमेव । अनेनाऽविद्यापरपर्याय-भूतत्वेन संवृतः कार्यत्वाज्जगतः कल्पनामात्रत्वमाभासस्वरूपत्वञ्च सिद्ध्यति । अतएव सर्वेऽपि भावाः क्षणिकाः कल्पिताश्च । यावत् संवृतिस्तावत् संसारः । संसारस्य परिचयः संवृत्यैव जायते । जगदिदमलातचक्रवत् चास्ति सर्वथा सदसद्भ्यामनिर्वचनीयम् । बौद्ध-मतेऽपि वेदान्तमतवदसारस्यास्य संसारस्य परमार्थिक दृष्ट्या नहि पारमार्थिकी सत्ता

सम्भूयते, यतः पारमार्थिकज्ञानेन जगतो बाधदर्शनात् व्यावहारिकसत्त्ववतोऽपि परमार्थतोऽसत्त्वमेव निश्चीयते । तथाचोक्तम्—

"सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।"

अपि च—

"संवृत्या जायते सर्वं शाश्वतं तेन नास्ति वै ।
सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥"

मध्यमक कारिका

अन्यच्चापि—

अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति सा नैकजलधौ इव ॥

वेदान्त सि० मु०

अपि च—

मृदादीनां कारणत्वं न चेदिष्टं घटं प्रति ।
अविद्यायाः कारणत्वं कथं सिद्ध्येत् प्रपञ्चं प्रति ॥"

तत्रैव

इत्थञ्च बौद्धानां मते जगदस्ति खल्वविद्यापरपर्यायभूतसंवृतिकल्पितम्, अतएव तत् सांवृतिकम् गीयते । तथैव वेदान्तिनां मतेऽपि जगदस्ति मायिकम्, आविद्यकञ्च, तथोक्तमुपरिष्टात् ।

अपि च ब्रह्माद्वैतवेदान्तिनां नये अज्ञानमविद्यामायाचेति शब्दानां समानार्थकत्वं स्वीकृतमुभयमतेऽत्र नास्ति लेशतोऽपि विवादस्तथैव शून्यतत्त्वात्मवादिनां माध्यमिकानां नये तथा विज्ञानात्मवादियोगाचार मतेऽपि संवृतिः, अज्ञानम् अविद्या माया, शब्दानामपि चास्ति पर्यायवाचकत्वमिति स्वयमेव भवद्भिर्विभावनीयम् । तथाचोक्तम्—

"समन्ताद् वरणं संवृतिः, अज्ञानं हि संवृतिरुच्यते" ।

मध्यमकवृत्ति —

अर्थात् सम्यक् वृणाति —आवृणोति—आच्छादयति, वस्तूनां स्वरूपं या सा संवृतिः, अविद्या, माया चेत्यादिशब्देभ्यो निरुच्यते । यथोक्तम्—

"जातिमरणसंसारं ये वजन्ति पुनप्पुनं ।
इत्थभावञ्ञथाभावं अविज्जा येव सा गति. ॥"

सुत्तनिपाते महावग्गे द्रष्टव्यम् ।

इत्थञ्च संवृतिशब्दः संवृणोतीति यौगिकव्युत्पत्त्यनुसारमवयवशक्तया यथाऽज्ञानरूपमर्थं बोधयति तथैव ऽविद्यारूपं तथा मायारूपमर्थमपि सूचयतीति नूनं विज्ञायताम् । सर्वस्यापि चराचरात्मकस्य जगतस्तदन्तर्गतानाञ्च पदार्थानां सर्वेषामेव जनिः=समुत्पत्तिः, उपर्युक्त मायाऽज्ञानादिपर्याय भूतानां संवृत्या जायते इति बौद्धाः समुद्गिरन्ति । तथाचोक्तम्—

"संवृत्या जायते सर्वंशाश्वतं तेन नास्ति वै ।
सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥"

लङ्कावतारसूत्रग्रन्थे-पृ० ४-५७ ।

अर्थात्—"समन्ताद् वरणं संवृतिः । अज्ञानमेव हि समन्तात् सर्वपदार्थतत्त्वाऽवच्छाद्नात् संवृतिरुच्यते" इत्युक्तं प्राक् ।

मध्यमककाा० वृ० २४।८ ।

यथा वेदान्तनयेन सर्वं चराचरात्मकं जगदिदं मायया=मायाऽपरपर्यायभूतया ऽविद्यया जायते । यन्न जायते न तद् विनश्यतीत्यपि तुल्यवित्तिवेद्यन्यायेन वेद्यम् । अर्थाद् यदादौ नास्ति तदन्तेऽपि नास्तीत्यादिना स्वानुभवबलेन श्रुतिबलेन च मिथ्याभूतो जड़वर्गो निषिध्यते । यथोक्तम्—

आदावन्ते च यन्नास्ति, वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥

(मा० क० २-६)

अपि च—

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥

(मा० का० २-३२)

कल्पनामाश्रित्यैव सर्वेपि वेदान्तदिशा बौद्धदर्शनदिशा च जागतिका व्यवहाराः प्रचलन्ति । मानवाः वाचा यद् व्यवहरन्ति तस्यापि तथाविधमेव स्वरूपं विज्ञेयम् । तथाचोक्तम्—

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥

(मा० का० २-१२)

अन्यच्चापि—

जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् ।
बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः ॥

अर्थात् तत स्वप्रकाशाचिदात्मके सच्चिदानन्देतिस्वरूपलक्षणलक्षिते परब्रह्मस्वरूपे आत्मनि सर्वतः प्राक्कालावच्छेदेन जीवः एव सुकल्पितो भवति । तदनन्तरकालावच्छेदेन च सकला अपि वहिर्भूता अभ्यन्तराश्च पदार्थाः परिकल्पिता भवन्ति । तत्राऽनुरूप दृष्टान्तमाह—यथा रज्जुस्वरूपाधारे सर्पः परिकल्पतो भवति । प्रागुक्तेन "स्वप्नमाये यथा दृष्टे" इत्यनेन प्रमाणभूतेन प्रभूतेन वाक्येन मायामयाना मायापरिकल्पिताना सर्वेषामेव जागतिकाना पदार्थानाम् आद्यन्तौ टितुभितौ बोध्यौ, अर्थात् निराकृतौ वेदितव्यौ ।

अपि च—

"मायोपमा सर्वधर्मा"

( ल० अ० सू० १३ )

"मायास्वप्नोपमं दृश्यं विज्ञप्त्या न विकल्पयेत् ।"

( लङ्कावतार सूत्र ११ )

"मायोपमं समाधिं च ।"

( तत्रैव १९ )

स्वप्नविभ्रममायाख्यम् ।

( तत्रैव ६६ )

एभिरपि पुष्टीकृतैः प्रबलैः प्रभावै . जगतो जागतिकानां सर्वेषां एव पदार्थानां सर्वेषामेव धर्माणां मायामयत्वम् मायापरिकल्पितत्वञ्च सूचित भवति वृत्तिमत्त्व धर्मत्व इति धर्मलक्षणकथनेन सर्वेषामेव जागतिकाना पदार्थानां सम्बन्धसम्बन्धान्तरेण वृत्तिमत्त्वस्य समनभूयमानत्वेन सर्वमपि जगतः, तदन्तर्गताश्च सर्वेऽपि घटापटादयो विषयाः पदार्थाश्च सर्वस्यापि ज्ञेयस्वरूपस्य चराचरात्मकस्य जगतः प्रपञ्चस्य च मायास्वप्नोपमत्वेनाऽऽद्यन्तविहीनत्वमेव विज्ञेयम् । एतेन तेषामुपर्युक्ताना सर्वेषामेव स्वास्तिस्वभूत्यत्वमपि बोध्यम् ।

अपि च—"गन्धर्वनगरस्वप्नमाला निर्माणसदृशाः,' ।

(लङ्काव० सू० १०-१४४)

"गन्धर्वनगरकारा मरीचिस्वप्नसन्निभा" ।

(मध्यमक का० १७।३३)

एवम्—"मायास्वप्ननिभा भावना गन्धर्वनगरोपमा" ।

(लङ्कावता० सू० १०।८७५)

नादृशं पदार्थविशेषं द्वारीकृत्य कालान्तरे जायमाना स्मृतिं जनयत्यनुभवः स एव द्वारभूतः पदार्थविशेषो भावना ।

भावनायाः सविषयकत्वेन जगद्विषयकत्वं तदन्तर्गतपदार्थविषयकत्वञ्च सुस्पष्टमेवेति बोध्यम् ।

यद्यपि ज्ञानस्यापि ज्ञेयतावच्छेदककुक्षिनिक्षिप्तत्वेनाऽऽलयविज्ञानस्वरूपविज्ञानस्य तथाविधत्वेन सुषुप्त्यवस्थायां स्वास्तित्वसम्पन्नस्याऽऽलयविज्ञानस्य सर्वथा निर्विषयिणीचितसन्ततिरूपत्वेन तत्र सुषुप्तौ आलयविज्ञानस्य विद्यमानत्वेऽपि विषयाणां तत्राननुभवात् इति तु निष्कर्षः । एतेन मायास्वरूपायाः भावनायाः मायास्वप्ननिभत्वेन गन्धर्वनगरोपमत्वं प्रतीयते इति तु विज्ञेयम् ।

वेदान्त नये आचार्यप्रवरः श्रीशङ्कुरोऽपि मायायाः एवम्भूतमेव स्वरूपं वर्णितवान्, निरूपितवानश्च यत्र तत्रोपनिषद्भाष्यादौ, यत् मायावशीभूतो जीव एव बाह्यान आभ्यन्तरिकानश्च भावान् परिकल्पयतीति विशेषतो माडूक्यकारिकाया प्रस्फोरितवान् । तथाचोक्तम्—

"कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स बुद्ध्यते भेदानिति वेदान्तनिश्चयः ।।"

(मां० का० २।१२)

कारिकाघटकीभूत "स्वमायया" इत्यस्य "अविद्यापरपर्यायभूतयाऽनादिमायया इत्यर्थो विज्ञेयः" । अनादि मायया इत्यस्य च भगवान श्री शङ्कराचार्य एवं भूतमर्थं विहीतवान् । तथाहि—

"उभयलक्षणेन तत्त्वाऽप्रतिबोधरूपेण बीजात्मनाऽन्यथाग्रहणलक्षणेन चाऽनादिकालप्रवृत्तेन मायालक्षणेन स्वप्नेन" ।—मां० का० शां भा० १।१६ ।

तथा चाऽस्याः श्रीशङ्कराचार्याभिमतमायातो बौद्धमायाया नास्ति कोऽपि विशेषतो भेदः । उभयत्रैव तस्या मायाया इदमेव स्वरूपं प्रागुक्तग्रन्थानुसारतः परिलक्षते यत् सास्ति संसारबीजकालिकाऽविद्यमानैव सत्तावतीव प्रतीयते। शून्याऽपि सा सारसुन्दरीव समनुभूयते । मोहनशक्तिस्वरूपेत्यतीवप्रबला । तदीयं तन्निष्ठं तत् प्राबल्यमेव सच्चिदानन्दं ब्रह्मापि मोहयति । यथोक्तं—"मायैषा तस्य देवस्य यया सम्मोहितः स्वयम्" ।

(मां० का० २।१९)

अर्थात् यया मायया ब्रह्मलक्षणलक्षितोऽपि परमात्मा सम्मोहित इव जायते तत्र का कथाऽन्येषाम् । इयञ्च मायाऽऽध्यात्मिकदृष्ट्याऽज्ञान निगद्यते, बाह्यदृष्ट्या च जगत्कारणीभूता सा चास्ति ब्रह्माश्रिता इत्यपि ज्ञेयम् । बौद्धमते आलयविज्ञानाश्रिता शून्यतत्त्वाश्रिता चेत्यपि विज्ञेयम् ।

तथैवेयमविद्यापरपर्यायभूता संवृत्तिशब्देनोच्यमाना बौद्धाभिमता माया (संवृत्ति) अपि श्री शङ्कराचार्याभिमतमायावदेव वस्तूनां स्वरूपमाच्छादयति प्रागुक्तदिशा सम्मोहयति, मोहान्धकारे च निपातयति, समये-समये च विडम्बयति निर्भत्सयति चेत्यपि विदाङ्कुर्वन्तु वेतारः। तथाचोक्तम्—

"समन्ताद् वरणं संवृतिः। अज्ञानं हि समन्तात् सर्वपदार्थतत्त्वाऽऽच्छादनात् संवृतिरुच्यते।" मध्यमिक का० वृ०

अपि च—"संवृतिः=अविद्या, मोहो विपर्यास इति पर्यायाः।"

बोधिचर्यावतारपञ्जिका

एवं बौद्धानां तथा ब्रह्माद्वैतसिद्धान्तवादिनां शाङ्करमतानुयायिनां च व्यवहार-परमार्थसत्येऽन्योन्यं सम्मते स्तः, इत्यत्रापि नास्ति कापि विप्रतिपत्तिरित्युभयत्र साम्यमेवाऽऽयाति सिद्ध्यति च केवलमस्ति शब्दानुपूर्वीभेदप्रयुक्तोभेदो न तु वास्तविक भेदोऽपि तत्रानुभूयते। अधिकन्तु द्वितीयसंस्करणे द्रष्टव्यं भविष्यति। योऽस्ति साम्यांशो सोऽपि तत्रैव प्रदर्शितो भविष्यति।